'प्रभुः' समर्थनाद श्रीकृष्णनु, विषयभोगासक्तराद लौकिकजनरंते. तन्न प्रियभार्यळाद सत्यभामेय प्रीतियन्नु पूरैसुवदक्के स्वर्गलोकद वृक्षवाद पारिजातवन्नु अपहारमाडिदनु. आ वृक्षद सलुवागि वज्रपाणियाद देवेंद्रनु रोषदिंदनु तोरदवनंतागि मरुद्गणसहितनागि शचीदेविय प्रेरणेयिंद श्रीकृष्णनन्नु कुरितु मोदलु ( युद्धक्के ) धाविसिदनु. आनंतर युद्धदल्लि पराजितनागि तन्न कार्यार्थवागि आ देवतिगळिंद सहवागि आ श्रीकृष्णनिगे तलेबागिसि ( क्षमापनेयन्नु ) बेडिकोंडनु. ॥ ५ ॥

**सुतं मृधे स्वं वपुषा ग्रसंतं दृष्ट्वा सुनाभोन्मथितं धरित्र्याः ॥ आमंत्रितस्तत्तनयाय शेषं दत्वा तदंतःपुरमाविवेश ॥ ६ ॥ तत्राहृतास्ता नरदेवकन्याः कुजेन दृष्ट्वा हरिमार्तबंधुं ॥ उत्थाय सद्यो जगृहुः प्रहर्षव्रीडानुरागप्रहितावलोकैः ॥ ७ ॥ आसां मुहूर्त एकस्मिन्नानागारेषु योषितां ॥ सविधिं जगृहे पाणीन्पुरुरूपः स्वमायया ॥ ८ ॥ तास्वपत्यान्यजनयदात्मतुल्यानि सर्वतः ॥ एकैकस्यां दश दश प्रकृतेर्विबुभूषया ॥ ९ ॥ ॥ ॥ ॥ ॥ ॥**

धरित्र्याः सुतं नरकं आमंत्रितस्तयेति शेषः ॥ ६ ॥ तत्रांतःपुरे कथं जगृहुरिति तत्राह व्रीडेति। प्रहर्षेण सहिताभ्यां व्रीडानुरागाभ्यां लज्जास्नेहाभ्यां प्रहितैः प्रेरितैरवलोकैर्गृहीतवत्य इत्यर्थः ग्रहणं च पतित्वेनेति शेषः ॥ ७ ॥ भगवता पुनः किं कृतमत्राह आसामिति। विधिना शास्त्रोक्तकर्मणा सहवर्ततइति एकस्य नानाविधगृहेषु स्त्रीणां करग्रहणं कथं घटत इत्यत उक्तं पुरुरूपइति। योगिवत् स्वसामर्थ्येन गृहीतबहुरूपेण घटतइत्यर्थः ॥ ८ ॥ "उत्तमैः सर्वतः साम्यं किंचित्साम्यमुदीरित-" मिति वचनात् सर्वत आत्मतुल्यत्वं किंचित्सादृश्यविवक्षयेति ज्ञातव्यं एकैकपुत्रत्वेन पुत्रवत्याशापूर्तिसंभवाद्दशत्वसंख्या किमभिप्रायेणेत्यत उक्तं प्रकृतेरिति। जडप्रकृतेर्विबुभूषया विविधभावेच्छया बहुत्वसंख्याविशिष्टत्वेच्छया ॥ ९ ॥

रणरंगदल्लि आकाशवन्नु शरीरदिंद ग्रासमाडतक्क ( अद्भुतशरीरवुळ्ळ एंब भाववु ) भूदेविय पुत्रनाद नरकासुरनन्नु श्रीकृष्णनु तन्न चक्रदिंद नाशमाडिदन्नु कंडु आ भूदेवियिंद प्रार्थितनागि पुनः आ नरकासुरन पुत्रनाद भगदत्तराजनिगे तानु तेगेदुकोंडु उळिद साम्राज्यवन्नु कोट्टु अवन अंतःपुरवन्नु प्रवेशमाडिदनु. ॥ ६ ॥ आ अंतःपुरदल्लिद्द, नरकासुरनिंद तरल्पट्ट अनेक देशद राजर कन्यागळु. आर्तबंधुनाद श्रीकृष्णनन्नु कंडु तत्कालक्के मेलक्के एद्दुनिंतु आ कृष्णनन्नु ह्यागे स्वीकरिसिदरेंदरे. अत्यंत हरुषनिंद सहितवाद लज्जेयिंदलू प्रेमदिंदलू प्रेरितवाद कडेगण्णोटदिंद पतियन्नागि अंगीकरिसिदरु. ॥ ७ ॥ आमेले श्रीकृष्णनिंद एनु माडल्पट्टितेंदरे हेळुवरु– ओंदे मुहूर्तदल्लि बेरे बेरे मनिगळल्लि इरतक्क आ हदिनारु सहस्र स्त्रीयर पाणिगळन्नु, शास्त्रोक्तविधिपूर्वकवागि ग्रहणमाडिदनु. ओंदे कालक्के अनेक मंदिरगळल्लि वासमाडिद बहुकन्यागळ पाणिग्रहणवु ओब्बनिगे ह्यागे संभविसितेंदरे. श्रीकृष्णनु तन्न महासामर्थ्यदिंद एक कालक्के अनेकरूपगळन्नु तेगेदुकोंडु एल्लर पाणिग्रहणवन्नु ओम्मेले माडिदनेंबदु संभविसुवदु. ॥ ८ ॥ श्रीकृष्णनु आ हेंडंदिरल्लि प्रतियोब्बरल्लि सर्वप्रकारदिंदलू तन्न समराद हत्तु हत्तु गंडुमक्कळन्नु उत्पादनमाडिदनु. ओब्बोब्ब मक्कळिंद स्त्रीयरिगे मक्कळाशेयु पूर्णियागुवदिल्लेंदु हत्तु हत्तु मक्कळेंदलवु. 'प्रकृतेर्विबुभूषया' तन्न अवतारकालदल्लि जडप्रकृतियु नानाविधवाद सुंदररूपवन्नु धरिसुवदरिंद बहुरूपळागलेंदु इच्छेयिंद तन्नंते सुंदररूपवुळ्ळ बहुपुत्ररन्नु सृष्टिमाडिदनु. आ मक्कळु सकलप्रकारदिंदलू श्रीकृष्णनिगे समरेंदु मूलश्लोकदल्लिद्दायू हागे अर्थ हेळगूडदु. सर्वोत्तम अद्वितीयनाद श्रीकृष्णनिगे समरादवरु यारू इल्लवादरिंद 'उत्तमैरिंद सकलप्रकारसाम्यवु याव ग्रंथदल्लि हेळुवदो. अल्लि स्वल्प साम्यवेंदु तिळियतक्कद्दु' आग्नेयपुराणवचनविद्दरिंद आ कृष्णपुत्ररु रूपमोदलादवुगळिंद. अवनंते होलिकेयुळ्ळवरागिद्दरेंदु तिळियतक्कद्दु. ॥ ९ ॥

**कालमागधशाल्वादीननीकैरुंधतःपुरं ॥ अजीघनत्स्वयं दिव्यं स्वपुंसां तेजआदिशन् ॥ १० ॥ शंबरं विविदं बाणं मुरं बल्वलमेव च ॥ अन्यांश्च दंतवक्त्रादीनवधीत्कांश्च घातयन् ॥ ११ ॥ अथ ते भ्रातृपुत्राणां पक्षयोः पतितान्नृपान् ॥ चचाल भूः कुरुक्षेत्रं येषामापततां बलैः ॥ १२ ॥ ॥ ॥ ॥ ॥ ॥ ॥**

यदर्थमवतीर्णं तत्प्रयोजनमाह कालेति। कालो गर्गनिर्मितः तेजः प्रभावं अनेन मुचुकुंदादिकृतं वधमप्यात्मनैव कृतं ज्ञापयति इत्यतोऽजीघनदित्ययं लौकिकः ॥ १० ॥ एतदेव किंचिद्विवेचयति शंबरमिति। शंबरविविदौ प्रद्युम्नबलभद्राभ्यामघातयत् मुरादीन्स्वयमेवावधीदिति विवेकः ॥ ११ ॥ अथ दंतवक्त्रवधानंतरं ते तव भ्रातृपुत्राणां कुरूणां पांडवानांच कुरुक्षेत्रं प्रत्यापततां येषां नृपाणां ॥ १२ ॥

श्रीकृष्णनु अवतारमाडिद प्रयोजनवन्नु हेळुवनु– श्रीकृष्णनु तन्न मथुरापुरवन्नु मुत्तिगे हाकिद, गर्गाचार्यनिंद हुट्टिद कालयवननु जरासंधनु, शाल्वराजनु इवरे मोदलादवरल्लि; शाल्वादिगळन्नु स्वतः कोंदनु. कालयवनजरासंधादिगळन्नु तन्न भक्तराद मुचकुंदनु भीमसेननु इवरे मोदलादवरल्लि तन्न सामर्थ्यवन्नु कोट्टु कोलिसिदनु. आद्दरिंद आ कालयवनजरासंधादिगळन्नू श्रीकृष्णने कोंदंते एंदु तिळिसुवदक्के 'अजीघनत्' एंब प्रयोगवु. ॥ १० ॥ इदे भागवते स्वल्प विस्तरिसुवनु– शंबरासुरनन्नु प्रद्युम्नन कडेयिंद कोलिसिदनु. विविदनेंब कपियन्नु बलरामन कडेयिंद कोलिसिदनु. मुरासुरमोदलादवरन्नू दंतवक्रमोदलादवरन्नू श्रीकृष्णनु स्वतः कोंदनु. ॥ ११ ॥ दंतवक्रमोदलादवर वधानंतर ( हे विदुरने. ) निन अण्णन मक्कळाद कुरुपांडवर पक्षपातिगळाद राजरन्नु कोलिसिदनु. याव आ राजरु कुरुक्षेत्रक्के तम्म सैन्यदोडने बरुवाग्ये अवर सैन्यदिंद भूमियु नडिगितु. ॥ १२ ॥

**सकर्णदुःशासनसौबलानां कुमंत्रपाकेन हतश्रियायुषं ॥ सुयोधनं सानुचरं शयानं भग्नोरुमुर्व्यां स ननंद पश्यन् ॥ १३ ॥ कियान् भुवोऽयं क्षपितोरुभारो यद्द्रोणभीष्मार्जुनभीमशल्यैः ॥ अष्टादशाक्षौहिणिको मदंशैरास्ते बलं दुर्विषहं यदूनां ॥ १४ ॥**

१. प्रकृतेर्जडप्रकृतेर्विबुभूषया विविधभवनेच्छया। मदवतारकाले जडप्रकृतेः नानाविधसुंदरतरशरीरोपादानत्वेन बहुभावो भवत्वितीच्छयेति यावत्। –( या. )

१. कालमागधादीन्। स्वपुंसां स्वभक्तानां मुचकुंदभीमादीनां तेजः सामर्थ्यविशेषं। आदिशन् सम्यक्प्रयच्छन्। तद्द्वारा अजीघनत्। –( या. ) २. अघातयदित्यनुवर्तते। –( या. ) ३. कालयवनः –( या. )

श्रीकृष्णस्य दुर्योधनपातेन भीमे प्रसादातिशयमाह सकर्णेति । स कृष्णः सुयोधनं भग्नोरुमुर्व्यां शयानं पश्यन्ननंद भीमायेतिशेष इत्यन्वयः । अनुचरैः दुःशासनादिभिः शृगालादिभिर्वा सहवर्तत इति सानुचरः तं हते नष्टे श्रीश्चायुश्च यस्य स तथा तं ॥ १३ ॥ कलियुगे सज्जनप्राचुर्यावस्थानाय दुष्टभारस्यैवानभीष्टत्वात्सोपि संहार्य इति यादवबलसंहरणोपायसंचिंतनप्रकारमाह कियानिति । मत्सन्निधानविशेषयुक्तत्वान्मदंशैर्द्रोणभीष्मार्जुनभीमशल्यैः क्षपितोऽष्टादशाक्षौहिणिको भुवो यद्योयं भारः स कियानल्पएव कुतः सुरासुरैर्दुर्विषहं यदूनां बलमास्त इति । यस्मात्तस्मादित्यन्वयः ॥ १४ ॥

दुर्योधननु बीळुवदरिंद भीमसेननमेले श्रीकृष्णन प्रीतियु विशेषवायितेंदु हेळुवनु– कर्ण दुःशासन शकुनि ई जनगळ दुरालोचनेयिंदले आयुष्यवू ऐश्वर्यवू नष्टवागिवुळ्ळ दुर्योधननु भीमन गदाप्रहारदिंद तोडेयु मुरिदु भूमियल्लि तंभदिरिंद सहितनागि अथवा नायिनरिगळिंद सहितनागि बिद्दद्दन्नु कंडु श्रीकृष्णनु भीमसेननमेले बहु संतुष्टनादनु. ॥ १३ ॥ दुष्टजनर भारवु ह्यागे श्रीहरिगे बेडागिरुवदो, अदरंतेय कलियुगदल्लि सज्जनरु बहळागिरुवदु. अवनिगे बेडाद संगतियाद्दरिंद मज्जनसमूहवन्नू नाशमाडतक्कद्देंदु यादवसैन्यनाशमाडुव उपायवन्नु चिंतिसिद संगतियन्नु हेळुवनु– नन्न विशेषसन्निधानवुळ्ळवराद्दरिंद नन्न अंशरनिसिगोंड द्रोण, भीष्म, अर्जुन, भीम, शल्य ई जनरिंद नाशमाडल्पट्ट हदिनेंटु अक्षौहिणी सैन्यद भूभारवु 'कियान्' एष्टु ? स्वल्प. यार्केंदरे देवदैत्यरिंदलसह नाशमाडलशक्यवाद यदुकुलवु वदुकिरुवदु. आद्दरिंद ई नाशवादद्दु बहळे स्वल्पु एंदु चिंतिसिदनु. ॥ १४ ॥

**मिथो यदैषां भविता विवादो माध्व्या मदाताम्रविलोचनानां ॥ नैषां वधोपाय इयानतोऽन्यो मय्युद्यतेंतर्दधते स्वयं स्म ॥१५॥ एवं संचिंत्य भगवान् स्वाराज्ये स्थाप्य धर्मजं ॥ नंदयामास सुहृदः साधूनां वर्त्म दर्शयन् ॥ १६ ॥ उत्तरायां धृतः पूरोर्वंशः साध्वभिमन्युना ॥ स वै द्रौण्यस्त्रसंछिन्नः पुनर्भगवता धृतः ॥१७॥ अयाजयद्धर्मसुतमश्वमेधैस्त्रिभिर्विभुः ॥ सोऽपि क्ष्मामनुजैरक्षन् रेमे कृष्णमनुव्रतः ॥ १८ ॥ ॥ ॥ ॥ ॥ ॥ ॥**

तत्रैषां यदूनां वधोपाय इयानेतावानेव यदा माध्व्याः वारुण्याः पानादुत्पन्नान्मदाद्भ्रष्टबुद्धीनां ताम्रलोचनानां रक्तनेत्राणां रजोगुणोपरक्तज्ञानानां वा यदूनां मिथो विवादो भविता तदा स एव वधोपायो भविष्यत्यतोऽन्यो नास्ति तदर्थं किं कर्तव्यमिति न चिंतनीयमित्याह मयीति । मय्युद्यतेसति स्वयं सर्वेंतर्दधते तिरोधानलक्षणं मरणं प्राप्नुवंति स्म स्मृतमित्यर्थः ॥ १५ ॥ स्वाराज्येस्वर्गसमराज्ये ॥ १६ ॥ यः पूरोर्वंशः अभिमन्युना साधूत्तरायां धृतःसन् द्रौण्यस्त्रेण संच्छिन्नः संच्छादितः पुनर्भगवता धृतो रक्षितोभूदित्यन्वयः ॥ १७॥ १८ ॥

१. पृथिवीलोकत्यागाय उद्युक्ते सति । –( या. )

अदरल्लि यादवर वधोपायवु इष्टे यावाग्ये अवरु वारुणी एंब मदिरा ( मद्य )वन्नु प्राशनमाडि बुद्धिभ्रंशदिंद कंणु केंपगे माडिकोंडु अथवा रजोगुणदिंद ज्ञानहीनरागि आ यादवरल्लि परस्पर विवाद वुंटागुवदो, आग्गे आ विवादवे अवर वधोपायवागुवदु. एरडनेदु यावदू कारणविल्लवु. आ विवादवु उंटागुवदक्के एनु माडबेकेंब योचनेये बेड. नानु ( श्रीकृष्णनु ) ई पृथिवीलोकत्यागमाडुवदक्के उद्योगमाडिदरे साकु. अवरु तम्मष्टक्के तावे मरणहोंदुवरु एंदु कंडदे. ॥ १५ ॥ श्रीकृष्णनु ई प्रकार योचिसि, स्वर्गसमवाद राज्यदल्लि धर्मराजनन्नु पट्टाभिषेकमाडि, सज्जनर मार्गवन्नु उपदेशमाडुत्त तन्न अंतःकरुणिजनरन्नु संतोषपडिसिदनु. ॥ १६ ॥ पुरुराजन वंशक्के बीजरूपवाद गर्भवु अभिमन्युविनिंद उत्तरादेवियल्लि सरियागि धरिसल्पट्टितु, अदु अश्वत्थामन ब्रह्मास्त्रदिंद नाशवागुव प्रसंगवु बरलु, पुनः श्रीकृष्णनिंद बदुकिसल्पट्टितु. ॥ १७ ॥ श्रीकृष्णनु धर्मराजनकडिंद बहु दाक्षिणावुळ्ळ उत्तमप्रकारवाद मूरु अश्वमेधयागगळन्नु माडिसिदनु. आ धर्मराजनादरू श्रीकृष्णन अनुमतियप्रकारवे तंमदिरिंद भूमियन्नु पालनेमाडिसुत्त आनंदपट्टनु. ॥ १८ ॥

**भगवानपि विश्वात्मा लोकवेदपथानुगः ॥ कामान् सिषेवे द्वार्वत्यामसक्तः सांख्यमास्थितः ॥ १९ ॥**

**अपीत्यनेन लोकसंग्रहणार्थं गृहस्थधर्मानुचरणं नतु स्वार्थं सत्यसंकल्पत्वादितिममर्थं सूचयति विषयसेवयापि तल्लेपो नास्तीत्यसक्तइति । तत्र हेतुगर्भविशेषणमाह सांख्यमिति । "केवलंभगवज्ज्ञानं सांख्यमित्यभिधीयत" इति वचनात् न सांख्यशास्त्रोक्तविधिः किंतु स्वरूपज्ञानमेव गृह्यते। "तद्ब्रह्म वेदाहंब्रह्मास्मीति" श्रुतेः १९**

सर्वांतर्यामियाद श्रीकृष्णनादरू लौकिकमार्गवन्नू वैदिकमार्गवन्नू अनुसरिसि द्वारकापुरदल्लि वासमाडि तन्न स्वरूपानंददल्लिये रमणमाडुत्त विषयासक्तनागदे सकलकामनागळन्नू ( विषयगळन्नु ) सेविसिदनु. इल्लिय 'अपि' एंबदरिंद श्रीकृष्णनु गृहस्थाश्रमनडिसुवदु सज्जनर शिक्षार्थवे होर्तु तन्न सलुवागि अल्ल; हागू अवनु सत्यसंकल्पनाद्दरिंद ई प्रकार नडिसुवनु एंब अर्थवन्नु सूचिसुवदु. 'असक्तः' एंब पददिंद श्रीकृष्णनु विषयगळन्नु सेविसिदाग्यू अदर लेपविल्लवेंब अर्थवन्नु हेळितु. इवनिगे आसंबंध लेपवु याके इल्लवेंबदक्के 'सांख्यमास्थितः' एंब हेतुगर्भविशेषणवन्नु कोट्टिरुवरु; इवनु जडपदार्थमिश्रविल्लदे केवल आनंदस्वरूपदल्लि क्रीडिसुववनाद्दरिंद इवनिगे याव संबंधलेपवू इल्लवेंब तात्पर्यवु, इदे अर्थवन्ने श्रुतियु हेळुवदु. ॥ १९ ॥

**स्निग्धस्मितावलोकेन वाचा पीयूषकल्पया ॥ चरित्रेणानवद्येन श्रीनिकेतेन चात्मना ॥ २० ॥
इमं लोकममुंश्चैव रमयन् सुतरां यदून् ॥ रेमे क्षणदया दत्तक्षणस्त्रीक्षणसौहृदः ॥ २१ ॥**

श्रियो निकेतनावासेनात्मना देहेन ॥२०॥ क्षणदया रात्र्या दत्तक्षणः दत्तावसरः। अनेन क्षणदाशब्दार्थो दर्शितः स्त्रीषु क्षणकालं सौहृदं यस्य सः स्त्रीक्षणसौहृद-स्त्रीक्षणो रुद्रः तस्य सौहृदं यस्मिन् स तथा वा । अनेन रुद्रगणचरणयोग्यसमये स्त्रीभिःसह रमणं कथमिति चोद्यं परिहृतं ॥ २१ ॥

१. इतरपदार्थोऽविषयकमित्यर्थः। तथा च जडामिश्रे परममंगले स्वस्वरूप एव रममाणो यत इत्यर्थः । –( या. )

मनोहरवाद मंदहासयुक्तवाद कडेगण्णोटदिंदलू अमृतसदृशवाद वाणियिंदलू निर्दोषवाद तन्न चरित्रेयिंदलू लक्ष्मीदेविय आवासक्के योग्यवाद तन्न शरीरदिंदलू श्रीकृष्णनु ई मनुष्यलोकवन्नू अत्यंतवागि ई यादवरन्नू आनंदबडिसुत्त, ' क्षणदया ' रात्रिकालदल्लि ' स्त्रीक्षणसौहृदः ' स्त्रीयरल्लि क्षणकाल सौहृद ( क्रीडा अंतःकरण ) उळ्ळवनागि ' दत्तक्षणः ' स्त्रीयर क्रीडेगे अवकाशकोट्टु क्रीडिसिदनु. ॥ २० ॥ २१ ॥

**तस्येत्थं रममाणस्य संवत्सरगणान्बहून् ॥ गृहमेधेषु योगेषु विरागः समजायत॥ २२ ॥**
**दैवाधीनेषु कामेषु दैवाधीनः स्वयं पुमान् ॥ को विश्रंभेत योगेन योगेश्वरमनुव्रतः ॥ २३ ॥**

गृहस्थधर्ममनुवर्तमानस्य हरेर्लोकशिक्षार्थं बाह्यविषयेषु वैराग्यप्रदर्शनमित्यभिप्रेत्याह तस्येति । " सर्वदाऽपिविरक्तःसन् भासयीतविरागवत् । कादाचित्कःकुतस्तस्य लोकशिक्षार्थमिष्यते" इति स्मृतेः। योगेषु विषयसाधनेषु विरागः समजायत वैराग्यमभूदिति दर्शयामास ॥ २२ ॥ नित्यविरक्तस्य कादाचित्कविरक्त्यनुपपत्तेः लोकशिक्षार्थमेव दर्शितमित्येतत्स्पष्टयति दैवेति । नित्यविरक्तेनापि भगवता विरागः प्रदर्शितइति यस्मात्तस्मात् स्वयं दैवाधीनो योगेन ध्यानलक्षणोपास्त्या योगेश्वरं कृष्णमनुव्रतः कः पुमान् दैवाधीनेषु कामेषु विषयेषु विश्रंभेत नित्याइति विश्वासं कुर्यात् न कोपीत्यर्थः अत्र दैवाधीनत्वं विषयाणामागमापायित्वेन नश्वरत्वे हेतुः२३

लोकशिक्षार्थवागि गृहस्थाश्रमधर्मवन्ननुसरिसिद श्रीकृष्णन होरगिन विषयवैराग्यप्रदर्शनवू लोकशिक्षार्थवे एंब अभिप्रायदिंद हेळुवरु–ई प्रकार बहुवरुषपर्यंतरवागि रमणमाडतक्क श्रीकृष्णनिगे गृहस्थाश्रमद विषयसाधनगळल्लि कदाचित्–वैराग्यवु उत्पन्नवायितु आदरे नित्यविरक्तनाद श्रीहरिगे कदाचित् विरक्तियु हुट्टितेंबदु एल्लि? कदाचित् हुट्टितेंदु हेळुवदु, दुष्टजनमोहनार्थवागियू सज्जनर शिक्षार्थवागियू इरुवदेंदु स्मृतियल्लि हेळिरुवदु. आ श्रीकृष्णनु बहुदिवस विषयासक्तनंतेयू आ मेले विरक्तनंतेयू तोरिसिदनु. ॥ २२ ॥ नित्यविरक्तनाद श्रीहरिगे कदाचित् विरक्तियु संभविसुवदिल्ल, लोकशिक्षार्थवागि अवनु तोरिसिदनु, एंबदु ई श्लोकदल्लि स्पष्टवागुवदु—नित्यविरक्तनाद श्रीकृष्णनिंदादरू वैराग्यवु तोरिसलपट्टितु. अंदमेले स्वतः दैवाधीननाद- ( पराधीननाद )वनागि ध्यानवेंब उपायदिंद योगेश्वरनाद आ श्रीकृष्णनन्नु अनुसरिसि अवन भक्तनाद याव पुरुषनु दैवाधीननाद ( भगवदिच्छेयिंदले बरहोगतक्क ) विषयगळल्लि इवु नित्यवागिरुववेंदु विश्वासमाड्यानु? आतन भक्तनादवनु यावनू माडलिक्किल्ल. विरक्तनागे आगुवनु. इल्लि ' दैवाधीनेषु ' एंबदु विषयगळु बरुत्त होगुत्त इरुववादकारण अवु नाशहोंदतक्कवेंदु हेळुवदक्के हेतुवागिरुवदु. ॥ २३ ॥

**पुर्यां कदाचित्क्रीडद्भिर्यदुभोजकुमारकैः ॥ कोपिता मुनयः शेपुर्भगवन्मतकोविदाः ॥ २४ ॥**
**ततः कतिपयैर्मासैर्वृष्णिभोजांधकादयः ॥ ययुः प्रभासं संहृष्टा रथैर्देवविमोहिताः ॥ २५ ॥**



इत्थं भगवच्चरितमुक्त्वा यदुकुलनाशनिमित्तमाह । पुर्यामिति । भगवन्मतकोविदाइत्यनेन मुनिशब्दार्थो दर्शितः ॥ २४ ॥ भविष्यद्यदुकुलनाशं वक्ष्यंस्तेषां प्रभासयात्रामाह ततइति । " एष्यंतुनिश्चितं यच्चदतीतत्वेन भण्यते ॥ चक्रवत्परिवृत्तेर्वा दुष्टानांमोहनायचेति " वचनाद्ययुरित्यादिप्रयोगो युज्यते सुखहेतुत्वान्मासैरिव संवत्सरैः ॥ २५ ॥

ई प्रकार परमात्मन चरित्रेयन्नु हेळि. यदुकुलवु नाशवागतक्क निमित्तवन्नु हेळुवनु–ओंदानोंदुकालदल्लि द्वारकापट्टणद उपवनदल्लि यदुकुलद कुमारकरू भोजकुलद कुमारकरू आडुत्तलिरुवाग्ये, केलवु मुनिगळन्नु कंडु आ हुडुगरु कुचेष्टेमाडलु, परमात्मन अभिप्रायवन्नु बल्लवराद आ मुनिगळु आ हुडुगरमेले शिट्टागि शापकोट्टरु. ॥ २४ ॥ मुंदे आगतक्क यदुकुलनाशवन्नु हेळुत्त आ यादवरु प्रभासक्षेत्रक्के होदसंगतियन्नु हेळुवनु- आ ब्राह्मणर शापानंतर केलवु वरुषगळादमेले यादवर मनेतनद अवांतरभेदउळ्ळ वृष्णि भोज अंधक एंब मनेतनदवरु यावत्तु यादवरु अदृष्टदिंद मोहितरागि संतोषदिंद रथारूढरागि प्रभासक्षेत्रवन्नु कुरितु होदरु– ई यादवरु प्रभासक्षेत्रक्के होदसंगतियु विदुरनिगू उद्धवनिगू संवादवु आगि होदनंतर जरिगितेंदु भारतदल्लि हेळिदे; हीगिरलु आ यादवरु मुंदे प्रभासक्षेत्रक्के होगतक्क संगतियन्नु अवरु प्रभासक्के होदरेंदु विदुरनिगे उद्धवनु ह्यागे हेळिदनेंदरे ' मुंदे आगुव निश्चयविद्द संगतियन्नु हिंदे आद संगतियंते हेळुव रूढियुंटु ' आदकारण उद्धवनिगे मुंदे आगतक्क आ एल्ल संगतिय निश्चय ज्ञानविद्दरिंद हिंदे आद संगतियंते हेळिदनु. अथवा हिंदिन द्वापरयुगदल्लि नडेद संगतियु गोत्तिद्दरिंद ईयादरू ह्यागे नडेयुवदेंब शास्त्रनिश्चयदिंद हेळिदनु. अथवा दुष्टजनर मोहपडिसुवदक्कादरू हेळिदनेंब तात्पर्यवु मत्त ई श्लोकदल्लि ' कतिचिन्मासैः ' एंत इद्दाग्यू ब्राह्मणर शापानंतर केलवु वरुषगळमेले प्रभासक्के होदरेंदु ह्यागे अर्थवेंदरे, सुखवागि कळेद कालवु ओंदु वरुषवादरू ओंदु तिंगळंते तोरुवदु, आद्दरिंद शापानंतर बहुवरुषगळमेले प्रभासक्के अवरु होदाग्यू ' मासैः ' एंब प्रयोगमाडिरुवरु. ॥ २५ ॥

**तत्र स्नात्वा पितॄन्देवान् ऋषींश्चैव तदंभसा ॥ तर्पयित्वाथ विप्रेभ्यो गावो बहुगुणा ददुः ॥ २६ ॥ हिरण्यं रजतं शय्यां वासांस्यजिनकंबलान् ॥ हयान् रथानिभान्कन्यां धरां वृत्तिकरीमपि ॥ २७ ॥ अन्नं चोरुरसं तेभ्यो दत्वा भगवदर्पणं ॥ गोविप्रार्थासवः शूराः प्रणेमुर्भुवि मूर्धभिः ॥ २८ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे विदुरोद्धवसंवादे तृतीयोऽध्यायः ॥ ३ ॥ ॥**

बहु गुणाः सौशील्यादिसर्वगुणोपेता गावो गाः ॥ २६ ॥ न केवलं गा एव ददुः किंतु परलोके यद्यत्स्वात्मनः पुण्यफलत्वेन प्राप्यं तत्तत् द्रव्यजातं ददुरित्याह हिरण्यमित्यादिना । हिनोति दुःखं राति सुखमिति हिरण्यं । रंजनं रागं चातनोति इति रजतं । अजितं नयतीत्यजिनं । कं सुखं बलयतीति कंबलः । हयत्यनेन गंतव्यमिति हयः पुंसि संज्ञायां घः प्रायेणेति घः हयगताविति धातुः । रथगताविति रथति चरति रतिं स्थापयतीति वा । इष्टं भासयंतीति इभाः भादीप्ताविति धातुः ।

१. मण्यत इत्यनेन रूढोपचारोयमिति सूचयति । –( या. )

कनं दीप्तिं यापयतीति कन्या । ध्रियतेऽनयेति धरा ॥ २७ ॥ उरुरसं षड्सोपेतं भगवदर्पणं ब्रह्मार्पणं गवार्थे विप्रार्थे असवो जीवनं येषां ते तथोक्ताः ॥ २८ ॥
इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे पदरत्नावल्यां टीकायां तृतीयोऽध्यायः ॥ ३ ॥

आनंतर एल्ल यादवरु आ प्रभासक्षेत्रदल्लि स्नानमाडि अल्लिय उदकदिंद देव-ऋषि-पितृगळ तर्पणवन्नु माडि. ब्राह्मणरिगे सभ्यतनवे मोदलाद उत्तमगुणगळुळ्ळ गोवुगळन्नु दान माडिदरु. ॥ २६ ॥ केवल गोवुगळने दान माडिदरेंदल्लवु; परलोकदल्लि पुण्यफलदिंद याव याव सौख्यगळिगे याव याव वस्तुगळु साधकवागुववो, अवुगळन्नेल्ल दानमाडिदरेंब अभिप्रायदिंद हेळुवरु- (मत्ते एनेनु दानमाडिदरेंदरे) बंगारवन्नू. बेळ्ळियन्नू. हासिकेयन्नू. वस्त्रगळन्नू. कृष्णाजिनगळन्नू. कंबळिगळन्नू. कुदुरेगळन्नू. रथगळन्नू, आनेगळन्नू. कन्यागळन्नू. फलदायक भूमियन्नू. ब्राह्मणरिगे कोट्टरु. ( इवुगळन्नु ब्राह्मणरिगे दानमाडुवदरिंद परलोकदल्लि एनु सौख्यवागुवेंदरे, याव याव वस्तुगळन्नु दानमाडिदरे एनेनु सुखवागुवदेंबदु आया वस्तुगळ हेसरिनिंदले गोत्तागुवदेंदु तिळिसुवदक्के व्याख्यानकाररु अवुगळ अर्थ हेळुवरु. )- ' हिरण्यं '= दुःखवन्नु कळेदु सुखवन्नु कोडुवदु. ' रजतं '= स्नेहवन्नुंटु माडुवदेंदु रजतवेंब हेसरु. ' शय्या ' शांतियन्नुंटु माडुवदु, ' अजनं '= सर्वत्र जयसपादिसिकोडुवदु. ' कंबलः '= हेच्चागि सुखवन्नु कोडुवदु. ' हयः '= बेकादल्लिगे हत्तिसिगोंडु होगुवदु, ' रथ ' तीव्र होगुवदु अथवा होगुवाग्ये आनंदकोडुवदु. ' इभः '= ' भा ' एंब धातुवु प्रकाशार्थवन्नु हेळुवदरिंद. बेकादन्नु प्रकाश माडिकोडुवदु. आद्दरिंद आनेगे इभ एन्नुवरु, ' कन्या ' तनगे प्रकाशवन्नु तंदु कोडुवदु, ' धरा '= अदरिंद प्राणधारणवागुवदु आदकारण भूमिगे धरा एन्नुवरु ॥ २७ ॥ ' गोविप्रार्थासवः ' गोवुगळ सलुवागियू ब्राह्मणर सलुवागियू बदुकिरतक्क आ शूरराद यादवरु, ( आ प्रभासक्षेत्रदल्लि हिंदे हेळिद पदार्थगळन्नु याव ब्राह्मणरिगे दानमाडिद्दरो ) आ ब्राह्मणरिगे षड्रसभरितवाद अन्नवन्नु, भगवदर्पण ( श्रीकृष्णार्पण ) पूर्वकवागि कोट्टु अवरिगे भूमियल्लि साष्टांगनमस्कारमाडिदरु. ॥ २८ ॥ ॥ हीगे मूलश्लोकगळिगू विजयध्वजव्याख्यानकू सरियागि योजनेमाडि अलंकरिसुव प्राकृतार्थरूपवाद ' सुखार्थबोधिनी ' एंब टिप्पणेयु तृतीयस्कंधदल्लि मूरने अध्यायवु मुगिदितु. ॥ ३ ॥ श्रीकृष्णार्पणमस्तु ॥

---

**उद्धव उवाच ॥ अथ ते तदनुज्ञाता भुक्त्वा पीत्वा च वारुणीं ॥ तया विभ्रंशितज्ञाना दुरुक्तैर्मर्म पस्पृशुः ॥ १ ॥ तेषां मैरेयदोषेण विषमीकृतचेतसां ॥ निम्लोचति रवावासीद्वेणूनामिवमर्दनं ॥ २ ॥ ॥ ॥ ॥ ॥**

अथ तदनुज्ञातास्तैर्विप्रैर्भोजनायानुज्ञाताः तया वारुण्या विभ्रंशितं स्वः पर इति ज्ञानं येषां ते तथोक्ताः पस्पृशुः ताडितवंतः स्पृशउपतापे ॥ १ ॥ मैरेयदोषेण मैरेयाख्यमद्यपानदोषेण रवावादित्ये निम्लोचति अस्तं गच्छतिसति आसीत् भविष्यति विमर्दनं विनाशलक्षणः कलहः अन्योन्यसंघर्षलक्षणः ॥ २ ॥

उद्धवनु हेळुवनु-' अथ ' आ ब्राह्मणर भोजनानंतर, आ ब्राह्मणरिंद तावु ( यादवरु ) भोजनक्के आज्ञेयन्नु पडेदु भोजनमाडि आ मेले वारुणीएंब ( वरुणलोकदल्लि उत्पन्नवागुव ) मद्यवन्नु प्राशनमाडि, आ मद्यप्राशनदिंद तन्नवरु यारु परकीयरु यारु एंब ज्ञानहीनरागि ( बुद्धिभ्रंशरागि ) ओब्बरिगोब्बरु केट्टमातुगळन्नाडुत्त मर्म- ( संदु )स्थानगळल्लि ताडनमाडलारंभिसिदरु. ' स्पृश् ' एंब धातुवु संतापार्थवन्नु हेळुवदरिंद ' पस्पृशुः ' एंदरे मुट्टिदरु एंदर्थवल्लवु, संतापवागुवंते मुट्टिदरु एंदरे होडेदरु एंदरु. ॥ १ ॥ आ मेले आ वारुणी एंब मद्यप्राशनदिंद विपरीतबुद्धियन्नु होंदिद यादवरिगे. सूर्यनु अस्तमयहोंदलु वनदल्लि बिदिरुगळु ओंदक्कोंदु ताागे ताकलाडुववो अदरंते नाशवागुवदक्के कारणवाद ओब्बरिगोब्बर होडदाटवेंब कलहवु प्रारंभवायितु. ॥ २ ॥

**भगवानात्ममायाया गतिं तामवलोक्य सः ॥ सरस्वतीमुपस्पृश्य वृक्षमूलमुपाविशत् ॥३॥ अहं चोक्तो भगवता प्रपन्नार्तिहरेण ह ॥ बदरीं त्वं प्रयाहीति स्वकुलं संजिहीर्षुणा ॥४॥ अथापि तदभिप्रेतं जानन्नहमरिंदम ॥ पृष्ठतोऽन्वगमं भर्तुः पादविश्लेषणाक्षमः ५**

तदा भगवता किमकारीति तत्राह भगवानिति । आत्ममायाया आत्मसामर्थ्यस्य गतिमवलोक्य पूर्वमेवेतिशेषः या तत्तद्योग्यतया तत्तद्वस्तुप्राकट्येन वर्तते तां । “ ज्ञात्वाकतिपयैर्वर्षैः पूर्वमेवजनार्दनः ॥ मौसलज्ञानसंतत्या उद्धवं बदरींनयदिति ” ॥ नयदनैषीत् ॥ ३ ॥ संक्षिप्योक्तं विवेचयति, अहंचेति । संजिहीर्षुणा संहर्तुकामेन हेत्यनेन । “ तज्ज्ञानंतत्रविस्तीर्य पुनर्द्वारवतीमगादिति ” वचनात् । स्वर्गारोहणात्पूर्वमपि भगवदाज्ञया बदरीगमनं स्पष्टयति ॥ ४ ॥ हे अरिंदम विदुर अथापि पूर्वंदिष्टोऽहं पुनः स्वर्गारोहणकाले भर्तुः पृष्ठतोऽन्वगममनुगमिष्य इत्यन्वयः चर्वितचर्वणवत् अनुगमनं निष्प्रयोजनं नेत्याह तदभिप्रेतमिति । तस्य कृष्णस्याभिप्रेतं ज्ञानोपदेशलक्षणहार्दं जानन् प्रयोजनांतरं चास्तीति ध्वनयति पादेति तदुक्तं । “पूर्वमेवोपदिष्टोपि हरिणाज्ञानमुद्धवः ॥ स्वर्गारोहणकालेतु पुनःपप्रच्छकेशव-” मित्यादि ॥ ५ ॥

आग्ये श्रीकृष्णनु एनु माडिदनेंदरे हेळुवनु–श्रीकृष्णनु ( लोकदल्लि ) आयावस्तुगळ योग्यतानुसारवागि अवुगळन्नु प्रकटमाडुवदक्के याव तन्न महिमे एंब सामर्थ्यवु इरुवदो. आ तन्न इच्छासामर्थ्यद मुंदे आगतक्कदन्नु पूर्वदल्लिये तिळिदु- अंदरे मुंदे आगतक्क यदुकुलनाशद स्थितियन्नु तानु स्वर्गारोहणक्के इप्पत्तारुवरुषगळ मोदलु विचारमाडि प्रभासक्षेत्रक्के होगि अल्लि ' सरस्वतीं उपस्पृश्य ' सरस्वतीनदियल्लि स्नानाचमनादिगळन्नु माडिकोंडुः वृक्षद केळगे कुतुगोंडनुः ' आग्ये-मुंदे आगतक्क मौसलयुद्धवन्नु तिळिदु. उद्धवनन्नु बदरिकाश्रमक्के कळुहिदनु ' एंदु वचनविरुवदु ॥ ३ ॥ संक्षेपदिंद हेळिद इदे संगतियन्नु विस्तरिसुवनु- श्रीकृष्णनु आ प्रभासक्षेत्रक्के होगुव समयदल्लि ' प्रपन्नार्तिहरेण ' बदरिकाश्रमदल्लिरतक्क भक्तरु

---

१. आत्ममायायाः यदुकुलनाशरूपसामर्थ्यस्य तां भाविनीं स्थितिं स्वर्गारोहणापेक्षया षड्विंशद्वत्सरेभ्यः पूर्वमेवावलोक्य प्रभासं गत्वा तत्र सरस्वतीं उपस्पृश्य स्नानाचमनादिकं कृत्वेत्यर्थः । वृक्षमूले उपाविशत् उपविष्टोऽभूत् । तत्र प्रभासगमनसमये प्रपन्नाः ये बदरीनिवासिनः तदार्तिहरेण भगवता त्वं बदरीं प्रयाहीति अहमुक्तश्च । हेत्यनेनास्योपदेशस्य यदुकुलनाशात्पूर्वकालीनत्वं प्रामाणिकमिति सूचयति । एतदग्रंथस्वारस्येनैवोद्धवस्य पूर्वोपदेशः प्रभासे सरस्वतीतीरे वृक्षमूलएव जातइति ज्ञायते । अथापि प्रयाहीति भगवतोक्तेपि तदाभिप्रेतं कृष्णस्याभिप्रेतं ज्ञानोपदेशाभिप्रायं जानन् अरिंदम कामादिवैरिदमन विदुर । -( या. )

तनगे शरणागतनागलु. अवर मनोव्यथेयन्नु बिडिसुवदक्कागियू तन्न यदुकुलवन्नु नाशमाडनक्किद्दिदरिंदलु. अवनिंद उद्धवने नीनु बदरिकाश्रमक्के होगु एंदु नानु हेळिसिगोळल्पट्टेनु. ई श्लोकदल्लिय ' ह ' एंबदरिंद उद्धवनु पूर्वदल्लि ओंदुसार प्रभासक्षेत्रदल्लि सरस्वतीतीरद वृक्षमूलदल्लि श्रीकृष्णनिंद ज्ञानसंपादिसिगोंडु बदरिकाश्रमक्के होगि अल्लिय जनगळिगे आ ज्ञानवन्नु विस्तारमाडि पुनः द्वारकापुरक्के बंदिद्दनु. एंदु गरुडपुराणद वचनविद्दरिंद श्रीकृष्णनु स्वर्गारोहणमाडद पूर्वदल्लिये अवन आज्ञेयिंद उद्धवनु बदरिकाश्रमक्के होदसंगतियु स्पष्टवादद्देंदु हेळुवदु. ॥ ४ ॥ ' हे अरिंदम ' काम-क्रोध-मोदलाद शत्रुगळन्नु निग्रहमाडिद विदुरने. ई प्रकार श्रीकृष्णनु पूर्वदल्लि ननगे ज्ञानोपदेशमाडिद्दाग्यू पुनः स्वर्गारोहणकालदल्लि आ श्रीकृष्णन बेन्हत्ति होगुवेनु. नवलिदन्न नवलिदंते हिंदे केळिदन्न पुनः केळुवदरिंद निष्प्रयोजनवष्टे एंदरे हागल्लवेंदु हेळुवनु— पुनः उपदेशमाडवेकेंब नंम स्वामीयाद श्रीकृष्णन मनोभिप्रायवन्नु नानु बल्लवनाद्दरिंदलु अवन पादगळन्नु बिट्टगलुव मनःसागदिद्दरिंदलू अवनु होगुवाग्ये अवनबेन्हिदे होगुवेनु. ( इदक्के प्रमाणवु )– ' श्रीहरियिंद पूर्वदल्लिये ज्ञानोपदेशहोंदिदाग्यू उद्धवनु पुनः स्वर्गारोहणकालदल्लि श्रीकृष्णनन्नु प्रश्नमाडिदनु. ' एंदु गरुडपुराणदल्लि हेळिरुवदु. ॥ ५ ॥

**अद्राक्षमेकमासीनं विचिन्वन्दयितं पतिं ॥ श्रीनिकेतं सरस्वत्यां कृतकेतमकेतनं ॥ ६ ॥ श्यामावदातं विरजं प्रशांतारुणलोचनं ॥**
**दोर्भिश्चतुर्भिर्विदितं पीतकौशांबरेण च ॥७॥ वाम ऊरावधिश्रित्य दक्षिणांघ्रिसरोरुहं ॥ अपाश्रितार्भकावस्थमकृशं त्यक्तपिप्पलं ॥८॥**

ननु अनुगमनवचनेन मौसलावस्थायामनवस्थानं प्रतीयते तथा च तद्दर्शनाभावेन तज्ज्ञानोपदेशासंभवः स्यादित्युक्तमयुक्तमिति तत्राह अद्राक्षमिति । विचिन्वन् मार्गमाणः दयितं प्रेष्ठं पतिं आत्मज्ञानदानेन पातारं सरस्वत्यां तत्तीरे कृतकेतं निवासं अकेतनमनन्याधारं ॥ ६ ॥ श्यामश्चायमवदातश्च निर्मलश्चेति श्यामावदातस्तं श्यामायां रात्र्यामप्यवदातमरुणं सूर्यवत्प्रकाशमानमित्यर्थः । " अवदातः सितेरुण " इत्यभिधानायोग्यताभेदात् सितोरुणश्चाधिकारिणां भेदात्प्रतीयत इति द्योतनाय तथोक्तमिति वा प्रशांते स्तिमिते अरुणे लोचने यस्य स तथा तं कृमिकोशेन रचितं कौशेयं तेनांबरेण च विदितं विशेषितं । " कौशेयंकृमिकोशोत्थ-"मित्यभिधानं छंदोभंगभयात् श्रेशितं अण्प्रत्ययाद्वा ॥७॥ अपाश्रितार्भकावस्थं अवतारदशायां याऽवस्था तामाश्रितं अकृशं पूर्णं त्यक्तपिप्पलं त्यक्तकर्मफलं योगाद्बोत्सृष्टाश्वत्थमूलं ॥८॥

ओळ्ळेदु, स्वर्गारोहणकालक्के श्रीकृष्णन बेन्हत्ति उद्धवनु होदनु एंब मातिनमेलिंद. श्रीकृष्णनु मौसलयुद्धकालदल्लि इद्दंते तोरुवदु, आदरे उद्धवनिगे कृष्णदर्शनविल्लद्दरिंद आ ज्ञानोपदेशवु असंभववेंदरे परिहरिसुवरु एंदरे हागल्ल , इवनिगे कृष्णदर्शनवागिरुवदु ) एंदु हेळुवरु— उद्धवनु ) नानु आ कृष्णनन्नु हुडुकुत्तिरलु ननगे ज्ञानवन्नु कोट्टु संरक्षणेमाडतक्क. मनोहरनाद, सरस्वतीतीरदल्लि वासमाडिद, तनगे एरडनेयवर आधारविल्लद अंदरे तनगे ताने आधारियाद. निर्मलवाद श्यामवर्णवुळ्ळ. अथवा ' श्यामावदातं ' रात्रियल्लि यादरु सूर्यनंते प्रकाशमाननाद, ' अवदात ' एंब शब्दवु शुभ्रवर्णदल्लियू केंपुवर्णदल्लियू प्रयोगिसल्पडुवदु. आदरे अधिकारिगळ भेददिंद अंदरे केलवरिगे स्वच्छवाद श्यामवर्णदंतेयू केलवरिगे उदितनागतक्क सूर्यनंतेयू

१. योगेन भगवच्छरीरस्याश्वत्थेन विश्लेषात् ।

तोरतक्क अतिशांतवाद केंपुकण्णुगळुळ्ळ, ' कौशेय ' वेंदरे ओंदुजातिय हुळगळ उदरदिंद उत्पन्नवाद दारवु, अदक्के रेशिम-एन्नुवरु— रेशिमय पीतांबरवन्नु धरिसिद, चतुर्भुजगळिंद युक्तनाद इल्लि ' पीतकौशेयांबरेण ' एंदु इरतक्कद्दु हागे प्रयोगमाडिदरे छंदोभंगवागुववेंदु ' पीतकौशांबरेण ' एंदु प्रयोगिसिरुवरु, अथवा ' अण् ' प्रत्ययदिंद हीगे रूपवु सिद्धवागुवदु, ' अपाश्रितार्भकावस्थं ' अवतारकालदल्लि याव रूपवन्नु धरिसिद्दनो आ रूपवुळ्ळ, पूर्णनाद, ' त्यक्तपिप्पलं ' कर्मफलवन्नु परित्यागमाडिद. अथवा अश्वत्थवृक्षदिंद भिन्नवाद शरीरवुळ्ळ श्रीकृष्णनु नन्नु एडगडीतोडेय मेले बलगालुहाकिकोंडु ( अश्वत्थवृक्षद केळगे ) ओब्बने कुळितदन्नु कंडेनु. ॥ ६ ॥ ७ ॥ ८ ॥

**तस्मिन्महाभागवतो द्वैपायनसुहृत्सखा ॥ लोकाननुचरन्सिद्ध आससाद यदृच्छया ॥ ९ ॥**
**तस्यानुरक्तस्य मुनेर्मुकुंदः प्रमोदभारानतकंधरस्य ॥ आशृण्वतो मामनुरागहाससमीक्षया विश्रमयन्नुवाच ॥ १० ॥**

तस्मिन्नवसरे द्वैपायनस्य वेदव्यासस्य सुहृत्सखा च भूम्यादिलोकाननुचरन् पर्यटन् सिद्धो ज्ञानी मैत्रेयः यदृच्छया भगवदिच्छयाऽससाद हरिमितिशेषः ॥९॥ हरेरनुग्रहातिशयसूचनाय मुनेराशृण्वतः सत इत्युक्तं । सम्यगनुरागहासाभ्यां स्नेहमंदस्मिताभ्यां सहितया समीचीनया कटाक्षेक्षया विश्रमयन् संसारक्लेशं परिहृत्यानंदं जनयन् । " सममेदेसमीचीन "इति यादवः ॥ १० ॥

आ समयदल्लि वेदव्यासर मित्रराद हागू अवर अंतःकरणपात्रराद ज्ञानिगळाद मैत्रेयरु भूमिमोदलाद सकललोकगळन्नु संचरिसुत्त श्रीहरीच्छेयिंदले श्रीकृष्णनन्नु कुरितु बंदरु. ॥ ९ ॥ ( श्रीकृष्णन दर्शनदिंद ) अतिसंतोषद भारदिंद तलेबागिसि नमस्कारमाडि अतिभक्तियिंद कुळित आ मैत्रेयमुनिगळु केळुवंते मोक्षदायकनाद श्रीकृष्णनु. उत्कृष्टवाद स्नेहदिंदलू मंदहासदिंदलु सहितवाद कृपाकटाक्षदिंद नंम संसारक्लेशवन्नु परिहारमाडि आनंदकोडुत्त नन्नन्नु कुरितु मातादिदनु. ' समीक्षया ' एंबल्लि ' सं ' एंब उपसर्गवु अभेदार्थदल्लियू उत्तम–एंब अर्थदल्लियू इरुवदरिंद उत्कृष्टार्थवन्नु हेळुवदु. ॥ १० ॥

**श्रीभगवानुवाच ॥ वेदाहमंतर्मनसीप्सितं ते ददामि यत्तद्दुरवापमन्यैः ॥ सत्रे पुरा विश्वसृजां मुनीना मत्सिद्धिकामेन वसो त्वयेष्टः ॥११॥**

किमित्याह हरिरिति तत्राह वेदेति । हे वसो मद्भक्तशिखामणे ते तव मनस्यंतर्हृदि यदीप्सितं तदहं वेद ततः किं तत्राह ददामीति । ते तुभ्यं त्वदभीष्टं ददामि दास्यामीतीच्छामि अन्यैः प्राप्यं चेत् किमनेनेत्यत उक्तं दुरवापमिति । अन्यैर्मद्भक्तिरहितैः त्वन्मुखारविंदान्निःसृतं श्रोतुं महता पुण्येन भाव्यं अनुष्ठि-

१. सत्रइति विश्वसृजां प्रजापतीनां मनूनां ज्ञानिनां देवानां च सत्रे यागविशेषे । पुरा पूर्वजन्मनि मत्सिद्धिकामेन मत्तो ज्ञानसिद्धिकामेन त्वयाहमिष्टः पूजितो यतः अतो ददामीति योज्यं । ननु देवानां प्रजापानां वा सत्रे मया त्वं कथमिष्ट इत्यत उक्तं वसो इति तेषां मध्ये वसतीति वसुः तस्य संबुद्धिर्वसो इति । तथा च तेषां यजमानभूतानां देवानां मध्ये त्वमपि बृहस्पतिरूपोदेवोऽभूः अतस्त्वयाहमिष्टः इति भावः ॥ १ ॥ –( या. )

तपुण्यकर्मणामेतत्कथं स्यादिति तत्राह सत्रइति । पुरा पूर्वजन्मनि नित्यं भगवदुपासनशीलत्वान्मुनिशब्दवाच्यानां देवानां सत्रे यज्ञविशेषे मतिसिद्धिकामेन प्रत्तो ज्ञानादिसिद्धिकामेन त्वयेष्टः पूजितः ॥ ११ ॥

श्रीकृष्णनु तन्नलु कुरितु एनेंदु हेळिदनेंदरे हेळुवनु–( श्रीकृष्णनु हेळुवनु ) ' हे वसो ' एन्नुवदरिंद ई उद्धवनु अष्टवसुगळल्लि इवनोब्बवसुवु एंदु भासवादीतु, हागल्ल; इवनु मूलरूपदिंद बृहस्पतियु. हागादरे वसो एंदु ह्यागे प्रयोगमाडिदरेंदरे–हिंदके ज्ञानिगळाददेवतिगळु यज्ञमाडुवाग्ये अवर समूहदल्लि ई बृहस्पतियु वासमाडिद्दरिंद इवनिगे ' वसो ' एंदु संबोधनमाडिरुवनु–एलै नन्नभक्तरल्लि श्रेष्ठनाद उद्धवने निंन मनसिनल्लि अपेक्षितवादद्दन्नु नानु बल्लेनु. मुंदेनु एंदरे निनगे आ निन्न अभीष्टेयन्नु कोडबेकेंदु इच्छिसुवेनु. आ मनोभीष्टेयु निंन भक्तर होर्तु एरडने जनरिंदलू दोरेयुवदादरे आ भक्तिमोदलादवुगळिंदेनु प्रयोजनवेंदरे हागल्ल; नन्न ( कृष्णन ) भक्तर होर्तु एरडने जनरिंद आ निंन मनोभीष्टेयु दोरेयलशक्यवु. ( आ नम्म मनोभीष्टस्वरूपवाद परतत्ववु ) निन्न ( श्रीकृष्णन ) मुखदिंद होरडुवदन्नु केळबेकादरे केळतक्कवरिगे बहळ पुण्यविरलेबेकु. अंथ पुण्यकर्मानुष्ठानमाडिद्द नमगे ह्यागे संभविसबेकु, एंदरे हेळुवनु–पूर्वजन्मदल्लि ( बृहस्पतिजन्मदल्लि ) निरंतर परमात्मन उपासनामाडतक्क स्वभाववुळ्ळवराद्दरिंद मुनिगळेंदेनिसिगोंड देवतिगळ ओंदु तरद यज्ञदल्लि नन्निंद ( श्रीकृष्णनिंद ) ज्ञानमोदलाद सिद्धियन्नु होंदबेकेंब अपेक्षेयुळ्ळवनागि नीनु नन्नन्नु पूजिसिरुवि ( अथवा नानु निन्निंद पूजितनागिरुवेनु. ) ॥ ११ ॥

**स एष साधो चरमो भवानामासादितस्ते मदनुग्रहोऽयं ॥ यन्मां नृलोकं रह उत्सृजंतं दिष्ट्या ददृश्वान्विशदानुवृत्त्या ॥ १२ ॥**

फलांतरं चाह स एष इति । हे साधो उद्धव ते त्वयासादितो यो भवः शरीरसंयोगलक्षणः स एष भवानां जन्मनां चरमो भवः अयं मदनुग्रहः । ईदृशो मम चित्तद्रवीकरणलक्षणः प्रसादविशेषः । कुतोवगतमेतदिति तत्राह यन्मामिति । भवान् रहः एकांते नृलोकमुत्सृजंतं मां विशदानुवृत्त्या निर्मलसेवया ददृश्वानिति यदत इत्यन्वयः । दिष्टचेत्यव्ययं भद्रमित्येतस्मिन्नर्थे वर्तते ॥ १२ ॥

नीनु हिंदिन जन्मदल्लि माडिद पूजेगे नन्न उपदेशवु ओंदे फलवेंदल्लवु मत्तू ओंदु फलउंटेंदु हेळुवनु—एलै परमसाधुवाद उद्धवने निनगे ई उद्धवनेंब शरीरवेनु बंदिरुवदल्ल इदे निनगे जन्मगळल्लि कडी जन्मवु, पुनः निनगे जन्मविल्लवु, इदु नंन अनुग्रहवु; अनुग्रहवेंदरे मनःसुकरगोणवेंब विशेष प्रसादवु. पुनः जन्मविल्लवेंबदु ह्यागे तिळिदितेंदरे–ई मनुष्यलोकवन्नु बिडबेकेंब इच्छेयुळ्ळ नन्नन्नु एकांतदल्लि नीनु कंडियल, इदु निन्न बहु जन्मद निर्मलवाद तपःसिनिंदले इदु निनगे बहळ मंगळवु. ( इदरिंदले निनगे मुंदे जन्मविल्लवेंदु निश्चयवागुवदु. ) ' दिष्टया ' एंब अव्ययवु मंगळवेंब अर्थवन्नु हेळुवदु. ॥ १२ ॥

**पुरा मया प्रोक्तमजाय नाभ्ये पद्मे निषण्णाय ममादिसर्गे ॥ ज्ञानं परं मन्महिमावभासं यत्सूरयो भागवतं वदंति ॥ १३ ॥**

वक्तव्यार्थे श्रद्धातिशयजननार्थं ज्ञानं स्तौति पुरेति । तज्ज्ञानं तुभ्यमुपदेक्ष्यामि इत्यध्याहृत्यान्वयः कर्तव्यः मया पुरादिसृष्टौमम नाभ्ये नाभेरुत्पन्ने निषण्णायाजाय



प्रोक्तं यज्ज्ञानं यत्परमुत्तमं मन्महिम्नोऽवभासः प्रकाशो यस्मात्तत् सूरयो यच्च भागवतं भगवदेकविषयत्वाद्वदंति ॥ १३ ॥

तानु हेळतक्क अर्थदल्लि अतिशय विश्वासवु हुट्टबेकेंदु आ हेळतक्क ज्ञानवु एंथादेंदरे प्रशंसनेमाडुवनु– एल्लक्कू मोदलु सृष्टियल्लि नन्न नाभियिंद उत्पन्नवाद कमलदल्लि कुळित, चतुर्मुखब्रह्मदेवनिगे नानु याव ज्ञानवन्नु उपदेशमाडिदेनो, अदु नन्न महिमेयन्नु प्रकाशमाडतक्कद्दाद्दरिंद ज्ञानिगळु अदक्के केवल परमात्मन संबंधवाद्दरिंद भागवतवेंदेन्नुवरु, आ भागवतज्ञानवन्ने निनगे उपदेशमाडुवेनु. ॥ १३ ॥

**इत्यादरोक्तः परमस्य पुंसः प्रतीक्षणानुग्रहभाजनोऽहं ॥ स्नेहोत्थरोमा स्खलिताक्षरस्तं मुंचन् शुचः प्रांजलिराबभाषे ॥ १४ ॥**

इतिशब्देन ज्ञानस्य विशेषणांतरविशिष्टत्वं सूचयति। " अमत्रंभाजनंपात्र-" मित्यभिधानं । स्नेहोत्थरोमा भक्त्या समुत्पन्नरोमांचः आबभाष इति परोक्षव्यपदेशः सर्वेंद्रियाणां भगवदेकविषयत्वेन बाह्यप्रवृत्तिशून्यतामपेक्षेतिज्ञायते। " सुप्तोहं विललाप किले-" त्यादौ दृष्टत्वात्॥ १४ ॥

( उद्धवनु हेळुवनु– ) परमपुरुषनाद आ श्रीकृष्णन कटाक्षप्रेक्षणेवेंब अनुग्रहके पात्रनाद नानु, इन्नू अनेक माहात्म्ययुळ्ळ आ ज्ञानवन्नु निनगे हेळुवेनेंदु आ श्रीकृष्णनिंद परमादरपूर्वकवागि हेळिसिगोळ्ळल्पट्टु नन्न मैमेले रोमांचगळुब्बि कण्णिरु सुरिसुत्त गद्गदवाद वाणियिंद कैजोडिसिगोंडु मैमेले एच्चरिके इल्लदे माताडिदेनु. इल्लि ' आबभाषे ' एंब पारोक्ष्यनिर्देशदिंद आ मात आडुवाग्ये सर्वेंद्रियगळू केवल परमात्मन अधीनदल्लिरुववेंदु तिळिदु होरगिन दृष्टियिल्लदे माताडिदनेंदु तोरुवदु. मलिगिदाग्ये मैमेले एच्चरिके इल्लदे ह्यागे बडबडिसुवरो, हागे माताडिदेनेंदु उद्धवनु हेळिदनु. ॥ १४ ॥

**कोऽन्वीश ते पादसरोजभाजां सुदुर्लभोऽर्थेषु चतुर्ष्वपीह ॥ तथापि नाहं प्रवृणोमि भूमन् भवत्पदांभोजनिषेवणोत्सुकः ॥ १५ ॥**

भगवदपरोक्षज्ञानसाधनपादारविंदभक्तिमंतरेण नान्यदाकांक्ष इत्याह कोन्विति। भवत्पदांभोजनिषेवणोत्सुक इत्यनेन एतावंतं कालं प्रवृणोमि उत्तरत्र कथमिति न जान इत्यपव्याख्यानं प्रत्युक्तं अध्याहारस्याप्रामाणिकत्वात् उत्सुकत्वस्य सदातनत्वप्रतीतेश्च ॥ १५॥

परमात्मन अपरोक्षज्ञानके साधकवाद अवन पादारविंदद भक्तिय होर्तु मत्तोंदु एनु बेडुवदिल्लवेंदु हेळुवनु– ' हे ईश ' स्वामियाद श्रीकृष्णने श्रवणमननादिगळिंद निन्न पादकमलवन्नु भजनमाडतक्क भक्तरिगे धर्मार्थकाममोक्ष ई चतुर्विधपुरुषार्थगळल्लि यावदु अत्यंत दुर्लभवादद्दु? यावदू दुर्लभवल्लवु. आदाग्यू हे पूर्णनाद श्रीकृष्णने नानु श्रवणमननादिगळिंद निन्न पादकमलवन्ने सेवेमाडबेकेंदु उत्साह उळ्ळवनाद्दरिंद आ चतुर्विधपुरुषार्थगळल्लि यावदू बेडुवदिल्लवु. ' भवत्पदांभोजनिषेवणोत्सुकः ' एंबदरिंद इदुवरेगू निन्न पादकमलवन्नु सेविसबेकेंदु उत्साहवुळ्ळवनागि-

१. प्रतीक्षणं सम्यक् निरीक्षणं तल्लक्षणो यो अनुग्रहः तद्भाजनः तत्पात्रभूतः । –( या. )

रुवेनु; मुंदे ब्बागागुवदो नानरियनु. एंदु परकीयरु व्याख्यानमाडिद्दु खंडनमाडल्पट्टितु. याकेंदरे संबंधविल्लद हेच्चिन मातुगळन्नद्ध्याहारमाडुवदु अप्रमाणिकवागिरुवदु; हागू औत्सुक्यवु सर्वदाइरुवेदेंदु तोरुवदरिंदलू परकीयर मातु अयुक्तवु. ॥ १५ ॥

**कर्माण्यनीहस्य भवोभवस्य ते दुर्गाश्रयोथारिभयात्पलायनं ॥ कालात्मनो यत्प्रमदायुताश्रयः स्वात्मन्रतेः खिद्यति धीर्विदामपि ॥१६॥**

**ज्ञानांतरंगगुणोपसंहारलक्षणोपासनामंतरेण भक्तेराकांक्षितत्वे किंकारणमित्याशंक्य हरेर्देवदत्तकर्मवत्कर्मप्रतीतेर्गुणानां दुरवबोधत्वं निमित्तमित्याह कर्माणीति । अनीहत्वादिमतस्तव कर्मादिदर्शनं लोकविरुद्धमतो जन्माद्यभावविदामस्माकमपि बुद्धिः खिद्यत इति । अभवस्य जन्मरहितस्य भवो जन्म नित्यमुक्तस्य बंधो वा अदुर्गस्य नित्यनिकटवर्तिनो द्वारकादिदुर्गाश्रयः अतएव जरासंधाद्यरिभयात्पलायनं गोमंतमितिशेषः । कलकामधेनावितिधातोः कालात्मनः सर्वसंहर्तुर्वा स्वात्मन्रतेः स्वात्मनि रतिः रमणं यस्य स तथा तस्य प्रमदानां अयुताश्रयइति यत्तत्सर्वं विरुद्धमत इति । अपिना लोकविडंबनमिदं नतु तत्त्वमिति सूचयति ॥ १६ ॥**

अपरोक्षज्ञानसंपादनेगे, परमात्मनु ज्ञानानंदादिगुणपूर्णनेंदु उपासनेय होर्तु भक्तियंबदु बेकेंदु एनु कारणवु. एंदु संदेहबंदरे श्रीहरियु माडतक्क केलसगळु यःकश्चित् मनुष्यनु माडुव केलसगळंते तोरुववु. अदरिंद अवन गुणगळु स्पष्टवागि तोरुवदिल्लवादरिंद भक्तियेंबदु मुख्यसाधकवेंदु हेळुवनु. ( हे श्रीहरिये ) यावदू फलापेक्षेयिल्लद नीनु स्नानसंध्यादिकर्मगळन्नु माडुवदू जन्मरहितनादवनु अवतरिसुवदू नित्यमुक्तनादवनु बद्धनंते तोरुवदू. निरंतर सर्वर समीपदल्लिरतक्कवनु अशक्यवाद द्वारकापुरद किल्लेयोळगे शेरिरुवदू जरासंधने मोदलाद शत्रुगळ भयदिंद गोमंतपर्वतक्के ओडिहोगोणवू ' कालात्मनः ' अपेक्षितवन्नु कोडतक्कवगे अथवा सर्वसंहार माडतक्कवनु. हागू ' स्वात्मन्रतेः ' तन्नल्लि तानु आनंदबडतक्कवनु ' प्रमदायुताश्रयः ' हदिनारुसाविर स्त्रीयर आश्रयमाडुवदू इदु यावत्तू विरुद्धवादद्दु. ई यावत्तू निंन चरित्रेयु निन्न महात्म्येयन्नु बल्लंथ नमगेसह बुद्धिगे मोहतंदुकोडुवदु. ई श्लोकदल्लिय ' अपि ' एंबदरिंद ई मेले हेळिद यावत्तू लोकविडंबनवू वास्तविकवल्लवेंदु हेळुवदु. ॥ १६ ॥

**मंत्रेषु मां वा उपहूय यत्त्वमकुंठिताखंडसदात्मबोधः ॥ पृच्छेः प्रभो मुग्धइवाप्रमत्तस्तन्नो मनो मोहयतीव देव ॥ १७ ॥**

**इदमपि ज्ञानदुर्बलानां बुद्धिव्यामोहकरमित्याह मंत्रेष्विति । वैशब्दादक्रूरादिकं ग्राहयति अकुंठितः अविमिश्रितः अखंडः पूर्णः सन्निर्दोषः आत्मबोधः स्वरूपज्ञानं यस्य स तथा ॥ १७ ॥**

ई मुंदे हेळुव संगितियादरू स्वल्पु ज्ञानवुळ्ळ जनरिगे बुद्धिमोहवन्नुंटुमाडुवदेंब अभिप्रायदिंद हेळुवनु- ' हे देव ' क्रीडादिगुणसंपन्ननाद श्रीकृष्णने नीनु ' अकुंठिताखंडसदात्मबोधः ' प्रकृतिसंबंधमिश्रविल्लद पूर्णवाद निर्दुष्टवाद स्वरूपज्ञानवुळ्ळवनिरलु. तथा सर्वकार्यगळल्लि एच्चत्तु इरलु, राजकीयव्यवहारद विचारप्रसंगगळल्लि नन्नन्नू अक्रूरने मोदलादवरन्नु करेदु, एनू तिळियदवनंते नम्रनागि ( ई विषयक्के ब्बागे माडबेकेंदु ) नम्मन्नु प्रश्नमाडुत्तिद्दियल्ल ? अदु नम्म मनःसन्नु मोहबडिसुवंते इरुवदु. ॥ १७ ॥

**ज्ञानं परं स्वात्मरहःप्रकाशं प्रोवाच कस्मै भगवान्समग्रं ॥ अपि क्षमं नो ग्रहणाय भर्तर्वेदांजसा यद्वृजिनं तरेम ॥ १८ ॥**

**ज्ञानाख्याव्याकृताकाशस्तत्तद्योग्यताभेदं जानन्नात्मयोग्यमेवोपदिशति भगवान् तथापि स्वचापल्याद्विज्ञापयामीत्याह। ज्ञानमिति । स्वात्मरहः प्रकाशो यस्मात्तत्तथा तत् कस्मै ब्रह्मणे नोऽस्माकं तत्समग्रमपि ग्रहणाय क्षममपि किं नोऽक्षमं योग्यताभेदात्तर्हि कीदृशमुपदिशामीति तत्राह वेदेति । भगवान्यदस्याधिकारिणो योग्यं वेद वयं च यद्येन ज्ञानेनांजसा वृजिनं संसारदुःखं तरेम तदुपदिशेत्यन्वयः । अनेन ब्रह्माद्युत्तमाधिकार्युपदिष्टज्ञानैकदेशं संसारदुःखनिर्मूलनमस्मद्योग्यमुपदिशेत्युक्तं भवति १८**

अव्याकृताकाशदंते सर्वत्र ज्ञानस्वरूपदिंद व्यापनाद परमात्मनु अवरवर योग्यतेयन्नु बल्लवनागि अवरवर तक्कष्टु उपदेशमाडुवनु आदाग्यू तन्न बुद्धिचापल्यदिंद उद्धवनु श्रीकृष्णनन्नु विज्ञापनेमाडिकोळ्ळुवनु — हिंदिके पद्मनाभियाद परमात्मनु तन्न माहिमेयन्नु प्रकाशमाडतक्क श्रेष्ठवाद ज्ञानदन्नु सांगोपांगवागि ब्रह्मदेवनिगे उपदेशमाडिदनु; आदरे आ ब्रह्मदेवर योग्यतेगू नम्म योग्यतेगू भेदविद्दरिंद आ यावत्तू रहस्यवु नमगे तिळकोळ्ळुवदक्के योग्यवो अल्लवो ? हागादरे एंथाद्दन्नु निनगे हेळलि ? एंदरे, परमपूज्यराद तावु ई ( नम्मगळिगे ) अधिकारिगळिगे यावदु योग्यवादद्देंदु तिळियोणागिदेयो. हागू नावु याव ज्ञानदिंद चन्नागि संसारदुःखवन्नु दाटेवो अदन्नु उपदेशमाडबेकु. इदरिंद ब्रह्मनेमोदलाद उत्तमाधिकारिगळिगे उपदेशमाडिद ज्ञानदोळगिन स्वल्पुभागवु संसारदुःखवन्नु निर्मूलमाडुवदुः अष्टे नमगे योग्यवादद्दन्नु उपदेशमाडु एंदु हेळिदंतायितु. ॥ १८ ॥

**इत्यावेदितहार्दाय मह्यं स भगवान्परः ॥ आदिदेशारविंदाक्ष आत्मनः परमां स्थितिं ॥ १९ ॥**
**स एवमाराधितपादतीर्थादधीततत्वात्मविबोधमार्गः ॥ प्रणम्य पादौ परिवृत्य देवमिहागतोऽहं विरहातुरात्मा ॥ २० ॥**

**एतदेवोपदिष्टं हरिणा नान्यदिति वक्ति इतीति । हार्दं हृद्गतं परमां स्थितिं ब्रह्मादिजीवराशेरुत्कृष्टतामन्येषां अपकृष्टतामन्योन्यं तारतम्यं वा ज्ञेयं ॥ १९ ॥ एवमित्येतदधीतेत्यनेनान्वेतव्यं आराधितं पादतीर्थं पादोदकं यस्य स तथा तस्मात् श्रीकृष्णादेवमुक्तप्रकारेणाधीतोधिगतस्तत्त्वात्मनः अनारोपिताद्वितीयज्ञानानंदात्मनो हरेः विबोधमार्गो विशिष्टज्ञानमार्गो येन स तथा परिवृत्य प्रदक्षिणीकृत्य विरहेणातुरः क्लिष्ट आत्मा यस्य स तथा ॥ २० ॥**

ई श्लोकदल्लि हेळुवदन्ने श्रीकृष्णनु उपदेशमाडिदनु मत्तोंदल्लवेंदु हेळुवनु- ई प्रकार मनोऽभिप्रायवन्नु तिळिसिद ननगे. आ श्रेष्ठनाद श्रीकृष्णनु कमलदंते प्रसन्ननेत्रवुळ्ळवनागि तानु ( श्रीकृष्णनु ) सर्वोत्तमनेंतलू ब्रह्मादिजीवराशिगळु उत्तमवादद्दवेंतलू मिक्कादवु कडिमेयवेंतलू ओंदक्कोंदर तारतम्यवन्नु उपदेशमाडिदनु. ॥ १९ ॥ याव श्रीकृष्णन पादोदकवन्नु सर्वरू सेविसुवरो आ श्रीकृष्णनिंद ई मेले हेळिदंते यथार्थवाद असदृशवाद ज्ञानानंदस्वरूपियाद श्रीहरिय विशिष्ट ( यावत्तू अथवा श्रेष्ठवाद ) ज्ञानमार्गवन्नु तिळिदुकोंडु अवनिगे प्रदक्षणेयन्नु माडि, पादगळिगे नमस्करिसि, अवन अगलुविकेयिंद मनःसिन कळवळिकेयुळ्ळवनागि नानु इल्लिगे बंदिरुवेनु. ॥ २० ॥

१. स्वमहिमावभासकं यत् । –( या. )

समएव ॥ " उत्तमैरधिकत्वंवा साम्यंवापिजयोपिवा । उच्यतेपितुनीचानां मोहार्थंवाप्युपेक्षये-" त्यादेर्दुष्टजनमोहार्थं तत्काले स्वज्ञानोपदेष्टुः पुरुषाधिक्यज्ञापनार्थं वा श्रीकृष्णेन स्वसाम्यमुद्धवस्योक्तं ननु तत्त्वार्थमिति ज्ञातव्यं यतो मज्ज्ञानोपदेष्टपुरुषाधिकोयमतः पुनर्मद्दलोकं जनं ज्ञानादिकं ग्राहयन्निह निष्ठतु इत्यचिंतयदित्यन्वयः । एतेन कारणेनोद्धवोवशिष्ट इति प्रश्नपरिहारः ॥३१॥ उद्धवेनाप्येतदाज्ञा कृतेत्याह एवमिति । शब्दो वेदो योनिर्ज्ञप्तिकारणं यस्य स तथा तेन ईजे पूजयामास ३२

उद्धवनु योग्यनेंबदन्ने निर्धारमाडुवनु– याव उद्धवन भक्तिमोदलाद सद्गुणगळिंद अवन यजमाननाद नानुमह अवन अधीननागिरुवेनु. आ उद्धवनु ननगिंत स्वल्पादरू कडिमे इल्ल नन्न समने इरुवनु. आदकारण नन्न ज्ञानोपदेशमाडतक्क पुरुषरल्लि. इवनु श्रेष्ठनादरिंद इल्लु मुंदादरू पुनः नन्नंते ज्ञानोपदेशमाडुत्त ई लोकदल्लिराले. एंदु श्रीकृष्णनु योचिसिदनु. ई कारणदिंदले श्रीकृष्णनु उद्धवनन्नु उळिसिदनु. आदरे ई श्लोकदल्लि ' नोद्धवोऽण्वपिमन्न्यूनः ' एंबदरिंद उद्धवनु श्रीकृष्णन समनेंदु तोरुवदु. मत्तु ' प्रभुः ' एन्नुवदरिंद श्रीकृष्णनु उद्धवन स्वामियु ( उपास्यदेवतियु ) एंदु हेळल्पट्टितु. हीगे श्रीकृष्णनिगू उद्धवनिगू स्वामिभृत्यभावविरुवदु. ई स्वामिभृत्यभावदल्लि इब्बरिगू साम्यविरुवदिल्लवेंदु सर्वरिगू तिळिद संगतिये. आदरू मूलश्लोकदल्लि उद्धवनिगे श्रीकृष्णन साम्यवु याके हेळिरुवदेंदरे इदक्के आचार्यरु ब्रह्मतर्कवेंब ग्रंथद सम्मतियन्नु तोरिसिरुवरु:" याव ग्रंथदल्लि अथवा याव प्रकरणदल्लि उत्तमरिगिंत आधिक्यवू ( हेच्चुविकेयू ) अथवा साम्यवू अथवा जयवादरू नीचरिगे हेळल्पडुवदो. अदु दुष्टजनर मोहार्थवागिये अथवा अवर नीचत्ववन्नु उपेक्षेमाडि स्तुतियु अर्थवादरूपवागिरुवदु. अथवा मूढजनरिगे उद्धवनु कृष्णसमनेंदु इद तिळवळिकेय अनुवादवु. अथवा कृष्णन स्वल्प साम्यवु उद्धवनिगे इद्दद्दरिंद हीगे हेळल्पट्टिरुवदु. अथवा आ कालदल्लि ज्ञानोपदेशमाडतक्क पुरुषरल्लि इवने अधिकनेंदु तोरिसुवदक्के श्रीकृष्णनु तन्न साम्यवन्नु उद्धवनिगे हेळिरुवनु. " ॥ ३१ ॥ उद्धवनिंदादरू ई कृष्णन आज्ञेयु नडिसल्पट्टितु. एंदु हेळुवरु- ' शब्दयोनिना ' वेदवे यावनन्नु तिळिसुवदक्के कारणवागियुळ्ळ मूरु लोकक्के गुरुवाद श्रीकृष्णनिंद ई हिंदे हेळिदप्रकार आज्ञेयन्नु पडेदु उद्धवनु बदरिकाश्रमक्के होगि दृढभक्तियिंद श्रीहरियन्नु पूजिसिदनु. ॥ ३२ ॥

**विदुरोप्युद्धवाच्छ्रुत्वा कृष्णस्य परमात्मनः ॥ क्रीडयोपात्तदेहस्य कर्माणि श्लाघितानि च ॥ ३३ ॥ देहन्यासं च तस्यैवं धीराणां धैर्यवर्धनं ॥ अन्येषां दुष्करतरं पशूनां विक्लवात्मनां ॥ ३४ ॥ आत्मानं च कुरुश्रेष्ठ कृष्णेन मनसेक्षितं ॥ ध्यायन् गते भागवते रुरोद प्रेमविह्वलः ॥ ३५ ॥ कालिंद्याः कतिभिर्विद्धानहोभिर्भरतर्षभ ॥ प्रापद्यत द्युसरितं यत्र मित्रासुतो मुनिः ॥ ३६ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे चतुर्थोऽध्यायः ॥ ४ ॥ ॥ ॥ ॥ ॥**

औद्धवीं समाप्य वैदुरीं कथामाह विदुरोपीत्यादिना ॥ ३३ ॥ देहन्यासं पृथिवीलोकत्यागं पशूनामज्ञानां ॥ ३४ ॥ आत्मानं स्वमनसेक्षितं स्मृतं ॥३५॥

१. तदीय नीचत्वस्योपेक्षयापीत्यर्थः । तदीयनीचत्वमुपेक्ष्य स्तुतिरूपार्थवादतया आधिक्यवचनमितिभावः ॥ मूढाना उद्धवादिषु कृष्णसाम्यादिकं यद्दृश्यते तदनुवादोयमित्यर्थः । तथा च दर्शनभाषयेदमुक्तमिति भावः । तथा च यत्किंचित्साम्येन वा साम्यमुच्यत इति योज्यं । -( या. २. अन्येषां अज्ञानिनां पशूनां पशुप्रायानां विक्लवात्मनां अधीरचित्तानां दुष्करतरं अतिशयेन दुःखकरं । -( या. )

द्युसरितं गंगां मित्रासुतो मैत्रेयः ॥ ३६ ॥ इति श्रीमद्भागवते म०पु० तृतीयस्कंधे विजयध्वजटीकायां चतुर्थोऽध्यायः ॥ ४ ॥

ई प्रकार उद्धवन कथेयन्नु मुनिगळि विदुरन कथेयन्नु हेळुवरु– विदुरनादरू उद्धवन मुखदिंद क्रीडार्थवागि मनुष्यरंते देहधरिसिद सर्वांतर्यामियाद श्रीकृष्णन श्लाघ्यवाद कार्यगळन्नू हागू. योगेश्वररिगे वैराग्यादिगळिगे साधकवाद. मत्तु अधैर्यचित्तवुळ्ळ पशुगळनिरुव अज्ञानिगळिगे अतिशयेन दुःखदायकवाद. श्रीकृष्णन भूलोकपरित्यागसंगतियन्नू हे कुरुकुलश्रेष्ठनाद परीक्षितने आ श्रीकृष्णनु तन्नन्नु ( विदुरनन्नु ) स्मरिसिद संगतियन्नू केळि. आ उद्धवनु होदनंतर श्रीकृष्णनन्नु ध्यानमाडुत्त प्रेमदिंद पूर्णनागि दोड्डध्वनियिंद रोदनमाडिदनु. हे भरतकुलक्के श्रेष्ठनाद परीक्षितने ज्ञानियाद्दरिंद आ विदुरनु. समाधान माडिकोंडु आ कालिंदीनदियन्नु बिट्टु केलवु दिवसगळोळगे ज्ञानिगळाद आ मैत्रेयमुनिगळु याव स्थळदल्लि वासमाडिद्दरो आ गंगानदियन्नु कुरितु बंदनु. ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ हीगेश्रीमद्भागवत मूलश्लोकगळिगू विजयध्वजव्याख्यानक्कू सरियागि योजनेमाडि अलंकरिसुव प्राकृतार्थरूपवाद ' सुखार्थबोधिनी ' एंब टिप्पणेय तृतीयस्कंधद ४ ने अध्यायवुमुगिदितु. ॥ श्रीकृष्णार्पणमस्तु ॥

---

**श्रीशुक उवाच ॥ द्वारि द्युनद्या ऋषभः कुरूणां मैत्रेयमासीनमगाधबोधं ॥ क्षत्ताभिसृत्याच्युतभावशुद्धः पप्रच्छ सौशील्यगुणाभितृप्तः ॥१॥**

अत्र गंगाद्वारे मैत्रेयं प्राप्य विदुरस्य प्रश्नप्रकारं कथयति द्वारीति । क्षत्ता द्युनद्या द्वारि गंगाद्वारे आसीनमगाधबोधं अनवगाह्यज्ञानं विदुरस्य सौशील्यादिगुणैरतितृप्तं मैत्रेयमभिसृत्य गुरूपसत्तिविधिना प्राप्य पप्रच्छेत्यन्वयः । अच्युतभावेन भगवद्भक्त्या शुद्धः । अच्युतभावतृप्त इतिपाठे अच्युतलीलामृतपानेन शरीरयात्रावानित्यर्थः । " भावोलीलाक्रियाचेष्ट-"त्यभिधानं ॥ कुरूणामृषभ इत्यनेन कुलीनत्वेन ज्ञानग्रहणयोग्यत्वं सूचयति ॥ १ ॥

ई अध्यायदल्लि विदुरनु हरिद्वारदल्लिद्द मैत्रेयरन्नु कुरितु बंदु प्रश्नमाडिद संगतियन्नु हेळुवरु– ( श्रीशुकाचार्यरु हेळुवरु– ) हे परीक्षितने. कुरुकुलक्के श्रेष्ठनाद आ विदुरनु स्वर्गलोकद नदियाद गंगेय द्वारदल्लि अदरे गंगानदियुळ्ळ हरिद्वारवेंब क्षेत्रदल्लि कुळितिरुव अपरिमितज्ञानियाद. हागू विदुरन विनयमोदलाद ओळ्ळेगुणगळिंद तुष्टनाद मैत्रेयनेंब महर्षियन्नु कुरितु, गुरुगळ सेवेगे याव प्रकारवागि बरतक्कद्दो आ प्रकारवे बंदु भगवद्भक्तियिंद शुद्धनागि ( ई मुंदे हेळतक्क प्रकारवागि ) प्रश्नमाडिदनु. ' अच्युतभावतृप्तः ' एंदु पाठविद्दरे. भावएंबशब्दवु लीला एंबदरल्लि क्रियादल्लि चेष्टादल्लि प्रयोगिसल्पडुववेंदु कोशदल्लि हेळुवदरिंद. श्रीहरिय लीला एंब अमृतपानदिंद शरीरनिर्वाहवुळ्ळ- ( होट्टे तुंबिकोळ्ळुव ) वनु एंदु अर्थवु. ' कुरूणामृषभः ' एंदु विदुरनिगे विशेषणकोट्टवदरिंद. इवनु योग्यकुलदल्लि हुट्टिद्दरिंद ज्ञानोपदेशक्के योग्यनेंदु सूचिसुवनु. ॥ १ ॥

**विदुर उवाच ॥ सुखाय कर्माणि करोति लोको न तैः सुखं नान्यदुपारमं वा ॥ विंदेत भूयस्तत एव दुःखं यदत्र युक्तं भगवान्वदेन्नः ॥२॥**

१ ननः कर्मभ्यो भूयो दुःखमेव विंदत। अत्र सुखप्राप्तये आत्यंतिकदुःखनिवृत्तये च यद्युक्तं कर्तुं योग्यं तत् भगवान् नोऽस्माकं वदेत् निरूपयतु । -( या. )

ननु पृच्छतेर्द्विकर्मकत्वेन भाव्यत्वादत्र तदप्रतीतेर्निरर्थकोऽयं प्रश्नइति तत्राह सुखायेति । लोको जनः सुखाय सुखप्राप्तये यागादिकर्माणि करोति तैः कर्मभिः सुखमन्यस्य दुःखस्योपारमं विनाशं वा न विंदत किंचानो बहुतरानर्थप्राप्तिरपि स्यादितितत्राह भूयइति । ततः कर्मभ्यो भूयो दुःखमेवाप्नोति तदस्तु तव किमत्राह यदत्रेति । अत्र सुखप्राप्तये दुःखनिवृत्तये च यद्युक्तं अविप्रतिपन्नत्वेन योग्यं तत्किं नो वदेदित्यन्वयः अनेन सुखप्राप्तिं दुःखनिवृत्तिं च पप्रच्छेत्युक्तं भवति ॥ २ ॥

ओळ्ळेदु. प्रश्नमाडिदनु एंब क्रियापदवु द्विकर्मकवाद्दरिंद. इल्लि विदुरनु मैत्रेयरन्नु प्रश्नमाडिदनु एंदु हेळलु, याव विषयवन्नु प्रश्नमाडिदनेंब इन्नोंदु कर्मवु तोरदिद्दरिंद इवन प्रश्नेयु निरर्थकवो एंदरे आ प्रश्नमाडिद विषयवन्नु हेळुवरु– हे मैत्रेय मुनिगळे भूलोकदल्लिद्द जनवु सौख्यवागुवदक्कागिये यज्ञमोदलाद वैदिककार्यगळन्नू कृषिमोदलाद लौकिककार्यगळन्नू माडुवरु. आदरे आ कार्यगळिंद सौख्यवू आगुवदिल्लवु. हिंदे इद्द दुःखवू होगुवदिल्लवु. मत्तू अवे कार्यगळिंदले मोदलिगिंत हेच्चागि अनर्थगळे आगुववु. आदरे इरलिः अदरिंद निनगेनु एंदरे हेळुवनु– ई भूलोकदल्लि एल्ल जनरिगू सुखवु दोरेयुवदक्कू दुःखवु होगुवदक्कू सम्मतवाद योग्यवाद उपायवु यावदु एंबदन्नु नमगे हेळबेकु. इदरिंद सुखवु दोरेयुवदक्कू दुःखवु होगुवदक्कू उपायवन्नु विदुरनु प्रश्नमाडिदनेंदु तात्पर्यवु ॥ २ ॥

**जनस्य कृष्णाद्विमुखस्य दैवादधर्मशीलस्य सुदुःखितस्य ॥ अनुग्रहायेह चरंति नूनं भूतानि भव्यानि जनार्दनस्य ॥ ३ ॥**

नन्वत्र सुखप्राप्तिदुःखनिवृत्त्युपायप्रश्नएव क्रियते न भगवत्तत्त्वविषय इति तत्राह जनस्येति । स्वतो ज्ञानाभावात बोधकपुरुषालाभाच्च कृष्णाद्विमुखस्येत्याह नत्वयोग्यत्वादन्यथा तस्यानुग्रहाय जनार्दनस्य भृतानि चरंतीत्युक्तिर्विरुद्धा स्यात भव्यानि मंगलानि एवंविधानि जनार्दनस्य भृतानि ज्ञानोपदेशलक्षणप्रसादकारणायेह कर्मभुवि देहधारणं कृत्वा वर्तंत इतिभावः ॥ ३ ॥

ओळ्ळेदु, इल्लि विदुरनिंद सुखप्राप्तियागुवदक्कू दुःखवु होगुवदक्कू उपायमात्रवे प्रश्नमाडल्पट्टिते होर्तु परमात्मन तत्वसंबंधवाददन्नू इल्लवो. एंदरे हेळुवरु– 'दैवात्' पूर्वजन्मद कर्मानुसारवागि अधर्मकार्यगळन्नु माडतक्कवरागि स्वत. ज्ञानहीनरागि मत्तु वस्तुगत्या योग्यचेतनरागिद्दाग्यू उपदेशमाडतक्क सत्पुरुषरु दोरेयदे इद्दरिंद श्रीकृष्णन वार्तेगळन्नु केळदे भगवद्धर्माचरणगळन्नु बिट्टु विरोधिगळागि बहु दुःखबडतक्क जनरमेले अनुग्रह माडुवदक्के अंदरे अवरिगे योग्यवाद ज्ञानोपदेशमाडि अवरिंद तावु तुष्टरागि अवरमेले आशीर्वादमाडुवदक्कागिये निश्चयवागि ई कर्मभूमियाद भरतखंडदल्लि तम्मंथ मंगळस्वरूपराद परमात्मन भृत्यरु देहधारणमाडिकोंडिद्दु संचरिसुवरु. इदरल्लि वस्तुगत्या मुक्तियोग्यरागिद्दु जन्मांतरद दुष्कर्मगळिंद उपदेशमाडतक्क सत्पुरुषर सहवासविल्लद्दरिंद श्रीकृष्णनिगे विमुखराद जनरमेले इंथ भगवद्भक्तरु अनुग्रहमाडुवरे होर्तु तमोयोग्यरागि भगवद्विरोधिगळादवरमेले एंदू अनुग्रहमाडुवदिल्लवेंदु अभिप्रायवु. ३

**तत्साधुवर्यादिश शर्मवर्त्म संराधितो भगवान्येन पुंसां ॥ हृदि स्थितो यच्छति भक्तिपूते ज्ञानं स्वसत्ताधिगमं पुराणं ॥ ४ ॥**

फलितमाह तदिति । यतो लोकानुग्रहाय भवज्जीवनं तत्तस्मात्साधुवर्य शर्मवर्त्म सुखप्राप्तिमार्गमादिशेत्यन्वयः । येन शर्मवर्त्मना स्वसत्ताधिगमं स्वव्याप्तिज्ञापकं पुराणं संप्रदायागतं ॥ ४ ॥

फलितार्थवन्नु हेळुवनु– यावकारण योग्य जनरमेले अनुग्रह माडुवदक्के तावु बदुकिरुविरो. आद्दरिंदले 'हे साधुवर्य' साधुजनरल्लि श्रेष्ठराद मैत्रेयऋषिगळे याव मार्गदिंद (उपायदिंद) श्रीहरियु पूजितनागि जनर वैराग्यमोदलादवुगळिंद उत्पन्नवाद भक्तियिंद पवित्रवाद हृदयदल्लिद्दु आ जनरिगे 'स्वसत्ताधिगमं' तन्न व्याप्तियन्नु तिळिसिकोडतक्क परंपरासंप्रदायदिंद बंदिरुव 'ज्ञानं' अपरोक्ष ज्ञानवन्नु कोडुवनो, 'तत् शर्मवर्त्म' आ सुखदायकवाद मार्गवन्नु तावु उपदेशमाडबेकु. ॥ ४ ॥

**करोति कर्माणि कृतावतारो यान्यात्मतंत्रो भगवांस्त्र्यधीशः ॥ यथा ससर्जाग्र इदं निरीहः संस्थाप्य वृत्तिं जगतो विधत्ते ॥ ५ ॥**

सुखवर्त्मापि भगवत्सृष्ट्यादिगुणकर्मकथनश्रवणादिकमेव नातोन्यदित्याशयवान् तत्सृष्ट्यादिप्रकारं पृच्छति करोतीति । देवदत्तव्यावृत्तये आत्मतंत्र इति स्वातंत्र्यं च कतिपयवस्तुष्वेव न सर्वत्रेत्यत उक्तं भगवांस्त्र्यधीशइति तानि कर्माणि दुष्टनिग्रहादीनि वर्णयेति प्रत्येकमन्वेतव्यं किंचाग्रे आदिकाले यथा इदं जगत्ससर्ज तं प्रकारमिति सर्वत्र योज्यं तत् मेतौ संस्थाप्य न्यस्य यथा जगतो वृत्तिं जीविकां विधत्ते तदेयमिति शाश्वतो वक्ति ॥ ५ ॥

आ सौख्यमार्गवादरू श्रीहरिय सृष्टिमोदलाद गुणगळन्नू अवन पराक्रमद कार्यगळन्नू हेळोण-केळोणमोदलादद्दे होर्तु बेरे अल्लवेंब अभिप्रायदिंद जगत्तिन सृष्टिमोदलादद्दन्नु विदुरनु प्रश्नमाडुवनु– यःकश्चित् लौकिकपुरुषनंते अस्वतंत्रनागदे हागू यत्किंचित् स्वतंत्रनागदे मूरु लोकक्कू मुख्यस्वामियाद श्रीमन्नारायणनु तानु भूलोकदल्लि अवतारमाडि दुष्टनिग्रह मोदलाद एनेनु कार्यगळन्नु माडुवनु मत्तू एल्लक्कू मोदलु तनगे याव अपेक्षेयू इल्लदे ई जगत्तन्नु ह्यागे सृष्टिमाडिदनु. आ सृष्टिमाडिद जगत्तन्नु नीरमेले निल्लिसि अदर बदुकुविकेयन्नु (पालनेयन्नु) ह्यागे माडुवनु? ५

**यथा पुनः स्वे ख इदं निवेश्य शेते गुहायां स निवृत्तवृत्तिः ॥ योगेश्वराधीश्वर एक एतदनु प्रविष्टो बहुधा यथासीत् ॥ ६ ॥**

पुनःप्रलये स्वे खे निजोदराकाशे गुहायामिदं निवेश्य निवृत्तजगत्सृष्ट्यादिवृत्तिः स हरिः यथा शेते एतज्जगत्सृष्ट्वा तदनु प्रविष्टो हरिर्यथा बहुधासीत् अनायासेन बहुरूपं गृह्णातीति योगेश्वराधीश्वर इत्युक्तं ॥ ६ ॥

पुनः प्रळयकालदल्लि तन्न उदरगुहादल्लि ई जगत्तन्नु इट्टुगोंडु सृष्टिमोदलाद व्यापारगळन्नु बिट्टु आ श्रीहरियु ह्यागे मलगुवनु, अनायासदिंद बहुरूपगळन्नु धरिसुवदरिंद योगेश्वररिगे मुख्यस्वामियेंदेनिसिगोंड श्रीहरियु ई जगत्तन्नु सृष्टिमाडि अदरल्लि बहुरूपदिंद ह्यागे प्रवेशमाडिदनु' ॥ ६ ॥

**क्रीडन्विधत्ते द्विजगोसुराणां क्षेमाय कर्माण्यवतारभेदैः ॥ मनो न तृप्यत्यपि शृण्वतां नः सुश्लोकमौलेश्चरितामृतानि ॥ ७ ॥**

जगत्सर्जनादिकर्मकथनश्रवणादवतारभेदैः क्रियमाणकर्मकथनादौ सम्यक् मनोनिर्विशतीत्यतस्तानि कर्माणि अवश्यं वक्तव्यानीत्याशयेन पुनरुक्तं करोति क्रीडन्निति । द्विजगोसुराणां क्षेमायेति चतुर्थ्या तदेव प्रयोजनमित्यवधारयति भवता श्रुतपूर्वाणि हरेः कर्माणि पुनःप्रश्नस्य कोऽर्थ इत्याशंक्य सत्यं किंत्वलंबुद्धचभावाद्विशेषश्रवणेच्छार्थमित्याह मनोनेति । चरितश्रवणपानं कुर्वतामित्यर्थः ॥ ७ ॥

मृदेविगू उत्पत्तिस्थानवाद्दद्दो पवित्रस्वरूपनाद निन्न आ पादक्के नन्नु नावु शरणागतरागिरुवेवु. ॥ १९ ॥

यच्छ्रद्धया श्रुतवत्या च भक्त्या संमृज्यमाने हृदयेऽवधार्य ॥ ज्ञानेन वैराग्यबलेन धीरा व्रजंति यत्तेंघ्रिसरोजपीठं ॥ २० ॥
विश्वस्य जन्मस्थितिसंयमार्थे कृतावतारस्य पदांबुजं ते ॥ व्रजेम सर्वे शरणं यदीश स्मृतं प्रयच्छत्यभयं स्वपुंसां ॥ २१ ॥

एतत्पदप्राप्तौ साधनमाहुः यच्छ्रद्धयेति। संमृज्यमाने सम्यक्शोध्यमाने अवधार्य संनिधाय्य वैराग्यमेव बलं यस्य स तथा तेन अंघ्रिसरोजाख्यं पीठं ॥२०॥ हरेर्विक्रमो लोकोपकाराय न स्वार्थाय यदतः स्मरणमात्रेण प्रीतोऽस्मदभीष्टं करोतीति भावेन स्तुवंति विश्वस्येति । तव यत्पदांबुजं स्मृतं स्वपुंसां अभयं प्रयच्छति सर्वे तच्छरणं व्रजेमेत्यन्वयः । कृतावतारस्य गृहीतपुरुषादिप्रादुर्भावस्य ॥ २१ ॥

ई परमात्मन पादवु दोरेयुवदक्के साधनवन्नु हेळुवरु– नोडलु विश्वासपूर्वकवागि याव पादमहिमेयन्नु श्रवणमाडुवदरिंद आ पादमहामहिमेगळु तिळिदु आ माहात्म्यज्ञानपूर्वक सुदृढ- स्नेहवेंब भक्तियिंद वेदशास्त्रमोदलादवुगळन्नु मरियिगि विचारमाडि हृदयदल्लिट्टुगोंड्डु , मनसिनल्लिये तिळिदु , धैर्यशालिज्ञानिगळादवरु, वैराग्यवेंब बलवुळ्ळज्ञानदिंद याव निन्न पादकमलवेंब महास्थानवन्नु होंदुवरु. ॥ २० ॥ श्रीहरिय पराक्रमगळु लोकोपकारक्कागिये होतु स्वार्थवल्लवु; आदकारण स्मरिसुवदरिंदले अवनु प्रीतनागि नम्म अभीष्टयन्नु कोडुवनेंब अभिप्रायदिंद स्तोत्रमाडुवरु– हे स्वामियाद नारायणने जगत्तिन सृष्टिस्थितिलयगळसलुवागि स्वयं पुरुषरूपादि अवतारगळन्नु धरिसिद याव निन्न पादवु स्मरणेमाडुव मात्रदिंदले तन्न भक्तरिगे अभयवन्नु कोडुवदो आ निन्न पादकमलक्के शरणागतरागिरुवेवु. ॥ २१ ॥

यत्सानुबंधेऽसति देहगेहे ममाहमित्यूढदुराग्रहाणां ॥ पुंसां सुदूरं वसतोऽपि पुर्यां भजेम तत्ते भगवन्पदाब्जं ॥ २२ ॥

हरेः पदं विरक्तैकलभ्यमिति भावेन स्तुवंति यत्सानुबंध इति । सानुबंधे पुत्रादिपरिकरसहितेऽसत्यमंगले देहेऽहमिति गेहे ममेदमिति चोढदुराग्रहाणां दुष्ट- ज्ञानस्य चोढृणां पुंसां पुर्यां देहे वसतोपि तव यत्पदांबुजं सुदूरमत्यंतमगोचरं हे भगवन् ते पदांबुजं भजेमेत्यन्वयः ॥ २२ ॥

श्रीहरिय पादवु केवल वैराग्यदिंदले दोरेयुवदेंब अभिप्रायदिंद स्तोत्रमाडुवरु– हेंडति मक्कळुमुंताद सकलसाहित्यसहितवाद अमंगलवाद देहदल्लि नानु एंतलू मनेयल्लि नन्नदेंतलू दुष्टज्ञानवन्नु ( अभिमानवन्नु ) होंदुकोंडिद्द जनरिगे अवर देहदल्लिद्दाग्यादरू याव निन्न पादकमलवु अत्यंत दूरदल्लिद्द वस्तुविनंते तिळियलशक्यवु. ' हे भगवन् ' हे परमात्मने आ निन्न पादकमलवन्नु नावु भजिसुवेवु. ॥ २२ ॥

तं त्वामसद्वृत्तिभिरक्षिभिर्ये पराहृतांतर्मनसः परेश ॥ अथो न पश्यंत्युरुगाय नूनं यत्ते पदं न्यासविलासलक्ष्म्याः ॥ २३ ॥

निकटवर्तिनो हरेर्दर्शनासंभवे किं कारणमिति तत्राह तंत्वामिति । यस्त्वमेवमुक्तमहिमा अथो तस्मात्ते तं त्वां नूनं निश्चयेन न पश्यंति इत्यन्वयः। असद्वृत्ति- भिरक्षिभिरिंद्रियैः पराहृतं बहिष्कारितमंतःस्थितं मनो येषां ते पराहृतांतर्मनसो यस्मात् अंतःस्थितं प्रत्यगात्मानं विषयीकर्तुं योग्यमिति सूचनायांतरिति विशेषणं कीदृशं न्यासेन सकलकर्मणां परब्रह्मार्पणेन विलासो येषां ते न्यासविलासाः तेषां लक्ष्म्याः लक्षदर्शनांकनयोरिति धातोर्दर्शनस्य पदं विषयं अनेन परमहंसाश्रमस्था एनं पश्यंतीत्युक्तं मुडागमो ङीप् तज्ज्ञानस्यातिशयं सूचयतः पदयोर्न्यासो भुवि क्षेपविशेषः तस्य विलासलक्ष्म्याः पदमिति द्विरावृत्त्यान्वेतव्यं अनेन पदविषयास्तु- तिरयुक्तेति शंका निरस्तेति ज्ञातव्यमिति वा ॥ २३ ॥

केवल समीपदल्लिरतक्क श्रीहरिय दर्शनवु असंभववागुवदक्के एनु कारणवेंदरे हेळुवरु– ' हे उरुगाय ' श्रेष्ठराद ब्रह्मादिगळिंद गानमाडिसिगोळ्ळुव श्रीहरिये याव नीनु ई हिंदे हेळिदंते इंथ महामहिमेयुळ्ळवनो आदकारण आ दुष्टजनरु आ निन्नन्नु निश्चयवागि नोडुवदिल्लवु. एंदु अन्वयवु ' हे परेश ' ब्रह्मादिगळिगे स्वामियाद परमात्मने, याव जनरिगे दुर्व्यापार- गळल्लि मग्नवाद इंद्रियगळिंद, देहदल्लिद्द जीवनियामकनाद परमात्मनन्नु तिळकोळ्ळुवदक्के योग्यवाद मनःसु होरगे एळदोयिदिरुवदो, आ जनरु ' पदन्यासविलासलक्ष्म्याः पदं ' सकलकर्म- गळन्नु ब्रह्मार्पणबुद्धियिंद माडि आनंद पडतक्क जनरिगे तोरतक्क निन्न पादवन्नु अंदरे सकलसंगपरित्यागमाडि यावत्तू श्रीहरिगे अर्पिसतक्क संन्यासिगळिगे नोडलिक्के योग्यवाद निन्न पादवन्नु. अथवा भूमियल्लि पादवनिड्डव विलासद कांतिगे मूलस्थानवाद निन्न पादवन्नु सर्वथा नोडुवदिल्लवु. हीगे हेळुवदरिंद पादवेंब अवयव-स्तोत्रवु अयुक्तवेंब संदेहवु नाशमाडल्पट्टितु. ई श्लोकदल्लि ' अथो ' एंबदु कार्त्स्न्यार्थवन्नु ( संपूर्ण एंब अर्थवन्नु ) हेळुवदु. ' पदन्यासविलासलक्ष्म्याः ' एंबल्लि ' पदं ' एंबदन्नु एरडावर्ती योजनेमाडतक्कदु. हागू इल्लि मुडागमवु ङीप् प्रत्ययवू इरुवदरिंद संन्यासिगळ ज्ञानवु श्रेष्ठवादद्देंदु तोरिसुवदु. ॥ २३ ॥

पानेन ते देव कथासुधायाः प्रवृद्धभक्त्या विशदाशया ये ॥ वैराग्यसारं प्रतिलभ्य बोधं यथांजसा त्वेयुरकुंठधिष्ण्यं ॥ २४ ॥
तथापरे चात्मसमाधियोगबलेन जित्वा प्रकृतिं बलिष्ठां ॥ त्वामेव धीराः पुरुषं विशंति तेषां श्रमः स्यान्नतु सेवया ते ॥ २५ ॥

एवंविधस्य हरेरपरोक्षज्ञानसाधनोपासना द्विविधा ध्यानरूपा वेदांतशास्त्रश्रवणादिलक्षणा च तत्र क्षिप्रप्रवृत्त्यर्थं प्रथमा क्लेशसाध्या द्वितीया सुखसाध्येति उभे विशिनष्टि पानेनेति । हे देव ते कथासुधायाः पानेन श्रवणादिलक्षणेन प्रवर्धमानया भक्त्या विशदाशयाः निर्मलांतःकरणाः वैराग्यसारं वैराग्यफलं बोधमपरोक्ष- ज्ञानं प्रतिलभ्य प्राप्य अंजसा ऋजुमार्गेणाकुंठधिष्ण्यमप्रतिहतवैकुंठादिस्थानं अपरिच्छिन्नस्वरूपं त्वा त्वां यथा ईयुः ॥ २४ ॥ तथापरे येऽन्येयोगिनः यमनियमा- दियोगनिष्ठाः आत्मसमाधियोगबलेन परमात्मचित्तैकाग्र्यलक्षणध्यानसामर्थ्येन बलिष्ठां अन्यसाधनाजेयां प्रकृतिं बंधकशक्त्यभिमानिनीं प्रसादाज्जित्वा धीरा धीषु रममाणा अपरोक्षज्ञानिनः पुरुषं पूर्णषड्गुणं त्वामेव विशंति । '' तुःस्याद्भेदेऽवधारण '' इति वचनात् । तत्र तेषां योगिनां श्रमः स्याद्यथा तथा ते तव श्रवणा- दिरूपया सेवया नतु नैव श्रमः स्यात्किंतु सुखमेवेत्यन्वयः । अत्र प्रकृतिजयोनाम तत्प्रसादैकलभ्यो नान्यः । तदुक्तं ''वायोश्चप्रकृतेर्विष्णोर्जयोभक्त्यैवनान्यथे-''ति२५

ई प्रकार महिमेयुळ्ळ श्रीहरिय अपरोक्षज्ञानसाधनवागुवदक्के ध्यानस्वरूपवादद्दु. वेदांतशास्त्रश्रवणमोदलाद स्वरूपवादद्दु एंदु एरडु प्रकार उपासनेगळिरुववु. अवुगळल्लि तीव्रमनःसुहृदुवदक्के ध्यानरूपवाद उपासनेयु स्वल्पु क्लेशसाध्यवादद्दु ( श्रमदिंद दोरेयुवदु. ) वेदांतश्रवणमोदलाद उपासनेयु सुखदिंदे दोरेयतक्कद्दु; एंदु ई एरडू उपासनेगळन्नू विस्तरिसुवरु- 'हे देव' क्रीडादिगुणसंपन्ननाद परमात्मने, निन्न कथामृतवन्नु श्रवणमोदलावुगळिंद पानमाडुवदरिंद अभिवृद्धवाद भक्तियुळ्ळवरागि वेदांतप्रवचनमाडतक्क भक्तरु अंतःकरणशुद्धियुळ्ळवरागि वैराग्यद फलवाद अपरोक्षज्ञानवन्नु होंदि सुलभमार्गदिंद नाशरहितवाद (तिरिगिबारदंथ) वैकुंठमोदलाद स्थानवन्नू अळतेइल्लद निन्न स्वरूपवन्नू बाग होंदुवरो ? ॥२४॥ 'तथाऽपरे' हागे मत्ते केलवरु यम-नियम प्राणायाममोदलाद साधनगळिंद योगाभ्यासमाडतक्क योगिगळु परमात्मनल्लिये एकाग्रमनःसिद्धु संततवागि परमात्मनन्नु ध्यानमाडुव सामर्थ्यदिंद एरडने साधनगळिंद जयिसलिक्के अशक्यळाद 'प्रकृतिं बलिष्ठां' जीवर अनादियाद अज्ञानबंधनक्के अभिमानियाद प्रकृतियन्नु; आकेय ( आ प्रकृतिय ) प्रसाददिंदले जयिसि ( अंदरे आ प्रकृतिकार्यवाद अज्ञानवन्नु कळकोंडु ) 'धीराः' तंम बुद्धिगळल्लिये आनंदबडतक्क अपरोक्षज्ञानिगळु पूर्णषड्गुणनाद निन्नन्ने होंदुवरु. 'तु' एंब अव्ययवु भेदार्थदल्लियू अवधारणा- ( निश्चयार्थ ) दल्लियू इरुवदरिंद इल्लि अवधारणार्थवन्नु हेळुवदु; अंदरे ई मेले हेळिद एरडु प्रकार योगिगळल्लि यम-नियम-प्राणायाममोदलाद साधनगळिंद अपरोक्षहोंदतक्क योगिगळिगे अज्ञानबंधनवन्नु कळकोंडु अपरोक्षहोंदि मोक्षहोंदुवदक्के एष्टु श्रमवागुवदो. श्रवण-मननमोदलाद साधनगळिंद ( मोक्षहोंदतक्कवरिगे ) अष्टु श्रमवागुवदिल्लवु; [1]सुखदिंदले मोक्षहोंदुवरु. इल्लि प्रकृतिजय वेंदरे बंधनक्के अभिमानियाद रमादेविय अनुग्रहक्के पात्ररागोणवेंदर्थवे, होर्तु आ प्रकृतियन्नु गेदेयोणवेंदर्थवल्लवु. ई विषयक्के आचार्यरु प्रमाण हेळिरुवरु– वायुदेवरन्नु प्रकृतियन्नु श्रीविष्णुविनन्नु ई मूवरन्नु जयिसोणवेंदरे अवरवर संपूर्ण अनुग्रहक्के मुख्यपात्ररागोणवेंदर्थवे होर्तु अवरन्नु गेदेयोणवेंदर्थवल्लवु. ॥ २५ ॥

**तत्ते वयं लोकसिसृक्षयाद्य त्वया विसृष्टास्त्रिभिरात्मभिर्ये ॥ सर्वे वियुक्ताः स्वविहारतंत्रं न शक्नुमस्तत्प्रतिकर्तवे ते ॥ २६ ॥**
**यांवद्बलिं तेऽज हराम काले यथा वयं चान्नमदाम यत्र ॥ तथोभयेषां त इमेह लोका बलिं हरंतोन्नमदंत्यनीशाः ॥ २७ ॥**

स्तुत्या प्रसन्नीकृत्य स्वाभीष्टं विज्ञापयंतीत्याह तत्तेवयमिति । यस्मात्त्वं लोकदयालुस्तत्तस्मात्त्वया लोकसिसृक्षया त्रिभिरात्मभिः कालमायांशैर्विसृष्टा ये ते वयमद्य सर्वे वियुक्ता विश्लिष्टाः स्वविहारतंत्रं स्वस्य तव क्रीडोपकरणं यत् ब्रह्मांडं तत्प्रतिकर्तवे प्रतिकर्तुं न शक्नुम इत्यन्वयः ॥ २६ ॥ ब्रह्मांडनिर्माणेन प्रयोजनमाहुरित्याह यावदिति । यावद्बलिं भक्त्या हराम यावत्पर्यंतं ब्रह्मांडं समुत्पाद्य तस्मिन् स्थित्वा त्वद्विषयज्ञानकर्मलक्षणं बलिमुपहारं समर्प्य तर्पयामः यत्र ब्रह्मांडे स्थिता वयं काले काले यथान्नमदाम स्वविषयेषु व्यवहराम तथोभयेषामस्माकं युष्माकं च बलिं हरंतः समर्पयंतस्तइमेऽनीशाः। अस्मत्प्रेरणामंतरेण प्रवृत्तावसमर्था लोका जनाः अन्नं ज्ञानकर्मलक्षणमदंति तादृशब्रह्मांडनिर्माणोपायं कुर्विति वाक्यशेष इत्यन्वयः तादृशमंडं कर्तुं न शक्नुमइति पूर्वेण संबंध इति वा अज विष्णो । " अजाविष्णुहरच्छागा " इत्यभिधानं ॥ २७ ॥

१. यावत् यावता ज्ञानेन । -( या. )



ई प्रकार स्तोत्रमाडुवदरिंद परमात्मनन्नु तत्वाभिमानिदेवतेगळु प्रसन्नीकरिसिगोंडु इन्नु तम्म अभीष्टयन्नु विज्ञापनमाडिकोळ्ळुवरु–( हे नारायणने ) नीनु सकलजनर मेले दयाळुवादरिंद सकललोकवन्नु सृष्टिमाडबेकेंब इच्छेयुळ्ळ निन्निंद, काल-माया-अंश इवरद्वारा उत्पन्नराद नावु यावत्तरू बेरे बेरे यागिरुववेवु ( ओंदोंदु सामर्थ्यवुळ्ळवरागिरुवेवु ), आद्दरिंद निन्न आटके साहित्यवाद ब्रह्मांडवन्नु सृष्टिमाडुवदक्के नावु समर्थरागिल्लवु. ॥ २६ ॥ ब्रह्मांडनिर्माणदिंद प्रयोजनवन्नु हेळुवरु– एल्लिय पर्यंतरवागि एष्टु ज्ञानदिंद ब्रह्मांडवन्नु रचनेमाडि, आ ब्रह्मांडदल्लिद्दु निन्न ( परमात्मन ) विषयकवाद ज्ञानवन्नू कर्मवन्नू संपादिसिगोंडु आ ज्ञानकर्मगळेंब बलियन्नु निनगे ( परमात्मनिगे ) समर्पणमाडि निन्नन्नु तृप्ति बाडिसुवेवो; हागू याव ब्रह्मांडदल्लिद्दु नावु कालकालक्के ( निन्नाज्ञेयिंद ) आया विषयगळल्लि व्यवहार माडुवेवो, हागू नंम प्रेरणेयहोर्तु याव कार्यवन्नादरु माडुवदक्के असमर्थराद ई यावत्तू ( मुंदे हुट्टतक्क ) प्रजरु नंमगळिगू निमगू बलियन्नु कोडुत्त अंदरे माडिद कर्मगळन्नु नम्मद्वारा निनगे समर्पणमाडि तृप्तिबडिसी ज्ञान-( मत्तु ) कर्मगळेंब फलवन्नु होंदुवरो, अंथ ब्रह्मांडवन्नु निर्माणमाडतक्क उपायवन्नु माडबेकु. हे उत्पत्तिशून्यनाद नारायणने अंथ ब्रह्मांडवन्नु रचने माडुवदक्के नावु असमर्थरु. 'अज' एंब शब्दवु विष्णुविनल्लियू हरनल्लियू कुरि- ( म्याकि )यल्लियू उपयोगिसल्पडुवदु; आद्दरिंद इल्लि 'अज' एंदरे विष्णुवु एंदर्थवु. ॥ २७ ॥

**त्वं नः सुराणामसिचान्वयानां कूटस्थ आद्यः पुरुषः पुराणः ॥ त्वं देव शक्त्यां गुणकर्मयोनौ रेतस्त्वजायां कविरादधेऽजः ॥ २८ ॥**

किमिति मां प्रत्येतद्विज्ञापनमन्यस्य न स्यादिति तत्रैवमूचुरित्याह त्वं न इति । आद्यः आदेरुत्पत्तेः कर्ता पितृत्वात् त्वां विज्ञापयाम इति भावः अस्मत्पदं विशिनष्टि सुराणामिति । न केवलमस्माकमेव जनयिता किंत्वस्मत्संततीनामिति भावेनोक्तं सान्वयानामिति त्वं क इति पुराणः पुरुषः श्रीनारायणः पितुरपि देहरूपेण विकारदृष्टेस्त्वद्विकारा वयमिति शंका माभूत् कूटस्थः विकारकूटेषु तिष्ठति नतु विकारवान् हरः पितृस्थानीयत्वं स्पष्टयितुमाहुरित्याह त्वंदेवेति । हे देव त्वं कविः रतिकांतदर्शी अजश्च देवदत्तवत् भवतो गर्भाधानादिकर्माण्यसंभावितानि तथापि भवान् शक्त्यां भार्यायां सत्वादिगुणानां कर्मणामदृष्टानां योनौ कारणभूतायामजायां जननधर्मरहितायां चिदचित्प्रकृतौ रेतो गर्भमादध इत्यन्वयः। तुशब्देनोभयेषां महान्विशेषोस्तीति सूचयति ॥ २८ ॥

एनु कारण नन्नन्नु ( नारायणनन्नु ) कुरितु ई विज्ञापनेयु ? इन्नोब्बनन्नु याके विज्ञापिसगूडदेंदरे आ विषयक्के तत्वेशरु हेळुवरेंदु हेळुवरु– 'हे देव' हे नारायणने नीने नम्मेल्लर उत्पत्तिकर्तृवाद्दरिंद तंदे यंदु निन्नन्ने विज्ञापने माडुवेवेंब अभिप्रायवु. मूलश्लोकदल्लिद्द 'नः' एंब अस्मत्पदवन्नु ( अंदरे-नम्मेल्लर-एंदु हेळिद्दन्नु ) विवरिसुवरु–केवल तत्वदेवतेगळाद नम्मन्ने हुट्टिसिदवनेंदल्ल; नम्म संततिगळन्नेल्ल सृष्टिमाडिदवनु एंब अभिप्रायदिंद 'सान्वयानां' एंब पदप्रयोगवु. नीनु यारेंदरे पुराणपुरुषनाद ( अनादिकालदिंद पुराणगळल्लि प्रसिद्धनाद ) नारायणनु. हागादरे नीनु नमगे तंदेयादमेले, तंदेय देहद विकारवे मक्कळ देहवेंदु प्रसिद्धियु; अदरंते निन्न देहविकारवे नम्म देहविरबहुदेंदु संदेहबंदरे हागल्ल. निन्न देहक्कू निनगू भेदविल्ल, हागू निन्न देहवु विकारहोंदतक्कद्दल्ल; विकार होंदतक्क वस्तुगळ समूहदल्लि नीनिरतक्कवने होर्तु नीनु विकार होंदतक्कवनलवाद्दरिंद निनगे कूटस्थनेन्नुवरु. हे क्रीडादिगुणसंपन्ननाद श्रीहरिये, नीनु 'कविः' एल्लर ज्ञानके मीरिद ज्ञानवुळ्ळवनु; लौकिक जनरंते गर्भधरिसोण मोदलाद कर्मगळु निनगे असंभववादरू नीनु सत्वमोदलाद गुणगळू अदृष्टमोदलाद

कर्मगळू इवु गळिगे कारणळाद हागू तनगे जननविल्लद चिदचिद्रूपळाद प्रकृतियल्लि गर्भवन्नु स्थापनमाडिदि. ई श्लोकदल्लिय 'तु' शब्दवु परमात्मनिगू प्रकृतिगू बहळ वैलक्षण्य-विरुवदेंदु हेळुवदु. ॥ २८ ॥

## ततो वयं सत्प्रमुखा यदर्थे बभूविमात्मन्करवाम किं ते ॥ त्वं नः स चक्षुः परिदेहि शक्ता देव क्रियार्थे यदनुग्रहेण ॥ २९ ॥
## इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे षष्ठोऽध्यायः ॥ ६ ॥ ॥ ॥ ॥ ॥

ततस्तस्याः प्रकृतेः वयं सत्प्रमुखा महत्तत्वमुखा बभूविम ततः किं तत्राह यदर्थइति । आत्मन्स्वामिन् यदर्थे यत्प्रयोजनाय बभूविम तदर्थं ते तव किं करवाम वियुक्ता अस्वतंत्रा यस्मात्तस्मात्स त्वं चक्षुर्ज्ञानमंडनिर्माणोपायविषयं परिदेहि कीदृशं तत्राहुः शक्ताइति । यस्य ज्ञानस्यानुग्रहेण क्रियार्थे ब्रह्मांडनिर्माणाय शक्ताः स्यामेत्यन्वयः ॥ २९ ॥ इति श्रीमद्भागवते तृतीयस्कंधे महापुराणे विजयध्वजटीकायां षष्ठोऽध्यायः ॥ ६ ॥ ॥ ॥ ॥

आ मेले आ प्रकृतियिंद 'सत्प्रमुखावयं' महत्तत्वमोदलाद एल्ल तत्वगळिगे अभिमानिगळाद नावु उत्पन्नरादेवु- मुंदेनंदरे-हे स्वामिन् याव प्रयोजनक्कागि नावु हुट्टिदेवो, आ कार्यद सलुवागि निनगे एनु ( सहाय ) माडवु? नावु अस्वतंत्रराद कारण, स्वतंत्रनाद आ नीनु ब्रह्मांड निर्माण माडुवदक्के उपायवाद ( तकंथ ) याव ज्ञानद अनुग्रहदिंद ब्रह्मांडवन्नु रचिसुवदक्के नावु सामर्थ्यवुळ्ळवरागुवेवो, अंथ ज्ञानवन्नु नमगे कोडबेकेंदु प्रार्थिसुवेवु एंदु तत्वेशरु परमात्मनन्नु प्रार्थने माडिदरु. ॥ २९ ॥ हीगे श्रीमद्भागवत मूलक्कू विजयध्वजव्याख्यानक्कू सरियागि योजने माडि अलंकरिसुव 'सुखार्थबोधिनी' एंब प्राकृत टीकेयु कूसनूर श्रीनिवासनिंद रचितवागि मूरने स्कंधद ६ ने अध्यायवु मुगिदितु.॥ ६ ॥

---

## ऋषिरुवाच ॥ इति तासां स्वशक्तीनामसतीना समेत्य सः ॥ प्रसुप्तलोकतंत्राणा निशम्य गिरमीश्वरः ॥ १ ॥
## कालसंज्ञां यदा देवीं बिभ्रच्छक्तिमुरुक्रमः ॥ त्रयोविंशतितत्वानां गणं युगपदाविशत् ॥ २ ॥

अस्मिन्नध्याये तदनन्यत्वमारंभणशब्दादिभ्य इत्यधिकरणार्थः प्रपंच्यत इत्यभिप्रेत्यादौ हरेस्तत्वेषु प्रवेशं वक्ति इतीति । उरुक्रमः त्रयोविंशतितत्वानां गणं युगपदाविशदित्यन्वयः। आकाशादिपंचभूतानि शब्दादिपंचतन्मात्राः श्रोत्रादिदशेंद्रियाणि मनो महदहंकारा इति त्रयोविंशतित्वानि तदुक्तं । "शब्दाद्यानभ-

१. ततः रेतसः सत्प्रमुखाः महदादितत्वाभिमानिनः यदर्थे यस्य कार्यस्यार्थे बभूविम आत्मन् हे स्वामिन् तत्किं ते कार्यं करवाम न किमपि तदुपयुक्तज्ञानाद्यभावादितिभावः । अतः यस्य तवानुग्रहेण क्रियार्थे ब्रह्मांडनिर्माणाय शक्ताः स्याम स त्वं नोऽस्माकं चक्षुस्तदुपयुक्तं ज्ञानं परिदेहि । -( या. ) २. स्वतंत्रबहुसाधनासृष्टिर्लोके दृष्टा । नैवं ब्रह्मणः किंतु स्वरूप-सामर्थ्यादेव तस्य सृष्टिः । परतंत्रो ह्यपेक्षेत स्वतंत्रः किमपेक्षते साधनानां साधनत्वं यतः किं तस्य साधनैः ॥ २ । १ । १५ ॥

आद्याश्च मनोयुक्तेंद्रियाणिच । अहंकारोमहांश्चैव त्रयोविंशतिकोगण "इति । देवतेंद्रियाणामेकत्वविवक्षया पृथङ् नोक्तं देवतेंद्रिययोरैक्यान्न पृथग्गणनं तयोरिति प्रकृति-श्चतुर्विंशा तत्प्रवेशस्य पूर्वसिद्धत्वान्नोक्ता हरिराविशदिति पंचविंशत्वेन सूचितः अत्रापि यदा जडांशस्वीकारस्तदा जीवः पंचविंशकः विष्णुः श्रियासह षड्विंशकः सप्तविंशको वा यदा जडांशस्वीकारोजीवस्तत्पंचविंशक इत्यादेः इदं सर्वमुरुक्रमपदेन सूचितं प्रवेशे कारणमाह इतीति । समेत्यासतीनां असमेतानां विश्लिष्टानां स्वशक्तीनां शक्यत्वात्स्वाधीनत्वाच्छक्तिशब्दवाच्यानां प्रसुप्तलोकतंत्राणां अनाविर्भूतलोकसृष्टिशक्तीनां प्रलीनलोकसृष्ट्युपकरणानां वा "तनुते येन कार्यं यत्तंत्रं साधन-मुच्यते। कारणानांस्वशक्तिर्वा प्रधानं साधनंयत" इति । तासामित्युक्तप्रकारां गिरं निशम्य। "शक्यत्वाच्छक्तयोविष्णोर्महदाद्यारमातये-"ति वचनात् । शक्तिशब्द-वाच्यत्वं महदादीनां युक्तं । प्रवेशोपि रमयासहेति भावेनाह । कालसंज्ञामिति । यदा प्रवेष्टुमैच्छत्तदा "त्रयोविंशतितत्वानि प्राविशद्रमयासह । कालाख्ययास्वयं विष्णुः शक्यत्वाच्छक्तिरूपये-" तिवाक्यंमानं । तत्र काराग्रहप्रवेशवन्नायं प्रवेशः किंतु स्वातंत्र्येणेति द्योतनायेश्वर इति ॥ १ ॥ २ ॥

ई अध्यायदल्लि ब्रह्मसूत्रद २ ने अध्यायद १ ने पाद ५ ने अधिकरण १५ ने सूत्र-' ॐ तदनन्यत्वमारंभणशब्दादिभ्यः ॐ ' एंब अधिकरणदल्लि हेळुव अर्थवु विवरिसल्पडुवदु. [ सूत्रार्थः-तदनन्यत्वं तस्य स्वतंत्रकारणस्य ब्रह्माभिन्नत्वं वाच्यं । कुतः? आरंभणशब्दादिभ्यः आरभ्यतेऽनेनेत्यारंभणं साधनं आरंभणे फलोपलक्षितं किंस्विदासीदित्यधिष्ठानाद्याक्षेपकवाक्यात् स्वातंत्र्यादियुक्तिमिश्रेत्यर्थः ॥ जगत्तिन सृष्टिगे स्वतंत्र कारणवु याव वस्तुवेंदु सिद्धवागुवदु? अदु ब्रह्मनिंद बेरेयल्ल. ब्रह्मने स्वतंत्रकारणवेंदेनतक्कद्दु; याकेंदरे ( आरंभणवेंदरे साधनवेंदर्थवु ) लोकदल्लि, कुंबारनु मण्णिल्लदे कोडवन्नु ह्यागे सृष्टिमाडलरियनो, हागे परमात्मनु इतर साहित्यगळिल्लदे जगत्तन्नु सृष्टिमाडलरियनेंदल्लवु; अवनु याव साहित्यगळिल्लदिद्दरू जगत्तन्नु सृष्टिमाडलु समर्थनु; हागू आ जगत्तिन सृष्टिगे साधकवाद सकलसाहित्यगळन्नुसह अवने सृष्टिमाडिरुवनु. ई परमात्मनु एरडनेयवर अधीननल्लवाद्दरिंदल्ल केवल स्वतंत्रनाद्दरिंदल्ल जगत्तिन सृष्टिगे साधकवाद वस्तुगळिगे आ सृष्टिमाडतक्क शक्तियन्नु कोडतक्कवनाद्दरिंदल्ल ( ई मूरु कारणगळिंद ) श्रीहरिये जगत्तिगे स्वतंत्रकारणनेंदु सिद्धवागुवदु. एंब ] ई अधिकरणद अर्थवे ई अध्यायदल्लि हेळल्पडुववेंब अभिप्रायदिंद जगत्तिन सृष्टिगे साधकवाद २३ तत्वगळल्लि जगत्सृष्टिमाडतक्क शक्तियन्नुंटु माडुवदक्के श्रीहरियु अवुगळल्लि प्रवेश माडिद संगतियन्नु हेळुवरु-' उरुक्रमः ' महापराक्रमशीलनाद परमात्मनु इप्पत्तु मूरुतत्वगळ समूहवन्नु ओम्मेले प्रवेशमाडिदनु. इप्पत्तु मूरु तत्वगळु यावेंदरे शब्दमोदलाददवू आकाशमोदलाददवू मनःसिनिंद सहितवाद इंद्रियगळू अहंकारवू महत्तत्ववू इवु एल्लवु शेरि इप्पत्तुमूरु तत्वगळेंदु वचनविद्दरिंद- १ आकाश, २ वायु, ३ तेजःसु ( अग्नि ), ४ उदक, ५ पृथिवी, ( इवे पंचभूतगळु ); ६ शब्द, ७ स्पर्श, ८ रूप. ९ रस, १० गंध, ( इवु ऐदु मात्रागळु ); ११ वाक्, १२ पाणि. १३ पाद, १४ पायु, १५ उपस्थ, ( इवु ऐदु कर्मेंद्रियगळु ); १६ चक्षु, १७ श्रोत्र, १८ रसन, १९ घ्राण, २० त्वक्, ( इवु ऐदु ज्ञानेंद्रियगळु ); २१ मनःसु, २२ अहंकारतत्व, २३ महत्तत्व, ई प्रकार २३ तत्वगळु. इंद्रियगळिगू इंद्रियाभिमानि देवतेगळिगू भेदविल्ल-दरिंद इंद्रियगळहोर्तु देवतेगळन्नु बेरे एणसगूडदेंदु वचनविद्दरिंद प्रत्येकवागि एणिसुवदु कारणविल्लवु. प्रकृतियु २४ नेयवळु. प्रकृतियिंदले ई इप्पत्तुमूरु तत्वगळु हुट्टिदवेंदु मोदलिगे

१. स्वरूपभूता शक्तिरेवात्र तंत्रमुच्यतइत्यर्थः । ननूक्तनिर्वचनेन सर्वकारणानां तंत्रशब्दवाच्यत्वसंभवात् कथं शक्तेरेव तंत्रशब्दवाच्यत्वं इत्यत आह प्रधानमिति । शक्त्यभावेनैव रासभादीनां असाधनत्वं दंडादीनां तु तत्सद्भावेनैव साधनत्वं उपजीव्यत्वात्तच्छक्तिः प्रधानसाधनं अत उक्तनिर्वचनेन प्रधानस्यैव मुख्यत्वेन शक्तेरेव तंत्रशब्दवाच्यत्वमिति भावः । -( या. )

हेळिदरिंद इल्लि ( ई श्लोकदल्लि ) प्रकृतियु २४ ने यवलेंदु गणनेमाडलिल्ल. हागू श्रीहरियु ई २३ तत्वगळ समूहवन्नु ओम्मेले प्रवेशमाडिदनेंदु ई श्लोकदल्लि हेळिदरिंद श्रीहरियु २५ ने यवनेंदु सूचितवागुवदु. अदरल्लियू जडप्रकृति चित्प्रकृतिएंदु प्रकृतियल्लि एरडु भेदविद्दरिंद जडप्रकृतियन्नु २४ ने दागि एणिसिदरे जीवनन्नु २५ ने यवनन्नागि एणिसि चित्प्रकृतियिंद सहितनाद विष्णुवन्नु २६ नेयवनन्नु अथवा चित्प्रकृतियु २६ नेयवळु श्रीविष्णुवु २७ नेयवनेंदु एणिसतक्कद्दु. ई हेळिद अर्थक्के प्रमाणविद्दरिंद ई अर्थवु मूलश्लोकद ' उरुक्रमः ' एंब शब्ददिंद सूचितवायितु. ई तत्वगळन्नु विष्णुवु प्रवेशमाडुवदक्के कारणवन्नु हेळुवरु– ई तत्वगळु एकत्रदल्लि शेरिदाग्यू बेरे बेरेयागिद्दु श्रीहरिय अधीनदल्लिद्दकारण ' शक्ति ' एंब शब्ददिंद करिसिगोंडु ' प्रसुप्तलोकतंत्राणां ' लोकवन्नु सृष्टिमाडतक्कशक्तियन्नु मुच्चिगोंडिद्द अथवा सृष्टिय साहित्यवन्नु तम्मल्लि मुच्चिट्टुगोंडिद्द ई तत्वगळिगे अभिमानिगळाद देवतिगळ ( हिंदिन अध्यायद कोनेभागक्के हेळिद ) प्रार्थनावाक्यवन्नु केळि, आ तत्वगळिगू तत्वेशरिगू सृष्टिमाडुव शक्तियन्नु कोडुववदक्के रमादेवियिंद सहितनागि परमात्मनु आ तत्वगळन्नु यावाग्ये प्रवेशमाडबेकेंदु इच्छिसिदनो, आग्ये एल्ल तत्वगळन्नु एकदा प्रवेशमाडिदनु. ' लोकतंत्राणां ' एंबल्लि तंत्रवेंदरे यावदरिंद कार्यवु माडल्पडुवदो, अदु तंत्रवेंदेनिसुवदु, अंदरे साधनवेंदर्थवु; सृष्टिमाडुवदक्के साहित्यगळेंदर्थवु. महदादितत्वगळु जगत्तन्नु सृष्टिमाडुव शक्तियुळ्ळवाद्दरिंद इवु विष्णुविन शक्तियेंदेनिसुववु. हागू रमादेवियू सृष्टिमाडतक्क शक्तियुळ्ळवळाद कारण शक्तिएंदेनिसुवळु एंब वचनगळे ई हेळिद अर्थक्के प्रमाणवागिरुववु. ई परमात्मनु तत्वगळल्लि प्रवेशमाडिद्दु काराग्रह ( बंधनमने ) प्रवेशमाडिदंतेयल्लवु; तानु स्वतंत्रनागि अवरिगे प्रेरणेमाडुत्त प्रवेशमाडिरुवनेंदु तोरिसुवदक्के ' ईश्वरः ' एंब शब्दवन्नु उपयोगिसिरुवरु. ॥ १ ॥ २ ॥

**सोऽनुप्रविष्टो भगवान् चेष्टारूपेण तं गणं ॥ भिन्नं संयोजयामास सुप्तं कर्म प्रबोधयन् ॥ ३ ॥**

निलये निलीनइव किमयं तूष्णीमास्ते किंचित्कर्माकार्षीदिति तत्राह सोऽनुप्रविष्टइति । " सर्वचेष्टकरूपेण स्वसामर्थ्येन केशवः । तानिभिन्नानितत्त्वानि योजयामासचांशत " इति । अनेन चास्यार्थो दर्शितः भिन्नं विश्लिष्टं प्रलये सुप्तं कर्माप्रतिबुद्धशक्तिकं सृष्टिनिमित्तमदृष्टं प्रबोधयन् कार्योन्मुखं कुर्वन् यद्यपीश्वरः स्वमनसैवाण्डं स्रष्टुं शक्तः तथापि कर्त्रा पुरुषेण सोपकरणेन भाव्यमिति दर्शयितुं संश्लिष्टो गणः ॥ ३ ॥

आ तत्वसमूहवन्नु प्रवेशमाडि ई परमात्मनु. मनेयल्लि बच्चिगोंडिद्द पुरुषनंते सुम्मने कुळितनो अथवा एनादरू केलसमाडिदनो, एंदरे हेळुवरु– ' यावत्तू चेष्टामाडतक्कस्वरूपवुळ्ळ तन्न सामर्थ्यदिंद केशवनु, आ प्रत्येकवागिद्द तत्वगळन्नु अवुगळ अंशगळिंद ओंदेकडेगे शेरिसिदनु. ' एंदु तत्वनिर्णयवेंब ग्रंथदल्लि हेळिद अर्थदिंद ई श्लोकद अर्थवु हेळिदंतायितु. प्रलयकालदल्लि स्तब्धवाद कार्यवन्नु सृष्टिप्रारंभकालदल्लि उद्योगवुळ्ळद्दन्नु माडिदनु. यद्यपि परमात्मनु तन्न मनसिनिंदले ब्रह्मांडवन्नु सृष्टिमाडुवदक्के समर्थनादाग्यू यावनादरू एनादरोंदु कार्यवन्नु माडबेकादरे आ कार्यक्के तक्काद यावत्तू साहित्यगळिंदले माडतक्कद्देंदु तिळिसुवदक्के ई यावत्तू तत्वगळन्नु सेरिसि केलसमाडिदनु. ॥ ३ ॥

**प्रबुद्धकर्मा दैवेन त्रयोविंशतिको गणः ॥ प्रेरितो जनयत्स्वाभिर्मात्राभिरपि पूरुषं ॥ ४ ॥**

**पंरेण विशता स्वस्मिन्मात्रया विश्वसृग्गणः ॥ चुक्षोभान्योन्यमासाद्य यस्मिन्लोकश्चराचरः ॥ ५ ॥**

किं कार्यं चकारेति तत्राह प्रबुद्धकर्मेति । प्रबुद्धंमुन्मुखीकृतं कर्मादृष्टं यस्य सः प्रबुद्धकर्मा दैवेन हरिणा प्रविश्य प्रेरितः त्रयोविंशतिको गणः स्वाभिर्मात्राभिरंशैः पुरुषस्य ब्रह्मणः शरीरत्वात्पुरुषशब्दवाच्यं ब्रह्मांडमजनयदित्यन्वयः । अधिपुरुषमितिपाठे अधिगतः पुरुषसूक्तवाच्यो यस्मिंस्तत्तथेत्यर्थः । " ईश्वरोदैवमुद्दिष्टं सर्वस्यापि प्रभुत्वत " इत्यतः पूर्वोक्तेश्वरो दैवशब्देन गृह्यते ॥ ४ ॥ एतदेव स्पष्टयति परेणेति । चुक्षोभ ब्रह्मांडाकारेण विकृतवान् यस्मिन्नंडे उत्पन्नः॥५॥

आमेले आ इप्पत्तुमूरु तत्वगळ समूहवु एनु माडितेंदरे हेळुवरु– श्रीहरियु आ तत्वगळन्नु प्रवेशमाडिद नंतर आ हरियिंद प्रेरितवागि ' प्रबुद्धकर्मा ' केलसमाडुवदक्के उद्युक्तवाद ( समर्थवाद ) क्रियाशक्तियुळ्ळदागि आ इप्पत्तुमूरु तत्वगळसमूहवु तंम तंम अंशगळिंद ब्रह्मदेवन शरीरवाद पुरुषनेंब शब्ददिंद करिसिगोळ्ळुव ब्रह्मांडवन्नु हुट्टिसितु. ' अधिपूरुषं ' एंब पाठविद्दरे पुरुषसूक्तदिंद होगळिसिगोळ्ळुव परमात्मनु यावदरल्लि प्रवेशमाडिदनो आ ब्रह्मांडवन्नु सृष्टिमाडितु एंदर्थवु. ' एल्लक्कू प्रभुवादकारण ईश्वरनेंदु करिसिगोळ्ळुव श्रीहरिये ' दैव ' एंब शब्ददिंद करिसिगोळ्ळुवनु, एंब प्रमाणदिंद हिंदे हेळिद परमात्मने ई श्लोकदल्लि हेळिद ' दैव ' एंब शब्ददिंद करिसिगोळ्ळुवनु. ॥ ४ ॥ इदे अर्थवन्ने स्पष्टमाडुवरु– परमात्मनु तंमल्लि प्रवेशमाडुवदरिंद आ तत्वगळ समूहवु तंम अंशदिंद विष्णुविन वीर्यस्वरूपदिंद विकारवन्नु होंदि चराचरात्मक (स्थावरजंगमात्मक )वाद लोकवुळ्ळ ब्रह्मांड ( जगत्तिन ) स्वरूपवन्नु होंदितु.॥५॥

**हिरण्मयः स पुरुषः सहस्रपरिवत्सरान् ॥ आंडकोश उवासाप्सु सर्वसत्वोपबृंहितः ॥ ६ ॥**

प्रथमक्षणं शरीरप्रवेशो हरेरनंतरं भोगिनश्चेतनस्येति दर्शयितुकामस्य हरेरंडप्रवेशमाचष्टे हिरण्मयइति । यस्य प्रेरणया तत्त्वगणोंडमजनयत् स हिरण्मयो ज्ञानानंदात्मककरचरणाद्यवयववान् पुरुषाख्यो हरिरांडकोशेंडकोशस्थाप्सु अंडकोशस्योदके शेषपर्यंके सहस्रपरिवत्सरानुवासेत्यन्वयः । प्रलये सर्वचेतनानां परमचेतनेनैकीभावइति शंकां निवारयति सर्वेति । सर्वसत्वैः सर्वजीवैरुपबृंहितो नत्वेकीभूतः अनेन निर्देहानां चेतनानां प्रलयेऽवस्थानं कथमिति शंका निरस्ता परमात्मन्यवस्थानोपपत्तेः॥६

आ उत्पन्नवाद ब्रह्मांडद शरीरदल्लि ( हुट्टिद ) मोदलने क्षणक्के श्रीहरिय प्रवेशवु, आनंतर शरीरभोगतेगेदुकोळ्ळुव ( जीव ) चेतन प्रवेशवु, एंदु तिळिसबेकेंब इच्छेयुळ्ळ श्रीहरियु ब्रह्मांडप्रवेशमाडिद संगतियन्नु हेळुवरु– याव परमात्मन प्रेरणेयिंद तत्वसमूहवु ब्रह्मांडवन्नु हुट्टिसितो आ ' हिरण्मयः ' ज्ञानानंदात्मकवाद कै-कालुमोदलाद अवयवगळुळ्ळ पुरुषनेंदु हेसरुळ्ळ श्रीहरियु ' आंडकोशे ' ब्रह्मांडकोश-( बोक्स )दल्लिद्द उदकदल्लि शेषपर्यंकदल्लि सहस्रवरुषगळवरेगे वासमाडिदनु. प्रलयकालदल्लि एल्ल चेतनगळू परमचेतननाद परमात्मनिंद कूडि एकीभाववन्नु होंदुववेंब संदेहवन्नु कळेयुवरु. ' सर्वसत्वोपबृंहितः ' अंदरे एल्ल जीवसमूहगळिंद युक्तनागि आ श्रीहरियु शेषशायियागि वासमाडिदनु. एल्ल जीवगळिंद ऐक्य होंदि वासमाडि-

१. परेण परमात्मना विश्वसृजां तत्वानां गणः मात्रया अंशेन अन्योन्यमासाद्य विष्णुवीर्यरूपेण परिणामं प्राप्य चुक्षोभ ब्रह्मांडाकारेण परिणत इत्यर्थः । –( या. ) २. प्रबुद्धं कार्योन्मुखीकृतं कर्म क्रियाशक्तिः अदृष्टं वा यस्य सः । –( या. )

दर्नेदल्लवु. हीगे हेळुवदरिंद देहविल्लद चेतनगळु प्रलयकालदल्लि ह्यागे इरुववेंब संदेहवु नाशमाडल्पट्टितु. अंदरे स्वरूपदेहदिंद ( स्थूलदेहविल्लदे परमात्मनन्नाश्रयमाडिकोंडु एल्ल जीवराशिगळु इरुववेंदु हेळुवदक्के संभवविरुवदु. ॥ ६ ॥

## स वै विश्वसृजा गर्भो दैवकर्मात्मशक्तिमान् ॥ विबभाजात्मनात्मानमेकधा दशधा त्रिधा ॥ ७ ॥

**सिसृक्षोर्हरेर्गर्भोदके बहुकालव्यापकेन निवासेन सृष्टिकथोपरतेति शंकां परीक्षितो हार्दां परिहरन्नंडांतर्वर्तिनो हरेर्विक्रमविशेषमाह स वा इति । यो गर्भोदके शेषपर्यंके शयानः स विश्वसृजां ब्रह्मांडं सृष्टवतां तत्त्वानां गर्भोंतर्यामी दैवं ब्रह्मादिदैवं तेष्वाधिक्यं कर्म प्राण्यदृष्टं सुखदुःखभोगसाधनमात्मशक्तिः प्रकृतिः नित्यमेतैर्युक्तत्वाद्दैवकर्मात्मशक्तिमान् ब्रह्मणो विराडाख्यं शरीरं सृष्ट्वा तत्प्रविश्यात्मना परप्रेरणामंतरेण स्वेच्छयात्मानं तद्देहहृदयादिनियामकत्वेन एकधादिविबभाज विभक्तवानित्यन्वयः। वा इत्यनेनोक्तार्थस्य ग्रंथांतरप्रसिद्धिद्योतकेन विश्वसृजां गर्भः कार्यात्मानमंडरूपमेकधादिभेदेन विबभाजेत्येतदपव्याख्यानं प्रत्याख्याति । स्वतो चेतनस्य कार्यकारणत्वशक्त्यदर्शनात् अप्रसिद्धत्वाच्चेति ॥ ७ ॥**

सृष्टि माडबेकेंब अपेक्षेयुळ्ळ श्रीहरियु ब्रह्मांडद वोळगिन उदकदल्लि शेषशायियागि बहुदिवस वासमाडुवदरिंद अवनु सृष्टिमाडबेकेंब कथेयु मुगिदितो ? एंदु परीक्षिद्राजन मनसिनोळगिन संदेहवन्नु परिहरिसुत्त, परमात्मनु माडिद पराक्रमविशेषगळन्नु हेळुवरु- याव परमात्मनु ब्रह्मांडदोळगिन उदकदल्लि शेषशायियागि वासमाडिद्दनो हागू ब्रह्मांडवन्नु सृष्टिमाडतक्क तत्वेशरिगे अंतर्नियामकनो आ परमात्मनु ' दैवकर्मात्मशक्तिमान् ' दैववेंदरे ब्रह्मदेवरे मोदलादवरु. कर्मवेंदरे आ देवतेगळे मोदलादवरल्लि प्राणिगळ अदृष्टवेंब अवरवर सुखदुःखभोगवेंब अधिकवाद कर्मवु; आत्मशक्तियंदरे प्रकृतियेंदर्थवु. नित्यदल्लियू ई मूररिंद युक्तनागि ( ' दैवकर्मात्मशक्तिमान् ' दैवशक्तियंदरे प्रभुत्ववु कर्मशक्तियंदरे यावत्तू जगद्व्यापारमाडतक्क क्रियाशक्तियु, आत्मशक्तियंदरे तन्न हेंडतियाद प्रकृतियु ई मूरु शक्तियुळ्ळवनेंदु यादवाचार्यर अभिप्रायवु. ) विराट् एंब हेसरुळ्ळ ब्रह्मदेवर शरीरवन्नु सृष्टिमाडि अदन्नु प्रवेशमाडि एरडनेयवर प्रेरणेयिल्लदे तन्निच्छेयिंदले ' आत्मानं ' तन्नन्नु ' एकधा दशधा त्रिधा ' एल्लर हृदयदल्लिरतक्क स्वरूपदिंद ओंदु प्रकारवागि प्राण-अपान-व्यान-उदान-समान-नाग-कूर्म-कृकल-देवदत्त-धनंजयएंब हत्तु प्रकार प्राणनियामकवाद हत्तु रूपगळिंद अध्यात्म-अधिदैव-अधिभूत इवुगळिगे नियामकवाद मूरु रूपगळिंद ' विबभाज ' बेरेबेरे स्वरूपगळन्नु धरिसिदनु. ई हेळिद अर्थवु एरडने ग्रंथगळल्लि प्रसिद्धवागिरुवदेंदु तोरिसुवदक्के ( ई श्लोकदल्लिय ) ' वा ' एंबदरिंद परकीयरु अर्थमाडतक्क ' विश्वसृजांगर्भः ' तत्वसमूहवु कार्यस्वरूपवाद ब्रह्मांडरूपवन्नु ओंदु हत्तु मूरु प्रकारवागि विभागमाडितेंदु हेळुव मातुगळु निवारणमाडल्पट्टवु. याकेंदरे स्वतः अचेतनवाद तत्वसमूहवु कार्यमाडुवदक्के असमर्थवादद्देंब मातु प्रसिद्धवादद्दे. ॥ ७ ॥

## एष ह्यशेषसत्वानामात्मांशः परमात्मनः ॥ आद्योऽवतारो यत्रासौ भूतग्रामो विभाव्यते ॥ ८ ॥

१. तथा च दैवशक्तिः प्रभुत्वं कर्मशक्तिः क्रियाशक्तिः आत्मशक्तिः स्वभार्यारूपा प्रकृतिः एतत्त्रितययुक्त इत्यर्थः । -( **या.** ) २. एकधा हृदयस्थरूपेण दशधा दशविधप्राणनियामकतया त्रिधा अध्यात्मादिनियामकतया । -( **या.** )

**ननु विश्वसृजां गर्भः आंडकोशएव भवेदेषह्यशेषसत्वानामात्मेति सर्वप्राण्याधारत्वेन परामर्शात्तदर्थं सृष्टत्वाच्चेति तत्राह एषहीति । नायमंडकोशस्य परामर्शः किंतु पुरुषेणात्मभूतेन वीर्यमाधत्त वीर्यवानिति यः पुरुषाख्यो हरिरभिहितः स एष परामृश्यते परमात्मनोंश इत्युक्तत्वादाद्योवतार इत्यवतारशब्देन विशेषितत्वाच्च नह्यंडकोशस्य हरेरवतारत्वनिर्देशः क्वचिद्दृष्टः श्रुतो वा तथाचायमक्षरार्थः यो महदादितत्वानि सृष्ट्वा तेषामंडसृष्टावस्वातंत्र्यं प्रकाश्यात्मानं तैःस्तावयित्वा तदनुग्रहाय सर्वचेष्टकरूपेण रमयासह प्रविश्य संयोज्य क्षोभयित्वा तदंशैरंडं सृष्ट्वा तत्प्रविश्य अप्सु सहस्रपरिवत्सरानुषित्वा तदंते ब्रह्मणो विराट्शरीरं सृष्ट्वा तद्देहेंद्रियादिनियामकत्वेनाविर्बभूव एष ह्यशेषसत्वानामात्मा नियामकः परमात्मनः स्वरूपांश आद्योऽवतार एतादृशमहिमेति शेष इति । कोसाविति तात्पर्यात् श्रद्धातिशयजननार्थं पूर्वोक्तमेवाह यत्रेति । यत्र यस्मिन्नाद्यावतारे पुरुषनाम्नि भूतग्रामो भूतसमूहो विभाव्यते सत्तां प्राप्य दृश्यते स इत्यर्थः। हिशब्द " आद्योवतारो विष्णोस्तु पुरुषोनामकीर्तित " इत्यादौ प्रसिद्धोयमर्थ इति दर्शयति ॥ ८ ॥**

ओळ्ळेदु, ई श्लोकदल्लि ' एषः '— एंब ई एतच्छब्ददिंद ' विश्वसृजां गर्भः '= तत्वगळ समूहवाद ब्रह्मांडकोशवे एंदु ग्रहिसतक्कद्दु, याकेंदरे ' एषह्यशेषसत्वानामात्मा ' एंदु सकलप्राणिगळिगे आधारवादद्देंदु ग्रहिसिदरिंदलू अदे उद्देशदिंदले सृष्टियादरिंदलू ( ब्रह्मांडकोशवेंतले ग्रहिसतक्कद्दु ) एंदरे हेळुवरु— ई श्लोकदल्लिय ' एषः ' एंब एतच्छब्ददिंद ब्रह्मांडकोशवेंदु ग्रहिसतक्कदल्लवु. हिंदे ६ ने अध्यायद ४ ने श्लोकदल्लि ' पुरुषेणात्मभूतेन वीर्यमाधत्तवीर्यवान् ' एंबल्लि पुरुषशब्दवाच्यनाद श्रीहरिएंदु यावनु हेळल्पट्टिरुवनो आ श्रीहरिये ई श्लोकदल्लिय ' एषः ' एंब पददिंद ग्रहिसल्पडुवनु; याकेंदरे इदु परमात्मन अंशवेंतलू मोदलने अवतारवेंदु अवतार शब्ददिंद ई एतच्छब्दक्के विशेषण विद्दरिंदलू ' एषः ' एंबदक्के ब्रह्मांडकोशवेंदु अर्थमाडलेशवल्लवु; ब्रह्मांडकोशवु परमात्मन अवतारवेंदु याव ग्रंथदल्लियू कंडिल्ल, एंदू केळिल्ल; आदकारण ई मुंदे हेळुवदे निश्चितवाद अर्थवु. याव परमात्मनु महत्तत्वमोदलादवुगळन्नु सृष्टिमाडि आ तत्वेशरिगे ब्रह्मांडसृष्टिमाडुवदक्के अस्वातंत्र्यवुंटेंदु प्रकटमाडि आ तत्वेशरिंद तानु स्तोत्रमाडिसिगोंडु अवर मेले अनुग्रहमाडुवदक्के, सकलप्राणिगळिगे चेष्टा ( व्यापार ) माडिसतक्क स्वरूपदिंद तानु रमादेवियिंद कूडि आ तत्वेशरल्लि प्रवेशमाडि, ओंदक्कोंदु तत्वगळन्नु संयोगमाडि, अवर शक्तियन्नु प्रबलपडिसि, आ तत्वगळ अंशदिंद ब्रह्मांडवन्नु सृष्टिमाडि, आ ब्रह्मांडवन्नु तानु प्रवेशमाडि आ ब्रह्मांडदोळगिन उदकदल्लि सहस्रवरुषगळवरेगे वासमाडि आ मेले ब्रह्मदेवन विराट् शरीरवन्नु सृष्टिमाडि आ विराट् शरीरक्कू अदर इंद्रियगळिगू नियामकवाद स्वरूपदिंद प्रादुर्भूतनादनो, अदे परमात्मने एल्ल प्राणिगळिगे अंतर्नियामकनु श्रीहरिय स्वरूपांशनु अवने इंथ महिमेयुळ्ळ मोदलने अवतारनेंदेनिसुवनु. अहा, अवन्यारेंब तात्पर्यदिंद अतिशयभक्तियन्नु हुट्टिसुवदक्के मोदलु हेळिद्दन्ने हेळुवरु— याव पुरुषनेंब हेसरुळ्ळ मोदलने अवतारदल्लि सकलप्राणिगळ समूहवू चेष्टामाडतक्क शक्तियन्नु होंदि तोरुवदो, अवने ई ' एषः ' एंब पददिंद ग्रहिसल्पडुवनु. ई श्लोकदल्लिय ' हि ' शब्दवु ई मेले हेळिद अर्थवु— ' आद्योवतारोविष्णोस्तु पुरुषोनामकीर्तितः । असृजत्समहत्तत्वं सएवांडसमाविशत् । सब्रह्मणोहृदिस्थित्वा हृदयंचेतिकीर्त्यते ' एंब प्रमाणप्रसिद्धवादद्देंदु तोरिसुवदु. ॥ ८ ॥

## सोध्यात्मं साधिदैवं च साधिभूतमिति त्रिधा ॥ विराट्प्राणो दशविध एकधा हृदयेन च ॥ ९ ॥

१. अध्यात्मदेवैः सहितं तन्नियामकं रूपं प्रथमं । अधिदैवनियामकं द्वितीयं अधिभूतदेवनियामकं तृतीयं इति अनेन अभिप्रायेण त्रिधा उक्त इति शेषः । -( श्री. )

एकधेत्याद्युक्तं विवृणोति । साध्यात्ममिति । क्रमोलंघनं प्राधान्यदर्शनाय आध्यात्मादित्रित्वस्य नित्यत्वात् " द्वादशानींद्रिण्याहु " रितिश्रुतेरिंद्रियाणां दशविधत्वस्य प्रायिकत्वात् हृदयस्य ज्ञानविवक्षयैकत्वादंतःकरणविवक्षया चातुर्विध्यात् अध्यात्मसाहित्येन वर्तमानरूपमित्यादि योज्यं । विशेषेण राजनाद्विराट् प्रकृष्टचेष्टकत्वात्प्राणनामा ब्रह्मांतर्यामी । ब्रह्मदशेंद्रियांतस्थत्वेन दशविधः ब्रह्महृदयस्थरूपेणैकविधः चशब्दस्त्वध्यात्मादिषु त्रिषु श्रोत्रादींद्रियेषु हृदये च प्रवेशसंभवाद्भेदः संख्याभेदः " तत्सृष्ट्वा तदेवानुप्राविश-" दिति श्रुतिसिद्धत्वायुज्यत इति दर्शयति । प्राणादि नागादि दशप्राणा अपि अध्यात्मादिभेदेन त्रिधा ज्ञातव्याः । तदुक्तं " प्राणादिपंचकंचैव तथा नागादिपंचकं । एवंतुदशधाप्राणा अध्यात्मादित्रिधाखिला " इति । अधिभूतमपि द्विधा प्रधानवायुत्वगादिभेदेन । " प्राणःप्रथमजोयस्तु प्रधानोवायुरीरितः । त्वगात्माद्यास्तुतत्पुत्रा द्विधाभूतमुदाहृत-" मितिवचनादिदं प्रसंगादुक्तं ॥ ९ ॥

हिंदे ७ ने श्लोकदलि ' विबभाजात्मनात्मानमेकधादशधात्रिधा ' एंबलि हेळिद, परमात्मन अवतारप्रभेदवन्नु मूलग्रंथकाररे कंठोक्तियिंद हेळुवरु-( इदन्नु ७ ने श्लोकद व्याख्यानदलि नावु संक्षेपदिंद हेळिरुवेवु )-हिंदे ७ ने श्लोकदलि हेळिद क्रमनोडलु मोदलु ओंदु प्रकारवाद रूपवन्नु आ मेले हत्तुप्रकारवादरूपवन्नु आ नंतर मूरु प्रकारवाद रूपवन्नु हेळतक्कद्दित्तु हीगे हेळुवदन्नु बिट्टु मोदलिगे मूरु प्रकारवाद रूपवन्नु ई श्लोकदलि ( क्रमवन्नु मीरि ) याके हेळिदेरंदरे-अध्यात्म-अधिदैव-अधिभूतगळेंब ई मूरु नित्यवादकारण ई समूहदलि इवे मुख्यवाददवेंदु तोरिसुवदके, हिंदे हेळिद क्रमदंते ओंदु प्रकारद रूपवन्नु मोदलु हेळुवदु बिट्टु ई मूरन्नु मोदलु हेळिरुवरु-( आ मूरु रूपगळु यावेंदरे ) अध्यात्मदेवतिगळिंद सहितवागि आ देवतिगळिगे नियामकवाद अध्यात्मवेंब रूपवु मोदलनेदु, अधिदैव नियामकवाद रूपवु एरडनेदु; अधिभूतदेवतिगाळिगे नियामकवाद भगवद्रूपवु मूरनेदु; 'हत्तेरडु इंद्रियगळेंदु हेळुवरु' एंब श्रुतियलि मनःसु, साक्षि ई एरडरिंद सहितवागि हत्तेरडु एंब तात्पर्यविरुवदु. आदरे लोकदलि ई मनःसु, साक्षि एंब एरडन्नु बिट्टु ५ ज्ञानेंद्रियगळु ५ कर्मेंद्रियगळु ई प्रकार हत्तुइंद्रियगळे रूढियलिरुववु. हृदयवेंब पदवन्नु ज्ञानपरवागि अर्थमाडलु ओंदे एंदु एणिसल्पडुवदुः अंतःकरणपरवागि अर्थमाडलु अध्यात्म-अधिदैव-अधिभूत-अंतःकरणरूपगळेंब भेददिंद नाल्कुप्रकारवागिरुवदु. ' विराट् ' अत्यत प्रकाशवागतक रूपके ' विराट् ' एन्नुवरु, ब्रह्मनलि निंतु अत्यंतवागि सकलव्यापारगळन्नु माडिसतक्कवनादकारण श्रीहरियु प्राणनेनिसुवनु; ब्रह्मदेवन हत्तु इंद्रियगळलि इद्दद्दरिंद श्रीहरियु हत्तु प्रकारनागिरुवनु; ब्रह्मदेवन हृदयदलिद्दद्दरिंद ' एकविध ' ओंदे प्रकार इरुवनु. ' ब्रह्मांडवन्नु सृष्टिमाडि आ ब्रह्मांडदलि ताने प्रवेशमाडिदनु ' एंब श्रुतियलि हेळिदंते अध्यात्ममोदलाद मूररलि, श्रोत्रमोदलाद हत्तरलि, ओंदु हृदयदलि, ई प्रकार ई वस्तुगळलि श्रीहरियु प्रवेशमाडिद्दरिंद प्रवेशमाडिद आया वस्तुगळ संख्याभेददिंद परमात्मन भेदवु संभविसुवदे होर्तु वस्तुगत्या अवनलि भेदविल्लवेंदु ई श्लोकदलिय ' च ' शब्दवु हेळुवदु. प्राणमोदलाद हत्तु प्रकार वायुवादरू अध्यात्म-अधिदैव-अधिभूतगळेंब भेददिंद मूरु प्रकार इरुववु. ( इदके श्रीमदाचार्यरु हेळिद प्रमाणवु- ) प्राणमोदलाद ऐदु, नागमोदलाद ऐदु, ई प्रकार भौतिकवायुविनाश्रि

१. त्रैविध्यं सर्वदेव सहितस्य परमात्मनः दशविधत्वं मुख्यप्राणतत्पुत्रसहितस्य एकविधत्वं केवलस्येति संख्यातारतम्यमभिप्रेत्य क्रमोलंघनं ।-( श्री. ) २. प्राणइति एकवचनांतं पाठमवलंब्य प्राणो दशविधएव अध्यात्मादिभेदेन त्रिधा यत्रोक्तास्तेऽखिलाः तत्वाभिमानिन इत्यत्र व्याख्यातं । -( श्री. )

हत्तु प्रकार भेदवु; अध्यात्ममोदलाद भेदवुळ्ळ वायुगळु तत्वाभिमानिगळु अदरल्लियू अधिभूत वायुवादरू एरडु प्रकारवु- प्रधानवायुवेंतलू त्वगादिवायुवेंतलू इरुवदु. मुख्यवायुविनिंद मोदलु हुट्टिदवनु प्रधानवायुवु; त्वक् आत्मा इवे मोदलाद वायुगळु आ प्रधानवायुविन मक्कळेंदु हेळल्पट्टिरुवदु; ई प्रकृतके हेळतक्क प्रसंगबंदकारण इल्लि स्वल्पु हेळिरुवेवु. ॥ ९ ॥

## स्मरन्विश्वसृजामीशो विज्ञापितमधोक्षजः ॥ विराजमतपत्स्वेन तेजसैषा विवृद्धये ॥ १० ॥

इदानीं तत्वानामस्माकमायतननिर्माणे शक्तिं देहीति यदुदितं तत्करणप्रकारमाह । स्मरन्निति । अधोक्षजो विराजं ब्रह्मशरीरमंतर्यामिरूपेण प्रविश्य स्वेन तेजसा तत् वैराजाख्यं ब्रह्मशरीरं एषामग्न्यादिदेवानां यथा आयतनानि भवंति तथा विवृद्धयेऽतपदवकाशवदकरोदित्यन्वयः॥ १० ॥

इन्नु तत्वाभिमानि देवतिगळु नमगे स्थल ( ब्रह्मांड ) निर्माणमाडतक्क शक्तियन्नु नमगे कोडु एंदु परमात्मनन्नु एनु केळिकोंडिद्दरो अवर विज्ञापनेनडिसिद प्रकारवन्नु हेळुवरु- आ तत्वेशरु तन्नन्नु विज्ञापने माडिकोंडद्दन्नु परमात्मनु स्मरणेमाडिकोंडु विराट् एंब हेसरुळ्ळ ब्रह्मशरीरवन्नु अंतर्यामिस्वरूपदिंद श्रीहरियु प्रवेशमाडि तन्न तेजःसिनिंद आ वैराजवेंब ब्रह्मशरीरवन्नु ई अग्निमोदलाद तत्वेशरिगे इरुवदके स्थळवु बागागबेको, हागे अभिवृद्धियागुवदके ' अतपत् ' ओळगे ( ब्रह्मांडदोळगे ) अवकाशवुळ्ळद्दन्नु ( टोळ्ळागुवंते ) माडिदनु. ॥ १० ॥

## अथ तस्याभितप्तस्य कतिचायतनानिह ॥ निरभिद्यंत देवाना तानि मे गदतः शृणु ॥ ११ ॥

तापकार्यमाह अथेति । देवानां यान्यायतनानि तस्याभितप्तस्य शरीरस्य सकाशान्निरभिद्यंत विवृतानि अथ गदतो मम सकाशात्तानि शृण्वित्यन्वयः । कतिचेत्येकं पदं चशब्दः चित्पर्यायः हेत्यनेन " सोद्ध्यएवपुरुषंसमुद्धृत्यामूर्च्छयत्तमभ्यतपत्तस्याभितप्तस्यमुखंनिरभिद्यते-" त्यादिसमाख्या सूचयति ॥ ११ ॥

श्रीहरियु तन्न तेजःसिनिंद ब्रह्मांडवन्नु प्रकाशमाडिद्दर कार्यवन्नु हेळुवरु- ( शुकाचार्यरु संबोधनमाडुवरु ) हे परीक्षितने, आमेले आ श्रीहरिय तेजःसिनिंद प्रकाशमंतवाद आ वैराजवेंब ब्रह्मशरीरके ( ब्रह्मांडके ) तत्वाभिमानिदेवतिगळु इरुवदके केलवु अवयवगळु वडमूडिदवु, अवुगळन्नु निनगे हेळुवेनु अदन्नु केळु. ई श्लोकदलि ' कतिच ' एंबलि कति+च एंदु भिन्न पदवन्नु माडदे ' कतिच ' एंदु ओंदे पदवु; अदरलियू च एंबदु चित् एंबदर स्थानदलिरुवदु; अंदरे ' कतिचित् '= केलवु एंब अर्थवन्नु हेळुवदु. आ परमात्मनु प्रलयोदकदिंद ब्रह्मांडवन्नु मेलके एत्ति तेगेदु अदन्नु प्रकाशमाडिदमेले आ ब्रह्मांडके मुखवु उत्पन्नवायितु. ' एंदु एरडने ग्रंथदलि हेळिद अर्थके ई श्लोकदलि हेळिद अर्थवु सरियादद्देंदु 'ह' एंब पदवु सूचिसुवदु. ११

## तस्याग्निरास्यं निर्भिन्नं लोकपालोऽविशत्पदं ॥ वाचा स्वांशेन वक्तव्यं ययासौ प्रतिपद्यते ॥ १२ ॥

शरीरावयवेभ्यो मुखलक्षणावयवस्य प्राधान्यज्ञापनाय तदुत्पत्तिं तदभिमान्यभिमानोत्पत्तिं चाह तस्येति । तस्य ब्रह्मांतर्यामिणो विवक्षोर्हरेरास्यं मुखसंज्ञायतनं यन्नि-

१ सामान्यत उक्तस्याध्यात्मादिभेदस्य विशेषतः प्रतिपादनायायं श्लोकः । अत्र प्रथमनिर्दिष्टं अधिदैवं यद्वागादींद्रियं तदभिमानिरूपं तदध्यात्मं । यच्च प्रतिपत्तव्यतयोक्तं तदभिमानिरूपं च अधिभूतमिति ज्ञेयं । ( श्री. )

भिन्नं विवृतं तत्पदं स्थानं लोकपालोऽग्निर्वाचा वागिंद्रियाख्यस्वांशेन सहाविशदित्यन्वयः। "अग्निर्वाग्भूत्वामुखंप्राविश-"दितिश्रुतिः। यया वाचा येन वागिंद्रियेण ब्रह्मशरीरवर्ती हरिर्वक्तव्यं वागिंद्रियविषयं व्यवहाराख्यं प्रतिपद्यते विज्ञाय व्यवहरतीत्यन्वयः। उत्तरग्रंथा एवमेव व्याख्येयाः ॥ १२ ॥

शरीरद अवयवगळल्लि मुखवेंबदे श्रेष्ठवादद्देंदु तिळिसुवदक्के आ ब्रह्माडक्के मुखवु मोदलु हुट्टितेंतलु उत्पन्नवाद आया अवयवगळल्लि, आया तत्वाभिमानिदेवतिगळिगे इदु तम्म स्थान-वेंदु अभिमानहुट्टिद मेगतियन्नू हेळुवरु- आ विराट् ब्रह्मदेहदल्लि अंतर्यामियाद मातांडबेकेंब इच्छेयुळ्ळ श्रीहरिगे मुखवेंब स्थानवु बडमूडितो, अदरल्लि लोकपालकनाद अग्नियु तन्न कर्तव्यवाद वाग्व्यापार-( मातांडोणवेंब व्यवहार ) दिंद सहितनागि प्रवेशमाडिदनु. इदरंते 'अग्नियु वाग्व्यापारस्वरूपनागि मुखवन्नु प्रवेशमाडिदनु' एंदु श्रुतियु हेळुवदु; याव वागिंद्रियदिंद विराट् ब्रह्मशरीरदल्लिद्द श्रीहरियु नालिगे एंब इंद्रियदिंद मातांडबेकेंलसवु नडेयुवदेंदु लोकदल्लि प्रकटमाडि व्यवहरिसुवनु. ई प्रकारद मुंदिन ग्रंथदल्लि; अंदरे ई मुंदे हेळतक्क प्रतियोंदु इंद्रियगळू आया इंद्रियाभिमानिदेवतिगळू हीगे प्रकटरादरेंब अर्थवन्नु अल्लल्लि तिळियतक्कद्दु. ॥ १२ ॥

**निर्भिन्नं तालु वरुणो लोकपालोऽविशद्धरेः ॥ जिव्हयांशेन च रसान्ययासौ प्रतिपद्यते ॥ १३ ॥ निर्भिन्ने अश्विनौ नासे विष्णोराविशतां पदं ॥ घ्राणेनांशेन गंधस्य प्रतिपत्तिर्यतो भवेत् ॥ १४ ॥ निर्भिन्ने अक्षिणी त्वष्टा लोक पालोऽविशत्प्रभोः ॥ चक्षुषांशेन रूपाणां प्रतिप्रत्तिर्यतो भवेत् ॥१५॥ निर्भिन्नान्यथ चर्माणि लोकपालोऽनिलोऽविशत् ॥ प्राणेनांशेन संस्पर्शं येनासौ प्रतिपद्यते ॥१६॥ कर्णावस्य विनिर्भिन्नौ धिष्ण्यं स्वं विविशुर्दिशः ॥ श्रोत्रेणांशेन शब्दस्य सिद्धिं येन प्रपद्यते ॥१७॥ त्वचमस्य विनिर्भिन्ना विविशुर्धिष्ण्यमोषधीः ॥ अंशेन रोमभिः कंडूं यैरसौ प्रतिपद्यते ॥१८॥ मेढ्रं तस्य विनिर्भिन्नं स्वधिष्ण्यं क उपाविशत् ॥ रेतसांशेन येनासावानंदं प्रतिपद्यते ॥ १९॥ गुदं पुंसो विनिर्भिन्नं मित्रो लोकेश आविशत् ॥ पायुनांशेन येनासौ विसर्गं प्रतिपद्यते ॥२०॥**

तालु जिव्हामूलं असौ हरिः प्रतिपद्यते जानाति ॥ १३ ॥ नासे नासिके ॥ १४ ॥ १५ ॥ चर्माणि त्वगिंद्रियस्थानानि ॥ १६ ॥ १७ ॥ ओषधीरोषध्यभिमानिदेवताः अस्य हरेः रोमभिरंशेन ॥ १८ ॥ कः प्रजापतिः रेतसा गुह्येंद्रियेणानंदं मैथुनोत्थसुखं ॥ १९ ॥ विसर्गं धातुमलोत्सर्जनादिक्रियां ॥ २० ॥

आमेले परमात्मनु इरतक्क आ विराट्देहक्के तालुप्रदेशवु उत्पन्नवायितु, अदरल्लि वरुणनेंब लोकपालकनु प्रवेशमाडिदनु. आ वरुणनु प्रवेशमाडिद नालिगेयिंद रसगळन्नु ( रुचिगळन्नु )

१. यमश्च मित्रावरुणकुबेराश्च दिगीश्वराः इत्यैतरेयभाष्ये उक्तं । २. त्वगिंद्रियस्याभिमान्यंतरं विषयांतरं च दर्शयन्नाह । त्वचमस्येति । ओषधिदेवाः पारिजाताद्याः । –( या. )
३. व्यवहरतीति यावत् । –( या. )

तिळिदुकोळ्ळुव व्यवहारवन्नु विष्णुवु नडेसुवनु. ॥ १३ ॥ विष्णुविन सन्निधानवुळ्ळ आ विराट्देहक्के एरडु नाशिकाद्वारगळु उत्पन्नवादवु; अवुगळल्लि अश्विनिदेवतिगळु प्रवेशमाडिदरु. आ घ्राणेंद्रियवेंब भागदिंद गंधद ज्ञानवागतक्क व्यवहारवु नडेयुवदु. ॥ १४ ॥ आमेले आ विराट्देहक्के एरडु नेत्रगळु उत्पन्नवादवु; अवुगळल्लि सूर्यनेंब लोकपालकनु प्रवेशमाडिदनु. आ कण्णुगळिंद ( कप्पु-केंपुमोदलाद ) रूपगळन्नु तिळकोळ्ळुव व्यवहारवु नडेयुवदु. ॥ १५ ॥ आमेले आ विराट्देहक्के चर्मगळु अंदरे त्वगिंद्रियवु इरतक्क स्थानगळु उत्पन्नवादवु; अवुगळल्लि वायुवेंब लोकपालकनु प्रवेशमाडिदनु. आ प्राणनेंब मुख्य वायुविनिंद शीत-उष्ण-मृदु-कठिणमोदलादद्दु तिळकोळ्ळुव व्यवहारवु नडेयुवदु. ॥ १६ ॥ आमेले आ विराट्देहक्के किविगळु उत्पन्नवादवु; आ किविगळल्लि तावु इरतक्क स्थानवेंदु यम-मित्रावरुण-कुबेर-इवरेमोदलाद देवतिगळु प्रवेशमाडिदरु. अल्लि श्रोत्रेंद्रियवेंब भागदिंद शब्दसंबंधवाद व्यापारवु नडेयुवदु. ॥१७॥ आमेले आ विराट्देहक्के त्वगिंद्रियवु ( चर्मदल्लि आश्रयिसिगोंडिरुवदु ) उत्पन्नवायितु. अदरल्लि औषधिगळिगे अभिमानिगळाद पारिजातमोदलाद देवतिगळु प्रवेशमाडिदरु. अल्लि रोमकूपगळ भागदिंद 'कंडूयन' तिंडियिंद तुरिसुव व्यवहारवन्नु ई श्रीहरियु नडेसुवनु. ॥ १८ ॥ आमेले आ विराट्देहक्के 'मेढ्र' गुह्येंद्रियवु ( अंदरे मूत्रद्वारवु ) उत्पन्नवायितु. अल्लि तानु इरतक्क स्थानवेंदु 'क' एंब प्रजेश्वरनु ( दक्षप्रजेश्वरनु ) प्रवेशमाडिदनु. अल्लि मैथुनव्यवहारदिंद उत्पन्नवाद रेतःसिन भागदिंद आनंदवागुवदु. ॥ १९ ॥ आमेले आ विराट्देहक्के गुदद्वारवु उत्पन्नवायितु. अल्लि मित्रनेंब लोकपालकनु प्रवेशमाडिदनु. अल्लि पायु एंब भागदिंद मलविसर्जन-( देहदोळगिन कश्मलवन्नु होरगे हाकोण ) दिंद श्रीहरियु व्यवहार नडेसुवनु. २०

**हस्तावस्य विनिर्भिन्नाविंद्रः स्वर्पतिराविशत् ॥ वार्तयांशेन पुरुषो यया वृत्तिं प्रपद्यते ॥ २१ ॥ पादावस्य विनिर्भिन्नौ लोकेशो विष्णुराविशत् ॥ गत्या स्वांशेन पुरुषो यया प्राप्यं प्रपद्यते ॥२२॥ हृदयं चास्य निर्भिन्नं चंद्रमा धिष्ण्यमाविशत् ॥ मनसांशेन येनासौ विक्रियां प्रतिपद्यते ॥ २३ ॥ ॥ ॥ ॥ ॥ ॥**

"इंद्रोवृषात्मशक्रार्केषु-" इत्यभिधानादिंद्रशब्दस्य पुरंदरादन्यविषयत्वनिरासाय स्वर्पतिरित्युक्तं वार्तया हस्तेंद्रियेणांशेन वृत्तिमादानाख्यां ॥ २१ ॥ गत्या गतिसाधनपादेंद्रियेण ॥ २२ ॥ हृदयं मनोनिवासस्थानं मनसेंद्रियेण विक्रियां संकल्पविकल्परूपां ॥ २३ ॥

आमेले आ विराट् देहक्के एरडु कैगळु उत्पन्नवादवु; अवुगळल्लि स्वर्गपतियाद देवेंद्रनु प्रवेशमाडिदनु. आ कैगळल्लि केलसमाडुव भागदिंद आ विराजांतर्गतनाद श्रीहरियु सकल कोडुव तेगेदुकोळ्ळुव व्यवहारवन्नु नडेसुवनु. ई श्लोकदल्लि इंद्रनेंब शब्दप्रयोगमाडिरलु 'स्वर्पतिः' एंब हेचिन विशेषणवु याकेंदरे 'इंद्र' एंब शब्दवु श्रेष्ठदल्लियू आत्मनल्लियू सूर्यनल्लियू प्रयोगविदेरिंद इल्लि इंद्र एंब शब्दक्के देवेंद्रने एंदु अर्थमाडबेकेंदु तिळिसुवदक्के 'स्वर्पतिः' एंब विशेषणविरुवदु. ॥ २१ ॥ आमेले ई विराट् ब्रह्मदेहक्के पादगळु उत्पन्नवादवु. अल्लि पादाभिमानियाद ( इंद्रनपुत्रनाद ) जयंतनु प्रवेशमाडिदनु. आ जयंतनिगे आश्रयनागि श्रीविष्णुवु इरुवने होर्तु पादाभिमानियु विष्णुवेंदल्लवु; वोडाडुवदक्के साधकवाद पादवेंब इंद्रियदिंद

१. अत्र पाददेवो जयंतः विष्णुस्तु उपेंद्ररूपेण तदाश्रयतयैवोक्तः न त्वभिमानितयेत्यर्थः । –( या. )

होसदागि संपादिसतक्कद्दन्नु श्रीविष्णुवु होंदिसुवनु. ॥ २२ ॥ आमेले आ विराट् देहक्के मनःसु इरतक्क हृदयवु उत्पन्नवायितु. अल्लि चंद्रनु तन्नस्थानवेंदु प्रवेशमाडिदनु. आ हृदयदल्लि मनसिन व्यापारवाद संकल्पविकल्पगळल्लु ( संकल्पवेंदरे इदन्नु माडबेकेंब निश्चयतनवु, विकल्पवेंदरे इदु माडिदरे साधकवो बाधकवो एंब विचारवु ) चंद्रनल्लिद्द परमात्मनु नडेसुवनु. ॥२३॥

**आत्मानं चास्य निर्भिन्नं वाचस्पतिरुपाविशत् ॥ बुद्ध्या स्वांशेन येनासौ निश्चयं प्रतिपद्यते ॥ २४ ॥ अहं चास्य विनिर्भिन्न-मभिमानोऽविशत्पदं ॥ कर्त्रा स्वांशेन येनासौ कर्तव्यं प्रतिपद्यते ॥ २५ ॥ सत्वं चास्य विनिर्भिन्नं महान् धिष्ण्यमुपाविशत् ॥ चित्तेनांशेन येनासौ विज्ञानं प्रतिपद्यते ॥ २६ ॥**

आत्मानं आत्मनाडीविशेषमुत्पन्नं वाचस्पतिर्बृहस्पतिः बुद्ध्या स्वांशेनाविशत् यया बुद्ध्या असौ हरिर्नियतो ब्रह्मा निश्चयं प्राप्नोति । "आत्मनाड्यांतथा बुद्धिस्तत्रस्थश्चबृहस्पति-"रित्यत आत्मशब्देनात्र नाड्येवोच्यते ॥ २४ ॥ अस्य ब्रह्मणो देहस्य निर्भिन्नमहन्नामनाडीविशेषं अभिमानोहंकारो हरेः पदं स्वस्थानमविशत् कर्त्रा स्वांशेन अहंकर्तेत्यभिमानेन सह येन कर्त्रंशेन ॥ २५ ॥ महान् ब्रह्मा सत्त्वं सत्त्वनाडीविशेषं धिष्ण्यं स्वस्थानं चित्तेनाविशत् असौ ब्रह्मांतर्यामी ब्रह्मा च। "शतंचैकास्यहृदयस्यनाड्य" इतिश्रुतेः। बहुत्वान्नाडीनां किमेते विशेष्योच्यंतइति चेदुच्यते ब्रह्मनाड्या अवांतरत्वज्ञापनाय एतयोर्मुख्याभिमानी ब्रह्माचेति। तदुक्तं "अहंसत्त्वमितिद्वेधा ब्रह्मनाड्याअवांतरं । कर्तृनामात्वहंकारस्त्वहंनाड्यांव्यवस्थितः। सत्वनाड्यांतथाचित्तमभिमानोहरस्तथा । अहंनाड्यांसत्वनाड्यां ब्रह्माचैवव्यवस्थित" इति ॥ २६ ॥

आमेले आ ब्रह्मांडक्के 'आत्मा' एंब नाडीविशेषवु उत्पन्नवायितु. अदरल्लि बृहस्पतियु बुद्धि एंब तन्न अंशदिंद प्रवेशमाडिदनु. याव बुद्धियिंदले वेदप्रतिपाद्यनाद परब्रह्मनु निश्चयवन्नु होंदुवनु. 'आत्मनाडियल्लि बुद्धियिरुवदु, अल्लि बृहस्पतियिरुवनु,' एंब प्रमाणदिंद ई श्लोकदल्लि हेळिद आत्मशब्ददिंद आत्मनाडी एंतले अर्थमाडतक्कद्दु. ॥ २४ ॥ आमेले ई ब्रह्मदेहक्के अहं एंब विशेषवादनाडियु उत्पन्नवायितु. अदरल्लि 'अभिमानः' अहंकारतत्वाभिमानियाद रुद्रनु प्रवेशमाडिदनु. अल्लि अभिमानद भागदिंद रुद्रांतर्गतनाद श्रीहरियु 'कर्तव्यं प्रतिपद्यते' इदु माडतक्कद्देंदु तिळिसुवनु. ॥ २५ ॥ आमेले आ विराट् ब्रह्मशरीरक्के सत्वनाडी एंबदु उत्पन्नवायितु. अल्लि महान् एंदु करिसिगोळ्ळुव ब्रह्मनु प्रवेशमाडिदनु. आ ब्रह्मांतर्यामियाद ब्रह्मनामकनाद श्रीहरियु आ सत्वनाडियल्लिद्दु चित्तनियामकनागि 'विज्ञानंप्रतिपद्यते' विशेषवाद तत्वज्ञानद व्यवहार माडिकोडुवनु. 'नूराओंदु नाडीगळु ई हृदयदल्लिरुवु' एंदु श्रुतियु हेळुवंते देहदल्लि अनेक नाडीगळु इरलु अवुगळन्नेल्ल हेळुवदन्नु बिट्टु ई नाडीगळन्ने हेचागि याके हेळिदेरेंदरे ई नाडीगळु एल्ल नाडीगळल्लि श्रेष्ठवाद ब्रह्मनाडियोळगिन अवांतरभेदवुळ्ळवु; ( इदक्के प्रमाणवु ) अहंनाडि एंतलू सत्वनाडि एंतलू ब्रह्मनाडियल्लि अवांतरभेदविरुवदु. कर्तृनामकवाद अहंकारतत्वाभिमानियाद रुद्रनु अहंनाडियल्लिरुवनु. सत्वनाडियल्लि चित्ताभिमानियाद हरनु नियामकनागिरुवनु, मत्तू अहंनाडियल्लियू सत्वनाडियल्लियू ब्रह्मनु नियामकनागिरुवनु. ॥ २६ ॥

**शीर्ष्णोऽस्य द्यौर्धरा पद्भ्यां खं नाभेरुदपद्यत ॥ गुणानां वृत्तयो येषु प्रतीयंते सुरादयः ॥ २७॥ औत्पत्तिकेन सत्त्वेन दिवं देवाः प्रपेदिरे ॥ धरां रजःस्वभावेन पणयो ये च ताननु २८ तार्तीयेन स्वभावेन भगवन्नाभिमाश्रिताः ॥ उभयोरंतरं व्योम ये रुद्रपार्षदा गणाः २९**

शीर्ष्णः शिरसः धरा भूमिः खमंतरिक्षं येषु प्राणिषु सत्वादिगुणानां वृत्तयः सुखकर्मप्रमादलक्षणाः स्वतो दृश्यंते तेषु लोकेषु सुरासुरादयो वसंतीतिशेषः आदिशब्देन मनुष्या रुद्रपार्षदगणा गृह्यंते ॥ २७ ॥ एतदेव विवृणोति औत्पत्तिकेनेति औत्पत्तिकेन स्वाभाविकेन सत्वेन स्वाभाविकसात्विकत्वात् पणयो हानोपादानव्यवहारं कुर्वंतो मनुष्याः ये च तान् पणीननु अनुगतास्तेपि ॥ २८ ॥ तार्तीयेन तामसेन स्वभावेन भगवन्नाभिमंतरिक्षमाश्रिताः रुद्रपार्षदगणाः उभयोर्द्यावापृथिव्योरंतरं मध्यं व्योमाश्रिता इतिशेषः ॥ २९ ॥

इदूवरेगू विराट् ब्रह्मदेहदल्लि एल्ल तत्वेशरप्रवेशवन्नु हेळि, इन्नु आ विराट् ब्रह्मदेहदिंद मूरुलोकगळु उत्पन्नवाद संगतियन्नु हेळुवरु—ई विराट् ब्रह्मशरीरद शिरःसिनिंद द्युलोकवु ( स्वर्गलोकवु ) उत्पन्नवायितु; पादगळिंद भूलोकवु उत्पन्नवायितु; नाभियिंद अंतरिक्षलोकवु उत्पन्नवायितु. ई मूरुलोकगळल्लि सत्वरजस्तमोगुणगळ व्यापारवाद सुख-कर्म-प्रमादगळेंब स्वभाववुळ्ळ देवतिगळु मनुष्यरु दैत्यरु रुद्रभृत्यरु वासिसुवरु. ॥ २७ ॥ ई हिंदे हेळिदन्ने विवरिसुवरु—स्वाभाविक सत्वगुण ( सहजवाद समाधानगुण ) उळ्ळवराद्दरिंद देवतिगळु स्वर्गलोकवन्नु होंदिदरु; रजोगुणद स्वभावदिंद कोट्टुतोगोळ्ळुव व्यवहारमाडतक्क मनुष्यरू अवरन्ननुसरिगोंडिरतक्क मनुष्यरू ( अथवा पश्वादिगळु ) भूलोकदल्लि वासिसुवरु. ॥२८॥ परमात्मन आ वासस्थानवाद विराट् देहद नाभियिंद उत्पन्नवाद स्वर्ग मत्तू भूलोकद मध्यदल्लिद्द अंतरिक्षलोकदल्लि मूरने गुणवाद तमोगुणद स्वभाववुळ्ळ रुद्रभृत्यसमूहवु वासमाडुवदु. ॥ २९ ॥

**मुखतोऽवर्तत ब्रह्म पुरुषस्य कुरूद्वह ॥ यत्रोन्मुखत्वाद्वर्णानां मुख्योऽभूद्ब्राह्मणो गुरुः ॥ ३० ॥**

**बाहुभ्योऽवर्तत क्षत्रं क्षत्रियस्तदनुव्रतः ॥ यो जातस्त्रायते वर्णान्पौरुषात्कंटकक्षतात् ॥ ३१ ॥**

इदानीं वर्णोत्पत्तिं तदभिमान्युत्पत्तिं च वक्ति मुखत इति । पुरुषस्य ब्रह्मांतर्यामिणो मुखतो ब्रह्मजातिरवर्तत । अत्र ब्रह्मशब्देन ब्राह्मणजातिः तदुत्पन्ना ब्राह्मणास्तज्जात्यभिमानिन उच्यंत इति ज्ञापनाय ब्रह्मेत्युक्तं उत्तरत्राप्येवमेवानुसंधेयं । "ब्रह्माभिमानीतुभृगुरजनिब्राह्मणो मुखात्। क्षत्राभिमानीतुमनुर्ब्रह्मबाहोरजायते-" त्यादिवचनेन श्रुतव्याख्येयमित्यपवादं निवारयति । यत्र हराबुन्मुखत्वाद्ब्राह्मणस्त्रिवर्णानां मुख्यो गुरुरभवत् तस्य पुरुषस्यैव तत्त्वोपदेशात् तत्त्वज्ञानदानेनाविद्यादिदोषनिगिरणाच्च गुरुरित्यर्थः। गृशब्दे गृनिगिरणइतिधातुः ॥ ३० ॥ तं ब्राह्मणमनुव्रतः क्षत्रशब्दं निर्वक्ति यइति । कंटकाः शत्रवः। "वेणौद्रुमांगेरोमांचे क्षुद्रशत्रौचकंटक"इति यादवः। क्षतात् त्रायत इति क्षत्रं ॥ ३१ ॥

इन्नु आ विराट् मूर्तियिंद जातिगळु उत्पन्नवाद क्रमवन्नू हागू आया जातिगळिगे मुख्यपुरुषराद जात्यभिमानिगळेंदेनिसिगोंडवर उत्पत्तिक्रमवन्नू हेळुवरु—एलै कुरुकुलदल्लि उत्पन्ननाद परीक्षितने, आ विराट् ब्रह्मन अंतर्यामियाद श्रीहरिय मुखदिंद ब्राह्मणजातियु उत्पन्नवायितु. ई श्लोकदल्लि ब्रह्म एंब शब्ददिंद ब्राह्मणजातियंदर्थमाडबेकु; याकेंदरे, आ विराट् ब्रह्मदेहद

त्वमंतरितजनेष्वेकश्चेत् संशयानपगमेन मुक्तो न स्या-"स्तत्त्वसंशययुक्तायें सर्वेतेनिरयोपगा " इति वचनादित्याशंक्य स्थाणुर्वा पुरुषोवेति संदिहानो यथा-प्तवाक्याद्वक्रकोटरादिदर्शनाद्वा संशयप्रतीतिं पराहृत्य स्थाणुरेवायं न पुरुषइति निश्चयज्ञानं प्रतिपद्यते । तथाहमपि युष्मच्चरणसेवाप्रसन्नयुष्मदुपदेशादनात्मनो देहस्य संबंधिनो ऽहंममतादेः मोहात्सत्वेन प्रतीतस्यापि अर्थाभावं जीवस्वरूपपर्यालोचनया प्रयोजनाभावं विनिश्चित्यच उभयविषयां तां प्रतीतिं निरस्य पुरुषार्थोपयोगिज्ञानं लभ इत्यभिप्रायवानाह । अर्थाभावमिति । द्वितीयापिशब्देन सेवायाः प्राधान्यं वक्ति । चशब्दः संशयनिरासनिश्चयज्ञानलब्ध्योः समुच्चये वर्तते । पराणुद इत्यनेन नियतपरस्मैपदेनान्यथाप्रयुक्तेन विद्यमानमपि अनुभवमन्यथा वदति विदुरइति सूच्यते । न च शूद्रयोनौ जातस्य यथार्थज्ञानमेव नास्तीति वाच्यं । "द्रोणद्रौणिकृपाःपार्थो भीष्मोविदुरसंजयौ । येचान्येतत्रदेवांशाः सम्यक्तत्वापरोक्षिण " इति वचनात्सम्यक्तत्वापरोक्षित्वात् तर्ह्यनृतभाषित्वेन दोषित्वमापन्नमिति चेन्न । पृष्टमेव वक्तव्यं नापृष्टमिति अपृष्टार्थप्रवचनोपरमार्थत्वेन गुणत्वात् । "आत्मनस्तुगुणाभावं वदतोनत्वसत्यता । अपृष्टस्यदमार्थेच गुणायैवभवत्यपी-"तिवचनात् १८

" परमात्मन संबंधद्वाद तत्वविषयदल्लि ( निश्चयज्ञानवन्नु होंददे ) संदेहवुळ्ळवरु यारो, आ एल्लरु नरकक्के होगतक्कवरु " एंदु पुराणांतरवचनविद्दरिंद, नीनु ( विदुरनु ) तत्वसंदेहवुळ्ळ जनरल्लि शेरिदवनोब्बनादरे निनगे तत्वसंदेहवु होगदिद्दरिंद ( नीनु ) मुक्तनागदे होगबेकादीतु; एंदु संदेहबंदर एदुरिगे मोट मोरवन्नु कंडु ई तोरुवदु पुरुषनो अथवा मोटमरवो एंदु संशय होंदिद पुरुषनु, सत्यवादियाद मनुष्यन वचनदिंदागली अथवा आ एदुरिगे तोरुववस्तुविनल्लि सोट्टाद टोंगेगळन्नु होदरुगळन्नू स्पष्टवागि काणुवदरिंदागली संदेह बुद्धियन्नु कळकोंडु, ई एदुरिगे तोरुवदु मोटमरवे होर्तु मनुष्यनल्लवेंदु ह्यागे निश्चयज्ञानवन्नु होंदुवनो, हागेये नानादरू ( विदुरनु ) तम्म पादसेवामाडुवदरिंद प्रसन्नराद तम्म उपदेशदिंद, श्रीहरिय रामकृष्णाद्यवतारगळल्लि प्रत्यक्षदिंद ( आ परमात्मनिगे ) जडदेहादिगळिद्दंते ( जनरिगे ) तोरिदाग्यादरू आ श्रीहरिगे जीवरंते जडदेहगळिंद प्रयोजनविल्लद्दरिंदल ( अवनिगे ) जडदेहवु बरुवदक्के कारणवादनानु नन्नदेंब ( संसारद ) भ्रांतिमोदलावुगळु इल्लद्दरिंदलू तावु ( मैत्रेयरु ) हिंदे उपदेशमाडिदंते पूर्वापरसंगतिगळन्नु विचारमाडि नोडलागि श्रीहरिगे जडदेहवू आ संबंधीदुःखगळू इल्लवेंबदन्ने निश्चयमाडिकोंडु रामकृष्णादिरूपगळिगे तोरतक्क जडदेहदंते तोरिकेयादरू ( जडदंते तोरुव प्रत्यक्षवादरू ) श्रीहरिगे भौतिकदेहगळिल्लवेंतलू दुःखादिगळ संपर्कविल्लवेंतलू हेळतक्क अनेक आगमोक्तिगळिंद बाधितवाद्दरिंदलू आ परमात्मन अवताररूपगळन्नु नोडतक्क ई जीवनु अज्ञानियाद्दरिंद इवन अज्ञानदृष्टिगे परमात्मनु जडदेहवुळ्ळवनंते तोरुवनेंदु निश्चयमाडिकोंडु आ संशयवन्नु कळकोंडु पुरुषार्थक्के उपयुक्तवाद ज्ञानवन्नु होंदुवेनु एंब अभिप्रायदिंद हेळुवनु– ई श्लोकदल्लि एरडने ' अपि ' शब्ददिंद ई ज्ञानप्राप्तिगे दोड्डवर सेवेये मुख्यवादद्देंदु हेळल्पट्टितु– मत्तू ' च ' शब्दवु तम्म [ मैत्रेयर ] सेवेयिंद हिंदे हेळिद संशयवु होगुवदल्लदे निश्चयज्ञानवुसहवागि दोरेयुवदेंदु समुच्चयवन्नु हेळुवदु– ई श्लोकदल्लि ' पराणुदे ' एंब परस्मैपद क्रियापद-

१. ईश्वरावतारमतीतस्य प्रत्यक्षाप्रतीतिविषयस्यापि अनात्मनः जडदेहस्य सकाशात् अर्थाभावं ईश्वरस्य पुरुषार्थाभावं । उपलक्षणमेतत् । भ्रांत्यादिरूपसंसारकारणाभावं च । युष्मच्चरणसेवालब्धयुष्मदुपदेशार्थपर्यालोचनेन विनिश्चित्य इदमित्थमेवेत्यवधार्य तां च तामपि जात्याप्रबलां प्रत्यक्षप्रतीतिमपि पराणुदे ( उपजीव्यागमार्थसंग्राहकयुष्मद्वचनार्थपर्यालोचनया विरुद्धत्वात् ) दुर्बलतया सार्थसाक्षात्कारमां मत्वा पूर्वोक्तसंशयहीनो भवामि । –( या. )

वन्नु आत्मनेपददल्लि प्रयोगमाडिद्दरिंद, विदुरनिगे ई नडेद एल्ल तत्वद अनुभवविद्दाग्यू एनू तिळियदवनंते माताडिदनेंदु हेळल्पट्टितु. विदुरनु शूद्रजातियल्लि हुट्टिदवनादरिंद इवनिगे यथार्थवाद तत्वज्ञानवे इल्लवेंदेनलिक्के बारदु. यार्केंदरे ' द्रोणाचार्यरू, अश्वत्थामाचार्यरू, कृपाचार्यरू, ऐदु मंदि पांडुकुमाररू, भीष्माचार्यरू, विदुरनू, संजयनू, मत्ते केलवरु आ कालदल्लिद्द देवांशरादरूसह सरियाद तत्वापरोक्षवुळ्ळवरागिद्दरु ' एंदु प्रमाणगळिद्दरिंद विदुरनु श्रीहरिय विषयदल्लि निश्चय ज्ञानवुळ्ळवनागिद्दनु. हागादरे विदुरनु तानु निश्चयज्ञानवुळ्ळवनागिद्दु संशयवुळ्ळवनंते माताडिद्दरिंद इवनिगे सुळ्ळाडिद पातकवु बंदितल्लवेंदरे, हागल्लवु. गुरुगळु हेळुवाग्ये शिष्यनु प्रश्नमाडिदरे उत्तररूपवागि ( यावदादरोंदु ) प्रमेयवन्नु हेळबेके होर्तु प्रश्नमाडद प्रमेयवन्नु हेळगूडदु. एंदु प्रमाणगळिद्दरिंद आ समयदल्लि विदुरनु अरियदवनंते प्रश्नमाडिद्दरे मैत्रेयरु आ प्रमेयवन्नु अष्टक्के (पूर्णवागि विस्तारमाडदंते) साकु माडुत्तिद्दरु; आद्दरिंद आ प्रमेयवन्नु विशदवागि लोकदल्लि प्रकटमाडबेकेंदु विदुरनु अरियदवनंते प्रश्नमाडिदाग्यू अवनिगे गुणरूपवे सरि, हागू तन्नल्लि गुणगळिद्दाग्यू गुणगळिल्लवेंदु हेळिदरे अदु असत्यवादवेनिसुवदिल्लवु. मत्तू प्रकृतक्के नडेद कथाप्रसंगदल्लि विदुरन प्रश्नविल्लदे मैत्रेयरु ई संगतियन्नु हेळिदरेंदागबारदेंबदक्के विदुरनु प्रश्नमाडिद्दरिंद अदू अवनिगे गुणरूपवे सरि एंदु व्याससमृतियल्लि हेळिरुवदु. ॥ १८ ॥

## यत्सेवया भगवतः कूटस्थस्य मधुद्विषः ॥ रतिरासो भवेत्तीव्रः पादयोर्व्यसनार्दनः ॥ १९ ॥

श्रीनारायणचरणारविंदनिषेवा संसारव्यथानिरासकत्वेन पुरुषार्थोपयोगिनी स्यात् किमस्मच्चरणसेवा करिष्यतीति शंका माभूदित्याह यत्सेवयेति । येषा हरिस्वरूपद्रष्टॄणां युष्माकं सेवया भगवतः पादयोः तीव्रः पटुतरो रतिरासो रतिरूपा क्रीडा रतिलक्षणो रागो वा भवेदित्यन्वयः । मधुद्विष इत्यनेन हरेर्बहिरेवावस्थानं प्रतीयते तन्निरासार्थं कूटस्थस्येति चेतनाचेतनराशिनियामकत्वेन तदंतस्थस्य क्रोधादिविकारबाह्यस्य वा ॥ १९ ॥

श्रीनारायणचरणारविंद सेवियु संसारदुःखपरिहार माडुवदरिंद पुरुषार्थोपयोगियु आदीतु, नम्म (मैत्रेयर) चरणसेवियु एनु माडुवदु एंदु संदेहवेबेडेंदु ( विदुरनु ) हेळुवनु– श्रीहरिस्वरूपवन्नु प्रत्यक्षवागि नोडतक्क तम्मंथवर (अपरोक्षज्ञानिगळ) सेवेयिंद अव्याकृताकाशदंते सर्वत्रव्याप्तनाद मधुनामक दैत्यन द्वेषियाद श्रीहरिय चरणारविंदगळल्लि नम्म व्यसनगळन्नु नाशमाडुवदक्के अत्यंत समर्थवाद 'रतिरासः' आनंदबडतक्क माहात्म्यज्ञानपूर्वक सुदृढस्नेहवु उंटागुवदु. इल्लि 'मधुद्विषः' एंब पददिंद श्रीहरियु होरगे मात्र इरुवनेंदु तोरीतु हागल्लवेंदु हेळुवदक्के 'कूटस्थस्य' एंब विशेषणविरुवदु; इदरिंद श्रीहरियु चेतनाचेतनराशिगळिगे अंतर्नियामकनागिद्दु क्रोधमोदलाद विकारशून्यनागिरुवनेंदर्थवु. ॥ १९ ॥

## दुरापा ह्यल्पतपसः सेवा वैकुंठवर्त्मसु ॥ यत्रोपगीयते नित्यं देवदेवो जनार्दनः ॥ २० ॥

पूर्वसंचितपुण्यैरेव भवादृशानां महतां सेवा लभ्या नान्यैरित्याह दुरापेति । वैकुंठस्य वर्त्म ज्ञानोपदेशमार्गो येषां तेषु महत्सु सेवा हिशब्द एवार्थे दुष्प्रापत्वे निमित्तमाह यत्रेति यत्र येषां भवादृशानां परिसरे भगवद्विमुखानां जनार्दनप्रसंगो दुःसह इति यस्मादतस्तत्कथाप्रसंजकेषु सत्सु दुःसहत्वेन सेवा दुरापेत्यर्थः जनो जननमुपलक्षणं मरणं चार्दयति नाशयतीति जनार्दनः अर्दहिंसागत्योरिति धातुः ॥ २० ॥

पूर्वार्जितपुण्यदिंदले तंमंथ महनीयर सेवेयु दोरेयुवदे होर्तु एरडने प्रयत्नदिंद साध्यवल्लवेंदु हेळुवनु– स्वल्पु तपःसु माडिद जनरिगे वैकुंठशब्दवाच्यनाद परमात्मन ज्ञानोपदेश माडतक्क मार्गवुळ्ळ (तम्मंथ) महनीयर सेवेयु दोरेयुवदु दुर्लभवेसरि. याकेंदरे, तम्मंथ सज्जनर सभेयल्लि तप्पदंते दिनाल देवोत्तमनाद जनार्दननु होगळिसिगोळ्ळल्पडुवनु. आद्दरिंद तम्मंथवर सन्निधेयल्लि श्रीहरिगे विरोधिगळाद जनरिगे जनन-मरणवन्नु नाशमाडतक्क परमात्मन प्रसंगवु सहनवागुवदिल्लवु. आदकारण अंथ परमात्मन कथेगळन्नु विस्तारमाडतक्क सज्जनरे आ भगवद्विमुखजनरिगे सहनवागुवदिल्ल. अवर सेवेयंतु अत्यंत अशक्यवे सरि. जनन उपलक्षणतर्या मरण ईवेरडु नाशमाडुत्ताने, कारण 'जनार्दन.' अर्द अंदेर नाशमाडोण. ॥ २० ॥

सृष्ट्वाग्रे महदादीनि सविकाराण्यनुक्रमात् ॥ तेभ्यो विराजमुद्धृत्य तमनु प्राविशद्विभुः ॥ २१ ॥

विदुरो विशेषं श्रोतुं श्रुतमनुवदति सृष्ट्वेति । अग्रे जगदादौ षोडशविकारास्तैः सहितानि तेभ्यो महदादिभ्यः अंडं सृष्ट्वांडांतर्वर्तिविराजं ब्रह्माणमुद्धृत्य सृष्ट्वा तं ब्रह्माणं अनु प्राविशत् तत्प्रवेशानंतरं ब्रह्मप्रवेशइति ज्ञापनायान्विति विभुर्व्याप्तः ॥ २१ ॥

विदुररु विशेष संगतियन्नु तिळकोळ्ळुवदक्के तानु हिंदे केळिद्दन्नु अनुवादमाडुववनु– जगत्तिन पूर्वदल्लि हदिनारु विकारगळिंद सहितवाद महत्तत्ववे मोदलादवुगळिंद क्रमानुसार ब्रह्मांडवन्नु सृष्टिमाडि आ ब्रह्मांडदल्लि विराट् एंब शब्ददिंद करिसिगोळ्ळुव ब्रह्मदेवन शरीरवन्नु सृष्टिमाडि आ ब्रह्मशरीरदल्लि सर्वत्रव्यापनाद श्रीहरियु तानु प्रवेशमाडिदनु. मोदलु महत्तत्व मोदलाद तत्वगळल्लि परमात्मनु प्रवेशमाडि आनंतर ब्रह्मशरीरदल्लि प्रवेशमाडिदनेंदु तिळिसुवदक्के 'अनु' एंदु प्रयोगिसिरुवरु ॥ २१ ॥

यमाहुराद्यं पुरुषं सहस्राङ्घ्र्युरुबाहुकं ॥ यत्र विश्व इमे लोकाः (सविकासंत आसते) सविकाराः समासते ॥ २२ ॥

नन्वंतर्बहिर्व्याप्तस्य परिच्छिन्नयोग्यः प्रवेशः कथमित्याशंक्य तत्तद्वस्तुपरिमितरूपग्रहणेन सुकर इति भावेनाह यमाहुरिति । यत्र यस्मिन्पुरुषे इमे पातालादयः २२

ओळ्ळेदु, ओब्बरल्लि प्रवेशमाडबेकादरे इंतिष्टेंदु अळतियुळ्ळ पुरुषनिंदले साध्यवादद्दु आकाशदंते ओळगू होरगू व्याप्तनागि अपरिमितस्वरूपवुळ्ळ श्रीहरियु ब्रह्मांडदल्लियू ब्रह्मशरीरदल्लियू प्रवेशमाडिदनेंबदु ह्यागे संभविसुवेंदेदरे, अचिंत्याद्भुतशक्तियुळ्ळ श्रीहरियु आया वस्तुगळल्लि प्रवेशमाडुवदक्के तक्कष्टु शरीरगळन्नु धरिसि सर्वत्र प्रवेशमाडुवनेंदु हेळुवदु सुलभवेंब अभिप्रायदिंद हेळुवरु– अनेक कै-कालु-मोदलाद अवयवगळु यावनल्लु आदिपुरुषनेंदु हेळुवरो, यावनल्लि विकारवन्नु होंदतक्क पाताळमोदलाद सकल लोकगळू आश्रयिसिगोंडिरुववो. ॥ २२ ॥

यस्मिन् दशविधः प्राणः सेंद्रियार्थेंद्रियस्त्रिवृत् ॥ त्वयेरिता यतो वर्णास्तद्विभूतीर्वदस्व नः ॥ २३ ॥

यस्मिन्ब्रह्मांतर्यामिणि पुरुषे "प्राणापानौतथाव्यानस्तथोदानसमानकौ । नागःकूर्मोथकृकलदेवदत्तधनंजया" इतिदशविधः सेंद्रियार्थेंद्रियः इंद्रियार्थैः शब्दादिभिश्चक्षुरादींद्रियैश्च सहितस्त्रिवृदोजःसहोबलरूपो वर्तत इति शेषः । श्रुतमनूद्य वक्तव्यांशं प्रार्थयते त्वयेरिता इति । त्वया ये ब्राह्मणादिवर्णा यतो ब्रह्मांतर्यामिणः

सृष्टा ईरिताः तद्विभूतीस्तेषा वर्णाना तस्य ब्रह्मांतर्यामिणश्च विभूतीर्नोऽस्माकं वदस्व यथा ज्ञातुं शक्यंते तथा ब्रूहीत्यन्वयः । भासनोपसंभाषाज्ञानयत्नविमत्युपमंत्रणेषु वद इत्यात्मनेपदं ॥ २३ ॥

याव ब्रह्मांतर्यामियाद पुरुषनल्लि 'सेंद्रियार्थेंद्रियः' इंद्रियगळिगे अर्थगळेंदेनिसिद शब्द, स्पर्श, रूप, रस, गंध एंबवुगळिंदल चक्षुरिंद्रियवे मोदलाद इंद्रियगळिंदल सहितनागि हागू ओजःसु, सहनशक्ति, बलशक्ति ई मूररिंद सहितनागि प्राण, अपान, व्यान, उदान, समान, नाग, कूर्म, कृकल. देवदत्त, धनंजय एंदु हत्तु प्रकारनाद प्राणनु अधीननागिरुवनु; एंदु तानु हिंदे केळिद संगतियन्नु अनुवादमाडि विदुररु मुंदे तनगे हेळतक्क भागवन्नु बेडिकोळ्ळुवनु– (हे मैत्रेयरे,) ब्रह्मांतर्यामियाद श्रीहरियिंद ब्राह्मणमोदलाद जातिय जनरु हुट्टिदरेंदु तमिंदेनु हेळल्पट्टितो, आ जातिगळ विस्तारवन्नू ब्रह्मांतर्यामियाद श्रीहरिय विभूतिविस्तारवन्नू नमगे हेळुबेकु. हागू आ प्रसंगवु नमगे ह्यागे सुलभदिंद तिळियबेको, हागे हेळबेकु. ॥ २३ ॥

यत्र पुत्रैश्च पौत्रैश्च नप्तृभिः सहगोत्रजैः ॥ प्रजा विचित्राकृतय आसन्याभिरिदं ततं ॥ २४ ॥
प्रजापतीनां सपतिश्चिक्लृपे कान्प्रजापतीन् ॥ सर्गांश्चैवानुसर्गांश्च मनून्मन्वंतराधिपान् ॥ २५ ॥
एतेषामपि वंशांश्च वंशानुचरितानि च ॥ उपर्यधश्च ये लोका भूमेर्मित्रात्मजासते ॥ तेषां संस्थां प्रमाणं च भूर्लोकस्य च वर्णय ॥ २६ ॥

यत्र येषु वर्णेषु जातैर्नप्तृभिः पुत्रपौत्रैर्विचित्राकृतयः परस्परव्यावृत्तलक्षणोपेताकाराः विभुर्ब्रह्मा विराजं ब्रह्मांडं जलादुद्धृत्यावकाशवत् कृत्वानुप्राविशदिति प्रतीतार्थं परित्यज्याप्रतीतार्थांगीकारे किं नियामकं सृष्टिश्च ब्रह्मण इति प्रसिद्धिरितिचेन्न । "ब्रह्माणं प्राविशद्विष्णुः सहस्राक्षःसहस्रपात् । अनुप्रविश्यब्रह्माणं प्राणं-दशविधंतथा । इंद्रियाणींद्रियार्थांश्च वर्णांश्चैवासृजद्धरि-" रिति प्रमाणद्वयेन नियतत्वाद्रूढे दुर्बलत्वाच्च ॥२४॥२५॥ आसते तिष्ठंति संस्थां व्यवस्थां ॥ २६ ॥

ओळ्ळेदु, समर्थनाद चतुर्मुखब्रह्मनु विराजेंब हेसरुळ्ळ ब्रह्मांडवन्नु नीरिनिंद मेलक्के तेगेदु अदरल्लि अवकाश (टोळ्ळु) हुट्टुवंते माडि तानु (चतुर्मुखनु) प्रवेशमाडिदनेंब अर्थवु मेले तोरुत्तिरलु आ अर्थवन्नु बिट्टु, हागू सृष्टियु ब्रह्मनिंदागुवदेंब प्रसिद्धियन्नुसह लक्षिगे तारदे चतुर्मुखनल्लि नियामकनाद श्रीहरियिंद सृष्टियागुवदेंदु अर्थमाडुवदु, याव प्रमाणानुसारवेंदरे, हागल्लवु– "सहस्र नेत्रगळू सहस्र पादगळुळ्ळ श्रीविष्णुवु ब्रह्मनन्नु प्रवेशमाडिदनु" एंदु ब्रह्मपुराणदल्लि हेळिरुवदु. "श्रीहरियु ब्रह्मनन्नू हत्तुप्रकारनाद प्राणनन्नू प्रवेशमाडि इंद्रियगळन्नू अवुगळ विषयगळन्नू ब्राह्मणमोदलाद जातिगळन्नू सृष्टिमाडिदनु" एंदु गरुडपुराणदल्लि हेळिरुवदु. ई एरडु प्रमाणगळु बलिष्ठवाद्दरिंदल ब्रह्मने सृष्टिमाडुवनेंबदु अज्ञानिगळ रूढियाद्दरिंद दुर्बलवाद्दरिंदल श्रीविष्णुवे ब्रह्मनल्लि प्रवेशमाडि सृष्टिमाडिदनेंदु अर्थमाडतक्कद्दु. 'यत्र' याव ब्राह्मणमोदलाद जातिगळल्लि उत्पन्नराद तम्म तम्म बेरे बेरे लक्षण- (गुर्तु) गळिंद युक्तराद अवरवर मक्कळु-मम्मक्कळु-मरिमक्कळुगळिंदलू गोत्रजरिंदल सहवागि अभिवृद्धरादरो, याव प्रजेरिंद ई जगत्तु पूर्णवायितो, अदन्नेल्ल नमगे हेळबेकु. ॥ २४ ॥ हागू प्रजेश्वररिगे

१. चकार । -(या.)

स्वामिथाद आ ब्रह्मांतर्यामियाद श्रीहरियु अवांतर प्रजेश्वररन्नु यारन्नु माडिदनु मत्तू महासृष्टिगळू अवांतर सृष्टिगळू यावु, मन्वंतरगळू आ मन्वंतरगळिगे अधीश्वररू यारु ? ई एल्लवन्नू ननगे हेळबेकु. ॥ २५ ॥ हागू ई मनुगळ वंशगळन्नू आया मनुवंशदवर चरित्रेगळन्नू ' हे मित्रात्मज ' मित्रादेविय पुत्रराद मैत्रेयऋषिगळे, ई भूलोकद केळगे याव लोकगळु, मेले याव लोकगळु इरुववु, आ लोकगळ परिमितियन्नू अवुगळ व्यवस्थागळन्नू हागू भूलोकद व्यवस्थेयन्नू अदर प्रमाणवन्नू हेळबेकु. ॥ २६ ॥

तिर्यङ्मानुषदेवानां सरीसृपपतत्रिणां ॥ वद नः सर्गसंव्यूहं गर्भस्वेददिजोद्भिदां ॥ २७ ॥
गुणावतारैर्विश्वस्य सर्गस्थित्यप्ययात्मनः ॥ सृजतः श्रीनिवासस्य व्याचक्ष्वोदारविक्रमं ॥ २८ ॥

सरीसृपाः सर्पादयः सहस्रपादादयो वा सर्गसंव्यूहं सृष्टिविस्तारं । गर्भजस्वेदजोद्भिजामिति वा पाठः अस्मिन्पक्षे पुनरुक्तिर्नास्ति ॥ २७ ॥ ब्रह्मांतर्यामिणो विभूतीर्वदस्वेति उक्तं विशेषतः प्रार्थयते गुणावतारैरिति । सर्गस्थित्यप्ययात्मनो विश्वस्य जगतोर्थे सृजतः आत्मानमितिशेषः ज्ञानादिगुणयुक्तावतारैः सत्वादिगुणनिमित्तावतारैर्वा । " यदायदाहिधर्मस्य ग्लानिर्भवतिभारत । अभ्युत्थानमधर्मस्य तदात्मानंसृजाम्यह- " मित्यादेः वीर्यादिगुणप्रकाशैर्वा श्रीनिवासस्योदारविक्रमं प्रख्यातचरितं व्याचक्ष्वेत्यन्वयः । " उदारोमहतिरुयात " इत्यभिधानं । सर्वस्मादिदं श्रीहरिचरितं विस्तृत्य वदेत्यतो व्याचक्ष्वेति श्रिया सह निवासोऽस्यास्तीति श्रीनिवासस्तस्य अनेन " द्वावेतौनित्यमुक्ता- " वितिश्रुतिः सूच्यते । श्रीर्निवसत्यस्मिन्निति वा । अकर्तरिचकारकेसंज्ञायामितिघञ् ॥ २८ ॥

' तिर्यक् '= हंदि-नायि मोदलाद कीळजातिगळ उत्पत्तिक्रमवन्नू मनुष्यजातिय उत्पत्तिक्रमवन्नू देवतिगळ उत्पत्तिक्रमवन्नू हरदाडतक्क हावु-चेळु मोदलाद प्राणिगळ उत्पत्तियन्नू अथवा बहुपादगळुळ्ळ बेट्टी-बेनक मोदलाद प्राणिगळ उत्पत्तिक्रमवन्नू वट्टेगे गर्भदिंद हुट्टतक्क प्राणिगळ संगतियन्नू बेवरिनिंद हुट्टतक्क ( तगणि मोदलाद ) प्राणिगळ उत्पत्तिसंगतियन्नू तत्तियिंद हुट्टतक्क ( कोळिमोदलाद ) प्राणिगळ उत्पत्तिसंगतियन्नू भूमियन्नु शीळि हुट्टतक्क वृक्षमोदलादवुगळ उत्पत्तिक्रमवन्नू ई प्रकार सृष्टिविस्तारवन्नु नमगे हेळबेकु. ई श्लोकदल्लि " गर्भजस्वेदजोद्भिजां " एंतलू पाठ उंटु; ई पाठ विद्दाल्लि श्लोकदल्लि इद्द पाठदंते पुनरुक्तिदोषवु बरुवदिल्लवु. [ पुनरुक्तियु मोदलिन पाठदल्लि ह्यागे बरुवदेंदरे गर्भदिंद हुट्टिद प्राणिगळन्नु एन्नुवदरिंदले तत्तियिंद हुट्टिद प्राणिगळु एणिसल्पट्टवु; यार्केंदरे तत्तिगळू गर्भदिंदले हुट्टिरुववु; आदुदरिंद पुनः तत्तिगळिंद हुट्टिद प्राणिगळन्नु प्रश्नमाडिद्दरिंद पुनरुक्तिदोषदंते तोरुववु. व्याख्यानदल्लि हेळिद पाठदंते नोडिदरे गर्भदिंद हुट्टिद प्राणिगळन्नू बेवरिनिंद हुट्टिद प्राणिगळन्नू भूमियन्नु शीळि हुट्टुव प्राणिगळन्नू एंदु पुनरुक्तिबरदंते हेळिद्दाग्यू सृष्टियु स्वेदज, अंडज, उद्भिज, जरायुज एंदु नाल्कु प्रकारवागि प्रसिद्धि इरुववु. गर्भज एंदरे जरायुज एंदु अर्थमाडिकोंडु मोदलने पाठवादरू ( संगतवे ) सरियादद्दे. ] ॥ २७ ॥ ब्रह्मांतर्यामियाद परमात्मन विभूतिविस्तारवन्नु हेळबेकेंदु केळिद्दन्ने विदुरनु विशेषवागि प्रार्थिसुवनु-- " हे अर्जुन, याव याव कालक्के धर्मवु लोपवागुत्तवरुवदो मत्तू अधर्मवु हेच्चागुवदो, आगाग्गे धर्मस्थापनार्थवागि नानु अवतरिसुवेनु " एंदु श्रीकृष्णन वचनप्रकारवागि सृष्टि-स्थिति-लयगळल्लि मनस्सुळ्ळ आ परमात्मनु जगत्तिन क्षेमार्थवागि सत्वमोदलाद गुणगळिगे प्रेरकनागि तानु ज्ञानानंदादि सद्गुणगळुळ्ळ स्वरूपगळिंद राम-कृष्णमोदलाद अवतारगळन्नु धरिसि माडिद ' उदार विक्रमं ' उदारवेंब शब्दवन्नु अत्यंत प्रख्यातवाद संगतियल्लि उपयोगिसुवरु एंदु कोशदल्लि हेळिद्दरिंद अत्यंत प्रख्यातवाद लक्ष्मीसहितनाद नारायणन चरित्रेयन्नु चन्नागि उपदेशमाडबेकु. ' श्रीनिवासस्य '= लक्ष्मीदेवियिंद सहितनादवनु अथवा लक्ष्मीदेवियु यावनल्लि वासिसुवळो, अवनु हीगे अर्थमाडुवदरिंद " लक्ष्मीदेवियु परमात्मनू ई इब्बरू नित्यदल्लियू मुक्तरू " एंब श्रुतिय अर्थवु सूचितवागिदे. श्रीनिवासस्य एंबल्लि अकर्तरिचकारके एंब व्याकरणसूत्रानुसारवागि घञ् प्रत्ययवु बरुवदु. ॥ २८ ॥

वर्णाश्रमविभागांश्च रूपशीलस्वभावतः ॥ ऋषीणां जन्मकर्माणि वेदस्य च विकर्षणं ॥ यज्ञस्य च वितानानि योगस्य च पथः प्रभो ॥ २९ ॥ नैष्कर्म्यस्य च सांख्यस्य तंत्रं वा भगवत्स्मृतं ॥ पाषंडपथवैषम्यं प्रतिलोमनिवेशनं ॥ ३० ॥ ॥

रूपतः शीलतः स्वभावतः विकर्षणं विभागं यज्ञस्य वितानानि विस्तारान् योगस्याष्टांगयोगस्य पथः मार्गान् ॥ २९ ॥ नैष्कर्म्यस्य सांख्यस्य मोक्षसाधनज्ञानस्य स्मृतं प्रणीतं तंत्रं शास्त्रं पाषंडपथवैषम्यं पाषंडमार्गोत्पत्तिविशेषं । " गुणानांविषमावस्था संभवः परिकीर्तितः । साम्यंतुप्रलयोज्ञेयइतितत्वविदोविदु-" रितिवचनात् । यद्वा पाषंडस्य पापलिंगस्याधर्मस्य सकाशाद्बुद्धिवैषम्यं प्रतिलोमनिवेशनं ब्राह्मणादिकन्यकानां क्षत्रियादिविवाहलक्षणं ॥ ३० ॥

हे प्रभो, समर्थराद मैत्रेयरे, आया जनर रूपभेददिंदलू नडावळिय भेददिंदलू सहजगुणगळ मेलिंदलू इंथिंथ जातिगळेंतलू इंथिंथ आश्रमगळेंतलू सिद्धमाडिद संगतियन्नु हेळबेकु. हागू ऋषिगळ उत्पत्तियन्नू अवर चरित्रेगळन्नू वेदविभाग माडिद संगतियन्नू यज्ञगळ ( भगवत्पूजेगळ ) अवांतर भेदसंगतियन्नू एंटु प्रकार अंगवुळ्ळ योगगळ मार्गगळन्नू हेळबेकु. ॥ २९ ॥ ' नैष्कर्म्यस्य सांख्यस्य ' मोक्षवन्नु हेंदिसतक्क ज्ञानद सलुवागि श्रीहरियिंद हेळल्पट्ट शास्त्रगळन्नादरू हेळबेकु. हागू ' पाषंडपथवैषम्यं ' " गुणगळ विषमावस्थेये उत्पत्तियंतलू साम्यावस्थेये लयवेंतलू तत्ववन्नु बल्लवरु हेळुवरु " एंदु वचनविद्दरिंद वैषम्यवेंदरे उत्पत्तियेंदु अर्थमाडि पाषंडपथ वैषम्यं एंदरे पाषंडमतद उत्पत्तियन्नू ( एंदु अर्थवु ) अथवा पापस्वरूपवाद अधर्मदिंद बुद्धियु ह्यागे केडुवदो, आ संगतियन्नू हागू ' प्रतिलोमनिवेशनं ' ब्राह्मणमोदलाद श्रेष्ठ जातिय कन्यागळन्नु क्षत्रियरे मोदलाद कडिमेय जातिय जनरु लग्नमाडिकोंडसंगतियन्नू हेळबेकु. ॥ ३० ॥

जीवस्य गतयो याश्च यावतीर्गुणकर्मजाः ॥ धर्मार्थकाममोक्षाणां निमित्तान्यविरोधतः ॥ ३१ ॥
वार्ताया दंडनीतेश्च श्रुतस्य च विधिं पृथक् ॥ श्राद्धस्य च विधिं ब्रह्मन् पितॄणां सर्गमेव च ॥ ३२ ॥

यावतीर्यावत्यः तावतीरितिशेषः । सत्वादिगुणकर्मभ्यो जाताः निमित्तानि साधनानि अविरोधतः परस्पराविरोधेन ॥ ३१ ॥ वार्ताया वाणिज्यादेः दंडनीतेः अर्थशास्त्रोक्तस्य राजधर्मस्य श्रुतस्य श्रुत्युक्तस्य विधिं प्रकारं ॥ ३२ ॥

जीवरिगे आगतक्क गतिगळु यावु मत्तू सत्व-रजस्तमोगुणानुसारवागि माडतक्क कर्मगळ भेददिंद आ जीवरिगे आगतक्क गतिगळु एष्टु प्रकार इरुववो, अवुगळन्नु हेळबेकु. हागू धर्मार्थ-काम-मोक्षगळिगे ओंदक्कोंदु विरोधवागदंते साधनगळु एष्टु प्रकार इरुववु ? ॥ ३१ ॥ हे ब्रह्मज्ञानिगळाद मैत्रेयरे, व्यापारमाडतक्क विधि- ( नियम ) वन्नू अर्थशास्त्रदल्लि हेळतक्क राजधर्मगळन्नू वेददल्लि हेळतक्क विधानवन्नू श्राद्धविधानवन्नू पितृगळ सृष्टियन्नू हेळबेकु. ॥ ३२ ॥

ग्रहनक्षत्रताराणां कालावयवसंस्थितिं ॥ दानस्य तपसो वापि यच्चेष्टापूर्तयोः फलं ॥ ३३ ॥ प्रवासस्थस्य यो धर्मो यश्च पुंस उतापदि ॥ येन वा भगवांस्तुष्येद्धर्मयोनिर्जनार्दनः ॥ ३४ ॥ संप्रसीदति वा येषामेतदाख्याहि मेऽनघ ॥ अनुव्रतानां शिष्याणां पुत्राणां च द्विजोत्तम ॥ ३५ ॥ अनापृष्टमपि ब्रूयुर्गुरवो दीनवत्सलाः ॥ तत्वानां भगवंस्तेषां कतिधा प्रतिसंक्रमः ॥ ३६ ॥

ग्रहाः सूर्यादयः नक्षत्राण्यश्विन्यादीनि तारा ध्रुवादयः कालावयवानां परमाण्वादीनां संस्थितिः इष्टं यागादि पूर्तं तडागखननादि ॥ ३३ ॥ धर्मात् पुण्यात् योनिराविर्भावलक्षणोत्पत्तिर्यस्य स तथा धर्मस्य योनिः कारणं लोकसंग्राहकत्वेन कर्तेत्यर्थः ॥ ३४ ॥ ३५ ॥ प्रतिसंक्रमः प्रलयः ॥ ३६ ॥

सूर्यने मोदलाद ग्रहगळू अश्विनीमोदलाद नक्षत्रगळू ध्रुवमोदलाद तारागळू इवर संगतियन्नु हेळबेकु. अत्यंत सूक्ष्मकाल मोदलुमाडि द्विपरार्धपर्यंतरवागिरतक्क काललक्षणवन्नू हेळबेकु; दान-फलवु एनु? तपःसिगे एनु फलवु? 'इष्टापूर्त' इष्ट= यज्ञमोदलादवुगळिंदलू, पूर्त= केरे-भाविगळन्नु कट्टिसोणदरिंदलू एनु फलवु दोरेयुवदु? ॥ ३३ ॥ हादिकारनु याव धर्मदिंद नडेयतक्कद्दु, आपत्कालदल्लि मनुष्यनु याव धर्मगळन्नु नडेसतक्कद्दु? 'धर्मयोनिः'= पुण्यदिंद (प्रादुर्भाव) अवतारमाडतक्क अथवा लोकशिक्षार्थवागि सकल धर्माचरणेयन्नु माडतक्क महदैश्वर्यभरितनाद श्रीहरियु याव मार्गदिंद (भक्तरमेले) तुष्टनागुवनु? ॥ ३४ ॥ हे पापशून्यराद मैत्रेयरे, श्रीहरियु यारमेले प्रसन्ननागुवनु, ई संगतियन्नु हळबेकु. हे द्विजश्रेष्ठरे, दीनवत्सलराद गुरुगळु तमगे अनुकूलराद शिष्यरिगू पुत्ररिगू अवरु प्रश्नमाडदे इद्दरू रहस्यसंगतियन्नु हेळुवरु. आद्दरिंद आ तत्वगळ प्रलयवु एष्टु प्रकारवो हेळतक्कद्दु. ॥ ३५ ॥ ३६ ॥

तत्रेमं क उपासीरन्क उस्विदनुशेरते ॥ पुरुषस्य च संस्थानं स्वरूपं वा परस्य च ॥ ३७ ॥ ज्ञानं च नैगमं यत्तद्गुरुशिष्यप्रयोजनं ॥ निमित्तानि च तस्येह प्रोक्तान्यनघ सूरिभिः ॥ ३८ ॥ स्वतो ज्ञानं कुतः पुंसां भक्तिर्वैराग्यमेव वा ॥ ३९ ॥ ॥

तत्र प्रलये इमं हरिं उना हृत्तापं सूचयति प्रश्नप्रवचनपर्यंतं सोऽस्तीति "उतापेव्ययमीशाने" इति यादवः । चेत्यस्मिन्नर्थे वा पुरुषस्यावतारसंस्थानं परस्य परमात्मनः स्वरूपं अवतारेष्वपि निजावताराः क इत्यर्थः यद्वा पुरुषस्य जीवस्य एकत्वादिविषयं परस्य मुक्तस्य स्वरूपं । "मुक्तिर्हित्वान्यथारूपं स्वरूपेणव्यवस्थितिः" रितिवक्ष्यति ॥ ३७ ॥ गुरुशिष्ययोः प्रयोजनं व्याख्यानश्रवणाभ्यां नैशित्य निश्चयलक्षणं यद्वा गुरुशिष्यौ प्रयोजयतीति वा नैगमं वेदांतजन्यं ज्ञानं इह शास्त्रे तस्य ज्ञानस्योपायनिमित्तानि साधनानि तान्यपि ३८ पुंसां स्वतः साधनानि विना ज्ञानं कुतो भवेत् भक्तिर्वैराग्यं वा कुतः स्यातामितिशेषः ३९

आ प्रलयकालदल्लि ई परमात्मनन्नु यारु उपासने माडिदरु? ई प्रश्नगळिगे उत्तरवन्नु हेळुववरेगू मनसिन तापवु इरुवदेंदु ई श्लोकदल्लिय 'उ' एंब अव्ययवु हेळुवदु. उ एंबदु अव्ययविद्दु ताप एंब अर्थदल्लियू रुद्रदेवरनल्लियू उपयोगिसल्पडुवदेंदु यादवकोशवु हेळुवदु अथवा समुच्चयार्थवन्नादरू हेळुवदु. हागू प्रलयकालदल्लि आ परमात्मनल्लि यारु प्रवेशमाडुवरु मत्तू पुरुषरूपियाद परमात्मन अवतारविषयवन्नू आ अवतारगळल्लि स्वरूपावतारगळु यावु एंबदन्नू हेळबेकु; अथवा जीववु ओब्बनो बहुजनरो एंबदन्नू मुक्तनाद जीवन स्वरूपवन्नू हेळबेकु. मुंदे इदे प्रसंगदल्लिये 'मुक्तिर्हित्वा' एंब

मुक्तिय स्वरूपवु हेळल्पडुवदु; आद्दरिंद 'परस्य' एंब पदक्के मुक्तस्वरूपवेंदर्थवु. ॥ ३७ ॥ गुरुशिष्यर हेळकेळोणवेंब विचारदिंद निश्चयहोंदतक्क प्रयोजनवुळ्ळ अथवा गुरुशिष्यरन्नु विचारदल्लि हाकतक्क 'नैगमं ज्ञानं' वेदांतविषयकवाद ज्ञानवु यावदु, हागू शास्त्रदल्लि आ वेदान्तविषयक ज्ञानवु दोरेयुवदक्के (उपायवाद) साधनगळु ज्ञानिगळिंद यावु हेळल्पट्टिरुववो? हे दोषरहितराद मैत्रेयरे अवुगळन्नु नमगे हेळबेकु. ॥ ३८ ॥ हागू पुरुषरिगे साधनगळिल्लदे ज्ञानवु ह्यागे दोरेयुवदु? भक्तियु वैराग्यवु ह्यागे हुट्टुववु? एंबदन्नु हेळबेकु. ॥ ३९ ॥

एतान्मे पृच्छतः प्रश्नान् हरेः कर्मविवित्सया ॥ ब्रूहि मेऽधस्य मित्रत्वादजया नष्टचक्षुषः ॥ ४० ॥
सर्वे वेदाश्च यज्ञाश्च तपोदानानिचानघ ॥ जीवाभयप्रदानस्य न कुर्वीरन्कलामपि ॥ ४१ ॥

कर्मविवित्सया वेत्तुमिच्छया पृच्छत इति शेषः वक्तव्यत्वे निमित्तमाह मित्रत्वादिति । "आपत्सुमित्रंजानीया-" दितिवचनात् । का तव आपदिति तत्राह अजयेति । अजया प्रकृत्या पुरुषस्यांधत्वादधिकापन्नास्तीत्यर्थः । अंधकारेण नष्टचक्षुःशक्तेः पुंसो यथा मित्रः सूर्यः प्रयोजकः तथा त्वमपीति भावेनोक्तं मित्रत्वादिति ॥ ४० ॥ त्वदभीष्टत्वे कुत एतदेव वक्तव्यमन्यत्किं न स्यादत्राह सर्वइति । जीवाभयहेतुज्ञानप्रदानस्यकलांषोडशीमपिना वेदादिज्ञातृप्रवक्तृपुरुषमंतरेणेति सूचयति ॥ ४१ ॥

श्रीहरियु माडिद चरित्रेगळन्नु तिळकोळ्ळबेकेंब अभिप्रायवुळ्ळ नन्निंद ई प्रश्नगळु माडल्पट्टिरुववु. आद्दरिंद ई प्रश्नगळिगे उत्तरवन्नु हेळबेकु. उत्तरहेळुवदक्के मत्तु कारणवन्नु हेळुवनु— 'मित्रत्वात्' आपत्कालदल्लि यारु उपकारमाडुवरो, अवरे मित्ररेंदेनिसिगोळ्ळुवरेंदु वचनविद्दरिंद इंथ समयदल्लि उपकारकराद तावु ननगे मित्ररेमरि; हागादरे निनगेनु अंथ महाविपत्तु बंददे एंदरे, हेळुवनु— 'अजयानष्टचक्षुषः' प्रकृतिय बंधनदिंद जीवनिगे अंधत्वद किंतल अधिकस्थितियु बंदिरुवदु. कण्णुगळिद्दाग्यू कत्तलेयल्लिद्द पुरुषन नेत्रशक्तियु अनुपयुक्तवागि यावत् लौकिकवस्तुगळ ज्ञानवागुवदक्के सूर्यनेंब मित्रनन्नु ह्यागे एल्लरू अपेक्षिसुवरो, आप्रकार अज्ञानांधकारदल्लिद्द ननगे शास्त्रज्ञानवेंब नेत्रगळिद्दाग्यू यथार्थ तत्वज्ञानमाडिकोडतक्क सूर्यनंते तावु मित्रराद्दरिंद ई प्रश्नमाडिद नन्न प्रश्नगळिगे उत्तरवन्नु हेळबेकु. ॥ ४० ॥ निन्न अभीष्टयु मिद्धवागुवदक्के इदे विषयवन्ने हेळबेकेंबदेनु? मत्तोंदु याके हेळबारदेंदरे हेळुवनु— 'हे अनघ' निष्कल्मषराद मैत्रेयरे, सकल वेदाध्ययनवू यज्ञगळन्नु माडुवदू तपःसु माडुवदू दानमाडुवदू ई यावत्तू जीवरिगे अभयस्वरूपवाद मोक्षक्के कारणवाद ज्ञानदानद (ज्ञानदानदिंद बरुव पुण्यद) हदिनारु भागदल्लि ओंदु अंशवादरू आगदु. आदरे ई मातु वेदार्थवन्नु तिळिदु उपदेशमाडतक्कवरु माडतक्क वेदाध्ययन यज्ञ-दान-तपःसुगळविषयवल्लवेंदु ई श्लोकदल्लिय 'अपि' एंबदु हेळुवदु. ॥ ४१ ॥

श्रीशुकउवाच ॥ सइत्थमापृष्ट पुराणकल्पः कुरुप्रधानेन मुनिप्रधानः ॥ प्रवृद्धहर्षो भगवत्कथायां संचोदितस्तं प्रहसन्निवाह ॥ ४२ ॥
इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे अष्टमोऽध्यायः ॥ ८ ॥ ॥ ॥ ॥

शुकः पृष्टेन मैत्रेयेण पृष्टमेवोक्तमन्यद्वेति परीक्षितो हार्दीं शंकां परिहरति स इत्यमिति । प्रश्नाख्यपुराणविषयः कल्पः विकल्पः । "कल्पोन्यायेसुरद्रुमे-

विकल्पेचे-" ति यादवः। बालकथाप्रश्नवद्वृव्ही कथैवसारभूता न भगवत्कथा पृष्टेति मंदाशंकां परिहरति भगवत्कथायामिति । अनेन सर्वेपि प्रश्ना भगवत्कथाविषया इति सूचितं भवति ॥ ४२ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे विजयध्वजटीकायां अष्टमोऽध्यायः ॥ ८ ॥

ई प्रकार विदुरन प्रश्नगळन्नु केळि, आ मैत्रेयरु अवन प्रश्नगळिगे सरियाद उत्तरवन्नु हेळिदरो अथवा बेरे विषयवन्नु हेळिदरो, एंब मनोभिप्रायवुळ्ळ परीक्षितनिगे श्रीशुकमुनिगळु उत्तरवन्नु हेळुवरु– 'कल्प' एंब शब्दवु न्यायदल्लियू कल्पवृक्षदल्लियू विकल्प- (हीगो हीगो एंदु अनेकप्रकार केळिके) दल्लियू उपयोगिसुवरेंदु यादवकोशदल्लि हेळिरुवदु. कौरवरल्लि श्रेष्ठनाद (विदुरनु यद्यपि शूद्रस्त्रीयल्लि हुट्टिदाग्यू कुरुवंशदल्लि हुट्टिदवनेंदु लोकदल्लि प्रचारवुळ्ळवनागिद्दनु) विदुरनिंद ई प्रकारवागि पुराणविषयकवाद अनेक विकल्पपूर्वक प्रश्नमाडिसिगोळ्ळल्पट्ट मुनिश्रेष्ठराद मैत्रेयऋषिगळु श्रीहरिकथेयन्नु हेळुव विषयदल्लि प्रेरितरादरिंद हर्षोद्रेकवुळ्ळवरागि मुगुळुनगेयिंद नगुत्त हेळलारंभिसिदरु. ई विदुरनु प्रश्नमाडिदरल्लि, हुडुगरु कथेगळ केळुवंते केवल कथामात्रवे होर्तु भगवत्कथा प्रश्नविल्लवेंदु अज्ञानिगळ संदेह निवारणक्कागि 'भगवत्कथायां' एंब पदप्रयोगमाडिरुवरु. ई प्रयोगदिंद विदुरन एल्ल प्रश्नगळू श्रीहरिकथेगे संबधिसि इरुववु एंदु सूचितवागुवदु. ॥ ४२ ॥ ई प्रकार श्रीमद्भागवतमूलग्रंथक्कू विजयध्वजव्याख्यानक्कू सरियागि अलंकरिसुव प्राकृतार्थरूपवाद कूसनूर श्रीनिवासानंद रचितवाद 'सुखार्थबोधिनी' एंब टीकेयल्लि तृ. स्कं. ८ ने अध्यायवु मुगिदितु.

**मैत्रेय उवाच । सत्सेवनीयो बत पूरुवंशो यल्लोकपालो भगवत्प्रधानः ॥ बभूविथेहाजितकीर्तिमालां पदे पदे नूतनयस्यभीक्ष्णं ॥ १ ॥**

अस्मिन्नध्याये सर्वजीवोत्तमहिरण्यगर्भसृष्ट्यभिधानेन हरेः सर्वोत्तमोत्तमत्वमाहात्म्यमवधृतमतस्तज्ज्ञानमवश्यमापाद्यं मुमुक्षुभिरिति निरूप्यते । तत्रादौ प्रश्नान् परिहरिष्यन् तं विदुरं मानयन् स्वस्य पुराणावगतिप्रकारं कथयति सत्सेवनीयइति बतानुकंपायां यद्यस्मिन्पूरोर्वंशे भगवानेव प्रधानः सर्वोत्तमो यस्य स तथा लोकपालस्त्वं । लिटा लोकविडंबनार्थं गर्भवासानुभवं परोक्षयति भगवत्प्रधानत्वं प्रकाशयति इहेति इह लोके ऽजितस्य हरेः कीर्तिपुष्पमालां नूतनयसि नवां करोषि यस्मात्तस्मादित्यध्याहार्यौ ॥ १ ॥

ई अध्यायदल्लि श्रीहरियिंद सर्वजीवोत्तमनाद ब्रह्मदेवन सृष्टियाद संगतियन्नु हेळुवदरिंद श्रीहरिगे सर्वोत्तमत्वमाहात्म्यवु निश्चितवागुवदु: आदकारण मोक्षापेक्षिगळु आ हरिसर्वोत्तमत्व ज्ञानवन्नु अवश्यवागि संपादने माडतक्कद्दु एंदु हेळल्पडुवदु. आमेले विदुरन प्रश्नगळिगे उत्तरवन्नु हेळुत्त आ विदुरनन्नु मन्निसुत्त मैत्रेयरु तमगे श्रीभागवतपुराणवु यारिंद दोरिकितेंब संगतियन्नु हेळुवरु— यावकारण श्रीहरिये सर्वोत्तमनेंदु निश्चयवागि तिळिदिरुव लोकपालक- (दिक्पालक)रलोब्बनाद नीनु (विदुरनु) पूरुराजनवंशदल्लि हुट्टिद्दियो (हुट्टिरुवियो), आदरिंदले आ पूरुराजन वंशवु सज्जनरिंद सेव्यमानवागिरुवदु. 'बभूविथ=' हुट्टिद्दियो एंब भूतकालप्रयोगदिंद ई हुट्टुवाग्ये अनुभविसिद निन्न (विदुरन) गर्भवासानुभववु अज्ञानिलोकदंते मरेतिरबहुदो, एंदु सूचिसुवदु. विदुरनु हरिसर्वोत्तमत्व निश्चयवुळ्ळवनेंबदन्नु प्रकटमाडुवरु– प्रतिक्षणशः नीनु (विदुरनु) आडुव मातुगळल्लि प्रतियोंदु पदक्कोम्मे श्रीहरिय कीर्तिएंब पुष्पमालेयन्नु नूतनवागि (प्रफुल्लितवागि) माडुवियादरिंद नीनु भगवत्प्रधाननेनिसुवि. ई श्लोकदल्लि 'यस्मात्' मत्तू 'तस्मात्' एंब एरडु संबंधबोधक शब्दगळन्नु अध्याहारमाडिकोळ्ळतक्कद्दु. ॥ १ ॥

**सोऽहं नृणां क्षुल्लसुखाय दुःखं महद्गतानां विरमाय तुभ्यं ॥ प्रवर्तये भागवतं पुराणं यदाह साक्षाद्भगवानृषिभ्यः ॥ २ ॥**

अधुना प्रश्नप्रतिवचनं प्रतिजानीते सोहमिति । योऽहं कृष्णेन तव ज्ञानोपदेशायादिष्टो यश्च मम ज्ञानमुपदिशेति त्वया प्रार्थितः सोऽहं क्षुल्लसुखायाल्पसुखाय महद्दुःखगतानां नृणां दुःखस्य विरामाय निर्मूलनाय साक्षात्संकर्षणो भगवान्सनत्कुमारादिभ्यः ऋषिभ्य यदाह तद्भागवतं पुराणं त्वत्प्रश्नपरिहारत्वेन प्रवर्तय इत्यन्वयः ॥ २

ईग्ये मैत्रेयऋषिगळु विदुरन प्रश्नगळिगे उत्तरवन्नु हेळुवेनेंदु प्रतिज्ञेयन्नु माडुवरु– याव नानु श्रीकृष्णनिंद निनगे ज्ञानोपदेशमाडुवदक्के आज्ञेयन्नु पडेदिरुवेनो, हागू ननगे ज्ञानोपदेशमाडबेकेंदु निन्निंद प्रार्थने माडिसिगोळल्पट्टिरुवेनो. आ नानु ओंदुक्षणहोत्तु दोरेयुव अल्पसुखदसलुवागि बहुकाल दुःखानुभवमाडतक्क जनर दुःखवन्नु निर्मूलवागि नाशवागुवदक्के स्वतः संकर्षणनेंदु करिसिगोळ्ळुव शेषदेवनु सनकादि ऋषिगळिगे याव श्रीमद्भागवतवन्नु उपदेशमाडिरुवनो, आ भागवतवन्नु निन्न (विदुरन) प्रश्नगळिगे उत्तररूपवागि हेळुवेनु. ॥ २ ॥

**आसीनमुर्व्यां भगवंतमाद्यं संकर्षणं देवमकुंठसत्त्वं ॥ विवित्सवस्तत्त्वमतः परस्य कुमारमुख्यामुनयोन्वपृच्छन् ॥ ३ ॥**

सूचितमाप्तिमूलत्वं प्रपंचयति आसीनमुर्व्यामिति । उर्व्यां पाताले त्रिलोकीविवक्षया भूमिपदेन पातालाभिधेयत्वं युक्तं अतः संकर्षणात्परस्य हरेस्तत्वंविवित्सवः ज्ञातुकामाः कुमारमुख्या मुनयः उर्व्यां पाताले विस्तृतायां भूस्यां आसीनमाद्यं सनकादिभ्यः पूर्वजातं देवं श्रीहरिं स्तुत्यामेव प्रकाशमानं अकुंठसत्वं अप्रतिबद्धज्ञानशक्तिं न कुंठो यस्य तदकुंठं अकुंठं सत्वं वैष्णवस्वभावो यस्य सोऽकुंठसत्वस्तमितिवा संकर्षणं भगवंतं अन्वपृच्छन्नित्यन्वयः ॥ ३ ॥

मैत्रेयरु तावु हेळबेकेंदु योचिसिद भागवतग्रंथवु प्रामाणिक पुरुषरिंद हेळल्पट्टदेंब संगतियन्नु विस्तरिसुवरु– भूः-भुवः-स्वः एंब मूरु लोकगळेंब अभिप्रायविद्दल्लि भूमिएंब पददिंद पातालवेंदु अर्थमाडुवदु युक्तवादद्दु. (याकेंदरे, पातालप्रारंभमाडि भूलोकदवरेगू भूः एंब शब्ददिंदले गणनेमाडिरुवरु.) ओंदानोंदु कालदल्लि पाताललोकदल्लि संकर्षणनेंब नामवुळ्ळ शेषदेवन मुखदिंद श्रीहरिय तत्ववन्नु तिळकोळ्ळबेकेंब इच्छेयुळ्ळ सनत्कुमारने मोदलाद मुनिगळु पातालदल्लि बहुदोड्डदाद हूविन चापेयमेले कुळितिरुव तमगिंत पूर्वदल्लि उत्पन्ननाद स्तोत्रदिंदले श्रीहरियन्नु प्रकाशमाडुव तप्पदंथ ज्ञानशक्तियुळ्ळ अथवा तप्पदंथ विष्णुभक्तिय स्वभाववुळ्ळ पूज्यनाद शेषदेवनन्नु प्रश्नमाडिदरु. ॥ ३ ॥

**स्वमेव धिष्ण्यं बहुमानयंतं यं वासुदेवाभिधमामनंति ॥ प्रत्यक्धृताक्षांबुजकोशमीषदुन्मीलयंतं विबुधोदयाय ॥ ४ ॥**

भगवदुपास्तिमंतरेणान्यो व्यापारोऽस्य नास्तीति तादृशैर्विशेषणैस्तं विशिनष्टि स्वमेवेति । प्रेक्षावंतो यं वासुदेवाभिधमामनंति तं स्वं सदानंदरूपं स्वतंत्रं वा धिष्ण्यं स्थानमाधारं भगवंतमेव बहुमानयंतं भक्त्योपासमानं पुनरपि कीदृशं प्रत्यगात्मनि स्वांतर्यामिणि धृतमाहितमक्षाख्यमंबुजकोशं विबुधानामुदयाय ईषदुन्मीलयंतं विकसितं कुर्वाणं अनेन "संप्रेक्ष्यनासिकाग्रंस्वं दिशश्चानवलोकयन्नि-" तिवचनादवनतजनानुग्रहायोन्मीलनमन्यदा न युक्तमित्युपास्तावित्थंभावो दर्शितः

१. नेत्राख्यकमलमुकुलं । -(या.)

"आधारआश्रयोधिष्ण्यं निधानंचामिधीयत " इति वचनात्। " धिष्ण्यौशुक्रानिलौधिष्ण्यमृक्षेस्थानेबलेगृह " इत्युक्तं शुकादिकं न ग्राह्यमनुपयोगात् वासुदेवाभिधमित्युक्तत्वाच्च ॥ ४ ॥

ई शेषदेवनिगे श्रीहरिय उपासनेय होर्तु एरडने व्यापारवे इल्लवेंदु ( तिळिसुवदक्के ) अंथ विशेषणगळिंद आ शेषदेवनन्नु प्रकटिसुवरु ( होगळुवरु )— ज्ञानिगळु यावनन्नु श्रीवासुदेवनेंब नामवुळ्ळवनेंदु हेळुवरो. आ सदा आनंदस्वरूपियाद अथवा स्वतंत्रनाद 'धिष्ण्यं' तनगे ( शेषदेवनिगे ) आधारभूतनाद श्रीहरियन्नु अत्यंतभक्तियिंद उपासने माडुत्तिद्द मत्तू तन्न अंतर्यामियाद श्रीहरियल्लिये दृष्टियन्निट्ट स्वल्पु अरळिद नेलकमलवुळ्ळवनागि देवतिगळिगे उच्छ्रयवागुवदक्के स्वल्पु कण्णुतेरेयुव ( अंदरे देवतिगळन्नु कृपाकटाक्षदिंद नोडुत्तिरुव ) हीगे हेळुवदरिंद भगवद्ध्यान माडुववनु, " एरडनेकाडिगे नोडदे तन्न नासिकाग्रदल्लिये नोडुत्तिरबेकु " एंदु भगवद्गीतेयल्लि हेळिदंते कण्णुतेरेयुवदादरू तन्न पादक्के नमस्करिसुव भक्तजनरमेले अनुग्रहमाडुवदक्केवे होर्तु बेरे समयदल्लि उचितवल्लवेंदु उपासनेगे ई प्रकार लक्षणवेंदु हेळिदंतायितु. ई श्लोकदल्लि 'धिष्ण्यं' एंब शब्दक्के आश्रयवेंदर्थवु. धिष्ण्यं एंब शब्दवु शुक्रनल्लियू वायुनल्लियू नक्षत्रदल्लियू स्थानदल्लियू बलदल्लियू गृहदल्लियू उपयोगिसल्पडुवदु; आदर, इल्लि आ यावू उपयुक्तवल्लवादकारण हागू 'वासुदेवाभिधं' एंब शब्दविद्दरिंदलू 'धिष्ण्यं' एंब शब्दवु आधारदल्लियू आश्रयदल्लियू निधानदल्लियू उपयोगिसल्पडुवदेंदु कोशोक्तियिद्दरिंद ( वासुदेवने ) आश्रयनागिरुवनेंदर्थवु. ॥ ४ ॥

**स्वर्धुन्युदारैः स्वजटाकलापैरुपस्पृशंतश्चरणोपधानं ॥ पद्मं यदर्चंत्यहिराजकन्याः सप्रेमनानाबलिभिर्वराहाः ॥ ५ ॥**

पथिकसार्थप्रश्नवन्नायं प्रश्नः अवश्यं ज्ञातव्यत्वेनेति बहुमानं वक्ति स्वर्धुन्युदारैरिति। सप्रेमेति क्रियाविशेषणं अहिराजकन्याः नानाबलिभिर्बहुविधपूजासाधनैर्यत्पद्ममर्चयंति वराहाः वरप्राप्तियोग्या इत्यनेनोत्तमभर्तृप्राप्तये पूजेतिसूच्यते स्वर्धुन्या भागीरथ्या उदस्य उदकस्यारा स्नानलक्षणा प्राप्तिर्येषां ते स्वर्धुन्युदारास्तैः ऋगताविति धातोर्घञ्प्रत्ययेनार इति रूपं यद्वा स्वर्धुन्या अवगाहेन उदारैर्महद्भिः " उदारो दातृमहतो- " रित्यभिधानं एवंविधैः स्वजटाकलापैस्तस्य संकर्षणस्य चरणयोरुपधानं पीठायमानं तत्पद्ममुपस्पृशंतः यावत्प्रसादं स्पृष्ट्वा नमंत इत्यर्थः ॥ ५ ॥

विदुरन, ई प्रश्नेयु हादिकाररु अनेक जातिय जनरु हादी नडेयुवाग्ये हादि सागुवदक्के केळिदंते अल्लवु, ( अंदरे होत्तु होगदे कोळिद प्रश्नेयल्लवु. ) ई विषयवु अवश्यवागि तिळकोळ्ळतक्कदेंदु तिळिसुवदक्के ई विषयवन्नु बहुमानपूर्वकवागि हेळुवरु-- ( प्रेम्णासहितंयथास्यात्तथा इतिक्रियाविशेषणं ) याव शेषदेवनु पादवनिडतक्क पीठदंतिरुव पद्मवन्नु, नागराजन कन्यागळु अत्यंत प्रेमपूर्वकवागि अनेक प्रकारवाद पूजासाहित्यगळिंद, तमगे उत्तमनाद पतियु दोरेयुवदक्के ( शेषदेवनिंद ) वरपडेयुवदक्कागि, स्वर्गनदियाद भागीरथीयल्लि स्नानमाडुवदरिंद तोयिदिद्द ( तलेय्मेलिन कूदलुगळिंद ) वेणीभारगळिंद, अथवा भागीरथीस्नानदिंद श्रेष्ठत्ववन्नु होंदिद वेणीभारगळिंद स्पर्श माडुत्त ( अंदरे आ शेषदेवन पादपीठक्के शिरसा नमस्करिसुत्त ) अवन प्रसादवु दोरेयुववरेगू पूजिसुत्तिरुवरु. ॥ ५ ॥

१. गंगोदकस्नानेन आर्द्रैरिति यावत्। – ( या. )



**मुहुर्गृणंतो वचसानुरागस्खलत्पदेनास्य कृतानि तज्ज्ञाः ॥ किरीटसाहस्रमणिप्रवेकप्रद्योतितोद्दामफणासहस्रं ॥ ६ ॥**

नमस्कारस्याष्टांगविशिष्टत्वं सूचयतीत्याह मुहुर्गृणंत इति। अस्य शेषस्य कृतानि कर्माणि अनुरागेण भक्त्या स्खलंति पदानि यस्मिंस्तत्तथोक्तं तेन वचसा तज्ज्ञाः नमनप्रकारं कर्मप्रकारंच जानंतइत्यर्थः देवाः किरीटाद्यलंकारवंतः श्रूयंते कोस्यालंकारो येन देवमित्युक्तिः सार्था स्यादिति तं विशिनष्टि किरीटेति। सहस्रमेव साहस्रं किरीटानां सहस्रे प्रत्युप्ताना मणीनां प्रवेकैः श्रेष्ठैः प्रद्योतितं प्रकाशितं उद्दामं उत्कृष्टं च फणाना सहस्रं यस्य स तथोक्तस्तं ॥ ६ ॥

आ नागकन्निकेयरु शेषदेवनिगे केवल शिरसिनिंदले नमस्करिसुत्तिद्दरेंदल्लवु, ( उरसाशिरसादृष्ट्या एंब अष्टांगसहितवाद ) साष्टांगनमस्कारवन्ने माडुत्तिद्दरेंदु ई श्लोकवु सूचिसुवदु— आ नागकन्निकेयरु शिरसिनिंद नमस्करिसुवदल्लदे 'मुहुः' मत्ते, ई शेषदेवनु माडिद महाकार्यगळन्नु, अवनल्लि स्नेहयुक्तवाद भक्तियिंद, स्पष्टोच्चरिसितक्क पदगळुळ्ळ वाणियिंद 'तज्ज्ञाः' नमस्कार माडतक्क साष्टांग पद्धतियन्नू आ शेषदेवु माडिद महा चरित्रेगळन्नु बल्लवराद, आ नागकन्निकेयरु होगळुत्तिद्दरु. ओळ्ळेदु, देवतिगळु किरीटमोदलाद अलंकार वुळ्ळवरेंदु केळिकेयुंटु; इवनिगे याव अलंकारवुंटु? अंथ यावदादरोंदु श्रेष्ठ अलंकारविद्दरे इवनिगे " देवं " एंब शब्दप्रयोगवु सार्थकवागबहुदु एंदरे अदन्ने विस्तरिसुवरु. सहस्र किरीटगळमेले इरतक्क श्रेष्ठवाद रत्नमणिगळिंद प्रकाशवुळ्ळ सहस्र फणा-( हडि )गळिंद शोभिसुत्तिरुव शेषदेवनन्नु, सनत्कुमारने मोदलाद मुनिगळु प्रश्नमाडिदरेंदु हिंदे ३ ने श्लोकदल्लि हेळिद्दक्के अन्वयवु. ॥ ६ ॥

**प्रोक्तं किलैतद्भगवत्तमेन निवृत्तिधर्माभिरताय तेन ॥ सनत्कुमाराय स चाह पृष्टः साख्यायनायागधृतव्रताय ॥ ७ ॥**
**साख्यायनः पारमहंस्यमुख्यो विवक्षमाणो भगवद्विभूतीः ॥ जगाद सोऽस्मद्गुरवेन्विताय पराशरायाथबृहस्पतेश्च ॥ ८ ॥**
**प्रोवाच मह्यं सदयालुरुक्तो मुनिः पुलस्त्येन पुराणमाद्यं ॥ सोऽहं तवैतत्कथयामि वत्स श्रद्धालवे नित्यमनुव्रताय ॥ ९ ॥**

तेन संकर्षणेन सनत्कुमाराय प्रोक्तं ॥ इदं पुराणं त्वत्प्रश्नपरिहारत्वेन वक्ष्यामीत्येतावता पूर्णत्वात् ॥ सांख्यायनायेत्यादिकथनेन किं प्रयोजनमित्याशंक्य पुराणाध्येतृगुरुपरंपराकथनं श्रोतॄणां आप्त्यतिशयबुद्ध्या तच्छ्रवणादौ क्षिप्रं निरंतरं प्रवृत्तिः स्यादिति महाप्रयोजनमस्तीति सूचयन्नाह। प्रोक्तमित्यादिना। निवृत्तिधर्माभिरतत्वात्किं पुराणश्रवणादधिकारसंपत्त्यर्थमुच्यतइति ज्ञातव्यं ॥ ७ ॥ ८ ॥ ९ ॥

ओळ्ळेदु, मैत्रेयरु, आ शेषदेवनिंद सनत्कुमारनिगे हेळल्पट्ट ई भागवतपुराणवन्नु निन्न ( विदुरन ) प्रश्नपरिहारक्कागि हेळुवेनु, एंदु इष्टे हेळिद्दरे साकित्तु. मध्यदल्लि ई सांख्यायनमोदलादवर हेसरु हेळुवदरिंदेनु प्रयोजनवेंदु संदेह बंदरे पुराणवन्नु अध्ययन माडतक्कवरिगे ( केळतक्कवरिगे ) ई पुराणवन्नु ईथिय श्रेष्ठगुरुगळ परंपरा श्रवणमाडुत्त बंदिरुवरेंदु हेळुवदरिंद ई ग्रंथदल्लि अतिशयप्रामाण्य-

१. अत्रेयमाख्यायिका—पितरं राक्षसभक्षितं श्रुत्वा पराशरो राक्षसहननाय यज्ञे प्रवृत्तो वशिष्ठवचनान्निवृत्तः। ततः पुलस्त्येन स्वसंतानरक्षणात्तुष्टेन वरो दत्तः। पुराणवक्ता भविष्यसीत्येवं रूपा तां सूचयितुं विशेषणं। –( या. )

बुद्धियु हुट्टि इदन्नु तीव्रवागि निरंतर तप्पदंते श्रवणमाडुव इच्छेयु उंटागलि, एंब्वेंदु ओंदु महाप्रयोजनविरुवदेंदु सूचिसुत्त ई ग्रंथवु तम्म (मैत्रेयर) किविगे बीळबेकादरे याव याव महाजनगळबायिंद बंदिरुवदेंदन्नु हेळुवरु-- 'हे अंग' एंदु प्रीत्यास्पदनाद विदुरने, अत्यंत पूज्यस्वरूपनाद आ शेषदेवनिंद, सकल संसारधर्मगळन्नु परित्यागमाडतक्क वैराग्यमार्गदल्लिये अत्यंत बुद्धियुळ्ळ सनत्कुमारनिगे ई भागवतवु हेळल्पट्टित्तेंदु. आ सनत्कुमारनु ब्रह्मचर्यादिव्रतगळन्नु धरिसिद सांख्यायननेंब ऋषिश्रेष्ठनिगे, अवन प्रश्नगळिगे उत्तररूपवागि ई भागवतवन्ने हेळिदनु. सर्वसंगपरित्यागमाडिद सनत्कुमार निगे ई पुराणश्रवणवादरू याकेंदरे, ई भागवतश्रवणक्के सर्वसंगपरित्यागमाडिदवरे अधिकारिगळेंदु हेळुवदक्के ई 'निवृत्तिधर्माभिरताय' एंब विशेषणवु. ॥७॥ परमहंसधर्मगळन्नु धरिसिदवरल्लि श्रेष्ठराद आ सांख्यायन ऋषिगळु श्रीहरिय विभूतिरूपगळन्नु हेळलिच्छेयुळ्ळवरागि, तम्म शिष्यरन्नु माडुत्तिद्द नम्म (मैत्रेयर) गुरुगळाद पराशर ऋषिगळिगू, बृहस्पत्याचार्यरिगू अवरवर प्रश्नानुसारवागि ई भागवतवन्नु हेळिदरु. ॥८॥ आ दयाळुगळाद पराशर ऋषिगळु, पुलस्त्यऋषिगळ वचनानुसारवागि श्रेष्ठवाद भागवतपुराणवन्नु ननगे हेळिदरु. (पुलस्त्यऋषियु पराशरऋषिगळिगे सूचनेमाडिदबगे ओंदु कथेयुंटु; एनेंदरे, पराशरऋषिगळ तंदेयन्नु ओब्ब राक्षसनु तिंदिद्द सुद्दियन्नु केळि, आ पराशरऋषिगळु राक्षसरन्नु समूल नाशमाडबेकेंदु यज्ञमाडुवदक्के उद्युक्तरागिरलु वसिष्ठरु बेडेंदु हेळिदरु. आ वसिष्ठ-वाक्यदिंद राक्षसर नाशमाडुव यज्ञवन्नु अष्टक्के बिडलु, राक्षसर वंशक्के तंदेयाद पुलस्त्यऋषियु तन्न संतानवन्नु उळिसिदनेंदु तुष्टनागि ई पराशरऋषिगळिगे नीनु भागवतपुराण प्रवक्तृवागेंदु वरप्रदान माडिदरु. ई प्रकार पुलस्त्यरिंद प्रेरितरागि पराशरऋषिगळु ननगे श्रीमद्भागवतवन्नु उपदेशमाडिदरु एंदु ई आख्यानवन्नु सूचिसुवदक्के 'पुलस्त्येन उक्तः' एंब विशेषणवन्नु कोट्टिरुवरु एंदु यादवार्यरु बरेदिरुवरु.) 'हे वत्स' एंदु नन्न अंतःकरणक्के पात्रनाद विदुरने आ नानु (अंदरे. आ पराशरऋषिगळिंद श्रवणमाडिद नानु) निरंतर भक्तिमंतनाद हागू ननगे अनुकूलतेयिंदिरुव निनगे (विदुरनिगे) अदे श्रीमद्भागवतवन्नु हेळुवेनु. ॥ ९ ॥

**उदप्लुतं विश्वमिदं तदासीद्यन्निद्रया मीलितदृङ् न्यमीलयत् ॥ अहींद्रतल्पेधिशयान एकः कृतक्षणः स्वात्मरतावनीहः ॥ १० ॥**

तदेवं शुकः पाद्मं कल्पमिमं शृण्वित्युक्तं पाद्मं कल्पं मैत्रेयेण विदुरप्रश्नपरिहाररूपत्वेन कथयति उदप्लुतमिति। अनीहोऽक्लिष्टकारी अनः प्राणोस्यास्तीति अनी प्राणी तदर्थमीहा चेष्टावतारादिचरितं यस्य सोऽनीहः उपरतसर्गादिव्यापारोवा स्वात्मनि रतौ कृतक्षणः लब्धावसरः अहींद्रस्यानंतस्य तल्पे भोगाख्यशय्यायामेको-धिशयानो यद्यदा मीलितदृक् विनिद्रोपि निद्रामीलितलोचनो न्यमीलयत् योगनिद्रामुद्रितनेत्रः अभूत् तदेदं विश्वं उदप्लुतं उदे जले प्लुतं गतं मग्नं कल्पप्रलये जल-शायिश्रीनारायणोदरगतमासीदित्यर्थः ॥ १० ॥

इदे संगतियन्नु श्रीशुकाचार्यरु परीक्षितराजनिगे इन्नु पद्मकल्पवन्नु निनगे हेळुवेनेंदु अंदिद्दरु अदक्कागिये ई विदुरमैत्रेयर प्रश्नोत्तरगळल्लि नडेद पद्मकल्पसंगतियन्नु हेळुवरु— 'अनीहः'= सुलभकार्यमाडुव अथवा अन अंदरे प्राणदेवरु, आ प्राणवुळ्ळ जीवरु अनी एनिसुवरु. आ जीवर मलवागिये तन्न अवतारमोदलाद चरित्रेगळन्नु माडुव विषयदल्लि इच्छेयुळ्ळवनु अथवा सृष्टिये मोदलाद व्यापारगळन्नु माडुव इच्छेयन्नु साकुमाडिदवनु 'स्वात्मरतौ कृतक्षणः' तन्नल्लि ताने आनंदपडुवदक्के अवकाशवुळ्ळवनागि शेषशय्यादल्लि ओब्बने मलगिद्दु तनगे निद्रेयिल्लदिद्दरू योगनिद्रेय

१. सत्यलोकपर्यंतोदके। -(या.)

चिन्हवुळ्ळवनागिद्दनु. (अंदरे योगिगळु योगाभ्यासमाडुवाग्ये निद्रावस्थे इल्लदिद्दरू निद्रिगण्णिलिद्दवनंते ह्यागे स्वल्पु कण्णुपिळिकिसुत्तिरुवरो, हागे) आ समयदल्लि ई जगत्तु सत्यलोकपर्यंतरवागि नीरिनल्लि मुळुगित्तु अंदरे, कल्पप्रलयदल्लि जलशायियाद श्रीनारायणन उदरदल्लित्तु एंदु अर्थवु. ॥ १० ॥

**सोऽन्तःशरीरेर्पितभूतसूक्ष्मः कालात्मिकां शक्तिमुदीरयाणः ॥ उवास तस्मिन्सलिले पदे स्वे यथानलो दारुणि रुद्धवीर्यः ॥ ११ ॥**

तदोदरीकृतलोकयात्रो हरिः किं चकारेति तत्राह सोंतरिति। यथानलो दारुणि काष्ठे रुद्धवीर्यः प्रतिबद्धदाहकत्वशक्तिर्वसति तथा हरिरपि शरीरांतर्हृदया-काशेर्पितानि स्थूलकार्यदेहस्य लीनत्वाद्भूतानां सूक्ष्माणि रूपाणि यस्य स तथा। यद्वा शब्दादितन्मात्रारूपाणि एतदात्मकत्वात्सर्वस्येति चराचरात्मकं सर्वं गृह्यते कालात्मिकां प्रलयकालमात्राख्या शक्तिं यद्वा प्रलयकालाभिमानिनीं शक्तिं भार्यां सुखे प्रेरयन् स्वे पदे स्वस्थाने सलिले उवासेत्यन्वयः। उदीरयाणः उदीरयमाण इति शानचा स्वात्मनीति सूचयति ॥ ११ ॥

आग्ये सकललोकप्रवाहवन्नु तन्न उदरदल्लिट्टुगोंड सर्वसृष्टियन्नु समापनमाडि, श्रीहरियु मुंदे एनु माडिदनु एंदरे हेळुवरु-- अग्नियु काष्ठदल्लि सूक्ष्मरूपदिंदिद्दाग्ये तन्न दाहक- (सुडुव) शक्तियन्नु ह्यागे प्रतिबंधमाडिकोंडि- (मुच्चिगोंडि) रुवनो, अदरंते श्रीहरियादरू तन्न शरीरदोळगिन अवकाशदल्लि चेतनगळिगे तम्म सकल व्यापारगळन्नु माडुवदक्के योग्य-वाद स्थूलशरीरगळु लीनवागि (मुच्चिहोगि) सूक्ष्मशरीरवुळ्ळवुगळन्नु माडि अवुगळन्निट्टुगोंडु अथवा चराचरात्मकवाद जगत्तु याव पंचभूतात्मकवो, आ पंचभूतगळ सूक्ष्मरूपवाद मात्रागळन्नु तन्न उदरदल्लिट्टुगोंडु अंदरे, सूक्ष्मरूपदिंद सर्व जगत्तन्नु तन्न उदरदल्लिट्टुगोंडु 'कालात्मिका शक्ति' प्रलयकालमात्रा एंब हेसरुळ्ळ अथवा प्रलयकालक्के अभिमानियाद 'शक्ति' एंब हेसरुळ्ळ तन्न हेंड-तियन्नु सुखदल्लि प्रेरणेमाडुत्त तन्न स्थानवाद उदकदल्लि वासमाडिदनु. 'उदीरयमाण' एंदु प्रयोगमाडुव स्थळदल्लि 'शानच्' प्रत्ययदिंद 'उदीरयाणः' एंदु प्रयोगमाडिरुवदरिंद तन्नल्लिय शक्तियन्ने प्रेरणेमाडिदनेंदु तोरुवदु. ॥ ११ ॥

**चतुर्युगानां च सहस्रमप्सु स्वपंस्तयोदीरितया स्वशक्त्या ॥ कालाख्ययासादितकर्मतंत्रो लोकानपीमान्ददृशे स्वदेहे ॥ १२ ॥**

स्वापावधिमाह चतुर्युगानामिति। चशब्देनोवासेतिपदमनुकर्षति चतुर्युगानां सहस्रमिति संख्यातं कालं स्वपन्नप्सूवासेति तत उत्तरकाले का क्रियाभूदिति तत्राह तयेति। सृष्टिसंहारशक्त्योरेकत्वद्योतनाय तयेति परामृष्टं। सृष्टिकालाख्ययोदीरितया प्रेरितया स्वशक्त्यासादितकर्मतंत्रः सृष्ट्यर्थमुपस्थापितः[1] जगत्सर्ग-दृष्टाख्यसाधनः नित्यज्ञानगोचरत्वादिमान् लोकान् स्वदेहे हृदयाकाशे ददृशे। अपि शब्दात्रिविधानपश्यदिति ग्राह्यं दृष्ट्वा सिसृक्षुरभूदिति वा अपीतानित्यपपाठः ॥ १२

आ श्रीहरियु एष्टु दिवसगळवरेगे नीरिनल्लि मलगिद्दनेंदरे हेळुवरु-- ई श्लोकदल्लि 'च' एंबदरिंद हिंदिन श्लोकदल्लिय 'उवास' एंब क्रियापदवु इल्लियू संबंधिसुवदेंदु हेळल्पडुवदु. चतुर्युग गळेंदरे कृत, त्रेता, द्वापर, कलि एंब नाल्कु युगगळु. ई नाल्कुयुगगळु सेरि, ओंदु महायुगवेनिसुवरु. इंथ महायुगगळु सहस्र (आदरे चतुर्मुखब्रह्मदेवनिगे ओंदु हगलु; अवन रात्रियादरू अष्टे

१. उपस्थापितादृष्टाख्यसाधनः। -(या.)

कालावधियुळ्ळद्दु ) आदरे अदु एष्टुकाल अवधियो, अष्टुकालदवरेगे योगनिद्रेयुळ्ळवनागि श्रीहरियु नीरिनल्लि वासमाडिद्दनु. अनंतर मुंदे एनु केल्सवु नडिदितेंदर हेळुवरु– हिंदे प्रळयकालदल्लि तन्न भार्येळाद याव कालशक्तियन्नु मुरवनिद्रार्थवागि श्रीहरियु प्रेरणेमाडिद्दनो. अदे शक्तियन्नु सृष्टिकालदल्लि सृष्टियसलुवागि श्रीहरियु प्रेरणेमाडलु, आ शक्तियु सृष्टिगे बरतक्क एल्ल विविधजीवराशिगळ अदृष्टवु इनिष्टु प्रकारवेंदेंदु प्रार्थनेमाडलु अवरिंद प्रार्थितनागि जगत्सृष्टिगे अदृष्टवे साधनवुळ्ळवनागि । अंदरे, आया जीवरवु अवरवर अनादिकर्मवेंव अदृष्टानुसारवागि अवरवरवु तक्क सृष्टिमाडुवदक्के अदृष्टवन्नु केळुकोंडु ) यद्यपि श्रीहरियु तन्न नित्यज्ञानदिंद सर्वदा सर्ववन्नु बल्लवनादाग्यू तन्न हृदयदल्लिद्द एल्ल लोकगळन्नु त्रिविध जीवराशिगळन्नु सृष्टिगे समीपस्थरादद्दन्नु नोडि. ई यावत्तू सृष्टिमाडबेकेंदु अपेक्षिसिदनु. ई श्लोकदल्लि ' अर्पितान् ' एंब पाठविद्दरे अदु अपपाठवेंदु तिळियतक्कद्दु. ॥ १२ ॥

## तस्यात्मसूक्ष्माभिनिविष्टदृष्टेरंतर्गतोर्थो रजसा तनीयान् ॥ गुणेन कालानुगतेन विद्धः शुष्यंस्तदाभियत नाभिदेशात् ॥ १३ ॥

सिसृक्षोस्तस्मादादौ किमभूयेन तद्विशेषणोपादानं प्रयोजकं स्यादिति तत्राह तस्येति । यदा सिसृक्षुरभूत्तदार्थो गर्भोदकलक्षणस्तस्य हरेर्नाभिदेशादभियत नाभिदेशं भित्वा प्रकाशतेत्यन्वयः । हरेः स्वातंत्र्यद्योतनार्थं भावप्रयोगः हरेः सूज्येष्वशेषविशेषज्ञानमस्ति न केवलं कुलालवद्युक्तिज्ञानमेवेति भावेनाह आत्मेति । आत्मनि स्थितेषु सूक्ष्मेषु योगिप्रत्यक्षविषयेषु आकाशादिभूतेषु इंद्रियेषु जीवेषु चाभिनिविष्टा सम्यक् विषयीकृता दृष्टिरपरोक्षज्ञानं यस्य स तथा तस्य घटकारणादिवत् बाह्यार्थो नेत्याह अंतर्गतइति । अनेनाभूतस्योदरे सत्वमुक्तं भवति इतोपि बाह्योदकं नेत्याह तनीयानिति । परमाणुत्वं प्राप्तः गर्भोदकस्य प्रागेव सत्वात् किमिति कार्यानुत्पत्तिरितितत्राह रजसेति । रजसा गुणेन विद्धः अनुस्यूतः रजसोपि सत्वात् किमिति नतः पूर्वमनुत्पत्तिरित्यतः कालेति सृष्टिकालशक्त्या अनुत्पन्नइत्यनुत्पन्नइति भावः । अनेनेश्वरस्येच्छा मुख्यं कारणमित्युक्तं भवति वायुमंतरेण कथमुत्पत्तिर्घटत इत्यत उक्तं शुष्यन्निति शुष्यन् घनीभवन् वायुनेतिशेषः । " उदकं वायुनाशुष्यद्भिन्नंपद्ममभूद्धरे–" रिति ॥ १३ ॥

सृष्टिमाडबेकेंब इच्छेयुळ्ळ आ परमात्मनिंद मोदलिगे एनु उत्पन्नवायितु, यावदादरोंदु आ कूडले हुट्टिदरे आ श्रीहरियु सृष्टिमाडबेकेंब इच्छेयुळ्ळवनादनेंदु हेळिद्दु सरियादीतु: एंदरे ( इच्छामात्रं प्रभोः सृष्टिः ) आ कूडले सृष्टवादद्दन्नु हेळुवरु– श्रीनारायणनु यावाग सृष्टिमाडबेकेंब इच्छेयुळ्ळवनादनो आ कूडले ' अर्थः ' गर्भोदकवेंब अर्थवु आ परमात्मन नाभिदेशदिंद अंदरे अवन नाभिप्रदेशवन्नु शीळि कमलद स्वरूपदिंद होरगे प्रकाशवायितु. ई कार्यवु केवल श्रीहरिय स्वातंत्र्यदिंदले आयितेंदु तोरिसुवदक्के ' अभियत ' एंब भावप्रयोग विरुवदु. श्रीहरिगे, सृष्टवागतक्क ( हुट्टतक्क ) सकलपदार्थगळ यावत्तू ज्ञानविरुवदु अवन ज्ञानवु कुंबारनु कोडवन्नु सृष्टिमाडुवदक्के युक्तियिंद ह्यागे ज्ञानसंपादिसिरुवनो हागल्लवु, एंब अभिप्रायदिंद हेळुवरु– श्रीहरियु तन्न उदरदल्लिद्द सूक्ष्मरूपवुळ्ळवागि योगिगळ ज्ञानदृष्टिगे तोरतक्क आकाशमोदलाद भूतगळू इंद्रियगळू जीवराशिगळू इवुगळन्नु सरियागि तन्न अपरोक्ष ( निजज्ञान ) दृष्टियिंद नोडतक्कवनागिद्दनु. कोडद सृष्टिगे कारणवाद मृत्तिकेयु ह्यागे होरगे इरुवदो, हागे ई जगत्सृष्टिगे उपादानकारणवादद्दु परमात्मन होरगे इद्दल्लवु एंदु हेळुवरु– ' अंतर्गत ' एंब पददिंद जगत्तिगे उपादानकारणवादद्दु उदकस्वरूपदिंद परमात्मन उदरगतवागित्तु एंदु हेळल्पडुवदु. आ उदकवु होरगे इद्दल्लवु परम सूक्ष्मरूपदिंद श्रीहरिय गर्भदल्लि मोदले इद्दाग्यू अदुवरेगे जगत्तु याके उत्पन्नवागिद्दिल्लवेंदरे हेळुवरु– आ गर्भोदकवु रजोगुणदिंद मिश्रवादरे आग्ये जगदुत्पत्तियागुवदु. हागादरे, रजोगुणवुसह मोदलिनिंद इद्ददे, आदरू याके जगत्तु हुट्टलिल्लवेंदरे, सृष्टिकालक्के नियामकळाद कालशक्तियु आ गर्भोदकक्कू रजोगुणक्कू प्रेरणेमाडिद्दिल्लवु. आ कालशक्तिगे अदुवरेगे श्रीहरिय प्रेरणेइद्दिल्लवु. हींगे हेळुवदरिंद सर्वक्कू श्रीहरीच्छेये मुख्यवादद्देंदु हेळल्पडुवदु. हागादरे वायुदेवनिल्लदे उत्पत्तियु ह्यागे संभविसुवदु ? एंदरे आ गर्भोदकवु वायुविनिंद शुष्कवागि रजोगुणदिंद मिश्रवागि श्रीहरिप्रेरणानुसारवागि कालशक्तियिंद प्रेरितवागि श्रीहरिय नाभियन्नु भेदनमाडि कमलरूपदिंद होरगे बंदितु. ॥ १३ ॥

## सपद्मकोशः सहसोदतिष्ठत्कालेन कर्मप्रतिबोधितेन ॥ स्वरोचिषा तत्सलिलं विशालं विद्योतयन्नर्कइवात्मयोनिः ॥ १४ ॥

उक्तकारणानां बहुत्वात् किमस्य मुख्यं कारणं किंचास्य नामधेयमिति तत्राह सपद्मकोशइति । लयोदकं विनान्यस्य वस्तुनो भावादनिरूपितत्वेनैतद्दर्शनात्सहसेत्युक्तं आत्मा विष्णुर्योनिर्मुख्यं कारणं यस्य स आत्मयोनिः कर्मणा अदृष्टेन प्रतिबोधितेन फलदानाय प्रेरितेन कालेनेरित इति शेषः उदतिष्ठत् यथा चतुर्दशभुवनं स्यात्तथा प्रवृद्धोभूदित्यर्थः ॥ १४ ॥

श्रीहरिय नाभियिंद उत्पन्नवाद वस्तुविन उत्पत्तिगे अनेक कारणगळु हिंदे हेळल्पट्टवु; अदरल्लि यावदु मुख्यकारणवेंदु तिळियतक्कद्दु ? आ उत्पन्नवाद वस्तुविन हेसरु एनु, एंदरे हेळुवरु– आ समयदल्लि प्रळयोदकद होर्तु एरडने वस्तुवे इल्लद्दरिंद यावदादरोंदु वस्तुवु हुट्टुवदक्के दृष्टकारणगळु यावू इल्लद्दरिंद एकदा श्रीविष्णुवे उत्पत्तिगे कारणवाद एल्ल जीवराशिगळ अदृष्टानुसारवागि अवरवर तक्कफल कोडुवदक्के उद्युक्तळाद कालसंज्ञावुळ्ळ स्मादेविथिंद हदिनाल्कु लोकगळिंद महितवाद पद्मवु तन्न कांतियिंद आ प्रळयकालद होरगिन विशालवाद उदकवन्नु सूर्यनंते प्रकाशमाडुत्त तन्निंद हदिनाल्कु लोकगळु प्रकटवागुवंते अभिवृद्धवायितु. ॥ १४ ॥

## तल्लोकपद्मं स उ एव विष्णुः प्रावीविशत्सर्वगुणावभासं ॥ तस्मिन्स्वयं वेदमयो विधाता स्वयंभुवं यं स्म वदंति सोऽभूत् ॥ १५ ॥

चेतनसंबंधमंतरेणाचेतनस्य पद्मस्य सूर्यवत्प्रकाशकत्वं कथं मण्यादीनामीश्वरेच्छया तेजःपरमाणूनां प्राचुर्येण संयोगसंभवात्कथंचिद्युज्यते अस्य तु रजसेति पार्थिवपरमाणुभ्य उत्पत्तिकथनात्तेषां तादृशशक्त्यदर्शनादतः कारणांतरेण भाव्यं तत्किं तत्राह तल्लोकेति । यस्मात्पद्ममभूत् स एव विष्णुस्तल्लोकविभागकारणं पद्मं प्राविशत् यथा सूर्यवत्प्रकाशकत्वमहात्म्यं स्यात्तथाविष्टवान् उकारेण रूपांतरेण प्रवेशं सूचयति एवकारेणाणुमात्रमपि भेदो नास्तीति निर्धारयति भेददर्शनेन संतापलक्षणं दुःखं स्यादित्यर्थवाची वोकारः । " उतापव्ययमीशाने " इति यादवः । विष्णोरेव प्रकाशकत्वं न पद्मस्य तस्य पृथिव्यात्मकत्वादिति भावेनाह सर्वेति । सर्वेषां शब्दादिगुणानामवभासः प्रतीतिर्यस्यां पृथिव्यां सा सर्वगुणावभासा तदात्मकत्वात् पद्ममपि गुणावभासमित्युच्यते । तदुक्तं " तस्यासनविधानार्थं पृथिवीपद्ममुच्यत " इति तत्प्रवेशप्रयोजनमाह तस्मिन्निति । तस्मिन्पद्मे सन्निविष्टात् स्वयंप्रधानात्सर्वोत्तमाद्धरेः स विधाताभूदित्यन्वयः । " प्रधानवाचकस्त्वेकस्त्वनन्यः केवलः स्वय–" मिति । अतः स्वयंशब्दस्य प्रधानवाचित्वेपि विष्णोर्जातत्वं कथमवगतमितीयं शंका । " पद्मसंस्थाद्धरेस्तत्र ब्रह्माजनिचतुर्मुख " इत्यनेन परिहृते-

स्वरूपेणेति स्वरूपेण मयोपेतं हृदि स्थितं जीवस्वरूपं पश्यन् मुक्तो भवति अयं भावः यदात्मानं स्वरूपं जीवसंज्ञं भूतेंद्रियादिरहितं देहादिष्वात्मभावं त्यक्त्वा हृदि स्थिते जीवरूपे आत्मभावं दृष्ट्वा हृदि स्थितेन स्वरूपेण स्वबिंबरूपेण मयोपेतं समीपे स्थितं मम पादाब्जसेवकत्वेन वर्तमानं पश्यति तदा स्वरूपानंदानुभवमुपैतीति । तदुक्तं " त्यक्त्वादेहाद्यात्मभावं जीवरूपेहृदिस्थिते । दृष्ट्वात्मभावंतंचापि हरिपादाब्जसंस्थितं । यदापश्यत्यापरोक्ष्यात्तदा मुक्तिं व्रजत्यसा- " विति ३३

इष्ट ज्ञानदिंद साल्दु एंदु हिंदे हेळिद ज्ञानवन्ने पुष्टीकरणमाडुवनु- यावाग्ये जीवात्मनन्नु पंचमहाभूतगळु इंद्रियगळु सत्वादिगुणगळु इवुगळ समूहदिंद भिन्ननादवनेंदु तिळियुवनो, आग्ये मोक्षहोंदुवनु. मोक्षक्के इष्ट ज्ञानवल्लवु, इन्नू विशेष उंटेंदु हेळुवरु- हृदयदल्लिद जीवस्वरूपवन्नू परमात्मनस्वरूपवन्नू कंडनंतर मोक्षवागुवदु. इदर अभिप्राय वेनेंदरे- यावाग्गे ई पंचमहाभूतगळु इंद्रियगळु सत्वादिगुणगळु इवुगळिंद रचितवाद देहवे जीवन स्वरूपवेंब भ्रांतबुद्धियन्नु बिट्टु जीवनु ई देहदिंद भिन्ननागि देहहृदयदल्लि अणुरूपनागिरुवनु. आ जीवन एदुरागि अवन हत्तरवे जीवनिगे बिंबरूपनागि श्रीहरियु इरुवनु. जीवनु आ बिंबरूपनाद अंगुष्ठपरिमितस्वरूपनाद श्रीहरिय पादकमलसेवेयन्नु माडुत्तलिरुवनु. इंथ जीवब्रह्मस्वरूपवन्नु यावाग्ये नोडुवनो, आग्ये स्वरूपानंदाविर्भावेंब मोक्षवन्नु होंदुवनु. ई विषयक्के प्रमाणवु- ' देहवे मोदलादद्दु तानु एंब भाववन्नु बिट्टु हृदयदल्लिद जीवस्वरूपदल्लि श्रीहरियु नियामकनागि बिंबरूपदिंद इरुवनेंतलू आ जीवनु बिंबरूपियाद श्रीहरिय पादसेवकनागिरुवनेंबदन्नु ईप्रकार जीवस्वरूपवन्नू परमात्मस्वरूपवन्नू अपरोक्षज्ञानदिंद यावाग्ये नोडुवनो आग्ये ई जीवनु मोक्षहोंदुवनु ' एंदु दत्तात्रेययोगवेंब ग्रंथदल्लि हेळिद्दंते अर्थमाडिरुवरु.॥ ३३ ॥

नानाकर्मविपाकेन प्रजा बह्वीः सिसृक्षतः ॥ नात्मावसीदत्यस्मिंस्ते वर्षीयान्मदनुग्रहः ॥ ३४ ॥
ऋषिमाद्यं न बध्नाति पापीयांस्त्वां रजोगुणः ॥ यन्मनो मयिनिर्बद्धं प्रजाः संसृजतोपि ते ॥ ३५ ॥

इदानीं तस्मिन्स्वविक्रमइति प्रार्थितंतद्दानप्रकारमाह नानेति । अस्मिन्सृष्टिकर्मणि नानाविधादृष्टाख्यकर्मणां विपाकेन फलदानोन्मुखेन कालेन बह्वीः प्रजाः सिसृक्षतस्ते तवात्मा बुद्धिर्नावसीदति न नश्यति तत्र निमित्तमाह वर्षीयानिति वर्षीयान्बहुसंवत्सरकालसंपन्नः मदनुग्रहोस्तीति यत्तस्मादिति शेषः वर्षीयान् ज्यायानिति वा ॥ ३४ ॥ एतदेव स्पष्टयति ऋषिमिति । " ऋषिस्त्रिकालदर्शीस्या-" दितिवचनात् ज्ञानित्वादाद्यमाद्यौ भवंतं त्वां प्रथमोत्पन्नत्वेन तव श्रेष्ठत्वात् हेत्वंतरमाह । यन्मनइति । प्रजाः संसृजतस्ते तवात्मा बुद्धिर्नावसीदति वेति अन्यव्यापारग्रस्तस्य अन्यत्र मनोभिधानं दुष्करं तथापि तत्कृतमत इतरान्प्रति पापीयानपि रजोगुणस्त्वां न बध्नातीत्यर्थः ॥ ३५ ॥

हिंदे ९३ ने श्लोकदल्लि ' तस्मिन्स्वविक्रमे ' नीनु माडुतक्क सृष्टिमोदलाद कार्यदल्लि सहायभूतनागि ना माडुव सृष्टिकार्यदल्लि रजोगुणद बाधेयु ननगे आगदंते अनुग्रह माडबेकेंदु ब्रह्मदेवनु प्रार्थनेमाडि कोंडदक्के, वरप्रदान प्रकारवन्नु हेळुवरु- हे चतुर्मुखने, ई सृष्टिकार्यदल्लि अनेकप्रकार जीवराशिगळ अवरवरतक्क अनेकप्रकार अदृष्टवेंब कर्मद परिपाकदिंद अदक्के तक्कवाद फलवन्नु

१. नाश्यता भविष्यति यतःवर्षीयान् वृषतरः अत्यधिकोस्तीतिशेषः । -- ( या. ) २. मयि मद्विषये नितरां बद्धं त्वयाहं सम्यक् ज्ञात इत्यर्थः । -- ( या. )



कोडुवदक्के सिद्धवाद कालानुसारवागि बहुविधवाद प्रजरन्नु सृष्टिमाडतक्क निन्न बुद्धियु ई सृष्टिकार्यदल्लि नष्टवागुवदिल्लवु. याकेंदरे कारणवन्नु हेळुवरु- ' वर्षीयान् मदनुग्रहः ' बहुवरुषगळिंद संपादिशिद नन्न अनुग्रहवु निन्नल्लिरुवदु. अथवा एल्लक्कू श्रेष्ठवाद नन्न अनुग्रहवु निन्नल्लिरुवदु ॥ ३४ ॥ इदे विषयवन्ने स्पष्टमाडुवनु-साधारणवागि लोकदल्लि ऋषिगळेंबवरेल्लरू त्रिकालज्ञानिगळागिरुवरु. नीनंतू आदिऋषियु अंदरे एल्ल ज्ञानिगळल्लि मोदलु हुट्टिदवनाद कारण केवल श्रेष्ठनागिरुवि; आदकारण आ सृष्टिसंबंधवाद पापिष्ठ रजोगुणवु निन्नन्नु बंधनमाडुवदिल्लवु. आ विषयक्के इन्नू ओंदु कारणविरुवदु एनेंदरे- प्रजरन्नु अनेकप्रकार सृष्टिमाडिदाग्यू निन्न बुद्धियु स्थमनमग्नवागुवदिल्लवु. याकेंदरे लोकदल्लि ओंदु कार्यदल्लि उद्युक्तनादवनिगे आ कार्यवन्नु माडुवकालक्के एरडनेकडेगे मनःसु इडुवदु अशक्यवादद्दु. ' अथापि तत्कृतं ' आदाग्यादरू आ कार्यवु निर्विघ्नमाडल्पट्टिरुवदु; अंदरे नीनु प्रजरन्नु सृष्टिमाडुत्तलिदाग्यू अवरल्लि नन्नदेंब अभिमानवन्नुबिट्टु नन्नल्लि निन्न मनःसन्नु निर्बंधमाडिरुवि. ( ई माडतक्क प्रजासृष्टियु श्रीहरिसेवेएंदु तिळिदु नन्न ध्यान माडुत्तिरुवि ) आदकारण आ रजोगुणवु ( नानु नन्नदेंब ममतेयु ) इतर जनरिगे पापिष्ठवागि बंधक्के कारणवादरू निन्नन्नु बंधनमाडुवदिल्लवु ॥ ३५ ॥

ज्ञातोऽहं भवता त्वद्य दुर्विज्ञेयोपि देहिनां ॥ यन्मां त्वं मन्यसे युक्तं भूतेंद्रियगुणात्मभिः ॥३६॥

मनोनिबंधनफलमाह । ज्ञातइति।यथास्थितवस्तुज्ञानमेव मत्प्रसादजनकं तत्तवास्तीत्याह यन्मामिति । त्वं भूतेंद्रियगुणात्मभिः भूतेंद्रियत्रिगुणमनोबुद्धिभिर्नियामकतया युक्तं मां मन्यसे नतु तदात्मकत्वेनेति यत्तस्माद्यथार्थज्ञानित्वादित्यर्थः । " भूतेंद्रियमनोबुद्धित्रिगुणादिषुसर्वशः । युक्तंनियामकतया पश्यन्जानातिकेशव- " मितिवचनात् । भूतेंद्रियनियामकतया तद्युक्तज्ञानमेव ज्ञानमितिभावः ॥ ३६ ॥

आ मनःसन्नु श्रीहरियल्लि दृढवागि इड्डदक्के एनु फलवेंदरे हेळुवनु- देहधारण माडिद सकलजीवरिंद नानु तिळियल्पडशक्यनादरू ई दिवस निन्निंद तिळियल्पट्टिरुवेनु; याकेंदरे- यथास्थितवागि ( यावद्वस्तुवु यावप्रकार इरुवदो आ इद्दंते ) आया वस्तुगळन्नु तिळकोळ्ळुवदे ( अंदरे इरुव निजस्थितिगे विरुद्धवागि तिळकोळ्ळदे इरोणवु ) नन्न ( श्रीहरिय ) अनुग्रहक्के कारणवादद्दु. आगुणवु ( यथास्थितज्ञानवु ) निन्नल्लि ( चतुर्मुखनल्लि ) इरुवदेंदु हेळुवनु- पंचमहाभूतगळु इंद्रियगळु सत्वादिगुणगळु मनःसु बुद्धियु इवुगळिगे नियामकनागिरुव नन्नन्नु नीनु तिळिदिरुवियें, होर्तु, आ भूतेंद्रियस्वरूपने श्रीहरियेंदु विपर्यासवागि तिळिदिल्लवु. अदक्कागेये नीनु ( ब्रह्मदेवनु ) यथार्थज्ञानवुळ्ळवनेंदु अर्थवु. इदे मरियादज्ञानवेंबदक्के प्रमाणवु- ' पंचभूतगळु इंद्रियगळु मनःसु बुद्धियु त्रिगुणगळु इवुगळल्लि सर्वप्रकारदिंदलू नियामकनागि श्रीहरियु इरुवनेंदु यावनु तिळियुवनो अवनु केशवनन्नु बल्लनु ' एंदु दत्तात्रेययोगवेंब ग्रंथदल्लि हेळिरुवदरिंद भूतेंद्रियगळिगे श्रीहरियु नियामकनागिरुवनेंदु तिळकोळ्ळुवदे मरियाद ज्ञानवु एंदर्थवु. ॥ ३६ ॥

तुभ्यं मद्विचिकित्सायामात्मा मे दर्शितो बहिः ॥ नालेन सलिले मूलं पुष्करस्य विचिन्वतः ॥३७॥ यच्चकर्थ मम स्तोत्रं मत्कथाभ्युदयांकितं ॥ यद्वा तपसि निष्ठा च स एष मदनुग्रहः ॥ ३८ ॥ ॥ ॥ ॥

इतःपूर्वं स्वरूपनाविष्करणमर्पितवानुग्रहविशेषार्थमित्याशयेनाह । तुभ्यमिति ।प्रलयसलिले पुष्करस्य पद्मस्य नालेन नालनाडीद्वारा पुष्करस्य मूलं कारणं मां विचिन्वतस्तव मद्विचिकित्सायां मद्दिदृक्षाजिज्ञासायां आत्मा मच्चिदानंदलक्षणस्तुभ्यं त्वदर्थं बहिर्दृग्विषयत्वेन दर्शितः ॥ ३७ ॥ त्वत्कथातपोनिष्ठाबलात्त्वं प्रत्यक्षोभूर्नतु स्वत इति दर्पो माभूदिति भावेनाह यच्चकर्थेति । कथवाक्यप्रबंधइतिधातोःस्तोत्रलक्षणो वाक्यप्रबंधः कथा तस्याः सम्यगुदयउत्कर्षस्तेनाकीर्तं युक्तं वागिंद्रियव्यापारस्य मदनुग्रहमंतरेणानुपपत्तेस्तेन शुभविषया प्रवृत्तिर्भूत्तव सएष मदनुग्रह इत्युच्यते " योवाचितिष्ठन्योमनसितिष्ठन्नि- " त्यादेः ॥ ३८ ॥

इदक्कू पूर्वदल्लि नन्न ( श्रीहरिय ) स्वरूपवन्नु निनगे प्रकटवागि तोरिसिद इद्दादरू निन्नमेले विशेषानुग्रह माडुवदक्कागियॆ एंब अभिप्रायदिंद हेळुवनु— प्रलयोदकदल्लि नन्न नाभिकमलद केळभागदल्लिद्द देटिनोळगिन रंध्रद्वारदिंद, आ कमलद उत्पत्तिगे मूलकारणनाद नन्नन्नु हुडुकुतक्क निनगे नन्नन्नु ( श्रीहरियन्नु ) ह्यागे कंडेनेंदु विचारवु हुट्टुत्तिरलु, निनगे नन्न सच्चिदानंदरूपवु निन्नसलुवागि होरगे कण्णिगे तोरुवंते तोरिसिल्पट्टितु ॥ ३७ ॥ ई प्रकार नीनु ( श्रीहरियु ) तोरबेकादरे नानु ( ब्रह्मनु ) माडिद निन्न कथालक्षणवाद वाक्यप्रबंधवू तपःमू निन्नल्लिय श्रद्धेयु इवुगळ बलदिंद नीनु तोरिदियॆ होर्तु स्वतः तोरिल्लवेंब दर्पवु निनगे ( ब्रह्मनिगे ) बेडवेंब अभिप्रायदिंद ( हरियु ) हेळुवनु— ' कथा ' एंब धातुवु, वाक्यगळिंद पादबद्धवाद श्लोकरूपवाद रचनेयल्लि प्रयोगिसल्पडुवदु. आदकारण—नन्न गुणोत्कर्षगळिंद युक्तवाद ( नन्न कथेयु बोधवागतक्क वाक्यगळुळ्ळ पादगळिंद बद्धवाद श्लोकरूपवाद याव स्तोत्रवन्नु माडिदियो मत्तु तपस्सु माडुवदरल्लि निनगे याव निष्ठा उत्पन्नवायितो अदे नन्न अनुग्रहवेनिसुवदु ( यार्केंदरे ) वागिंद्रियव्यापारक्के नन्न अनुग्रहविल्लद होर्तु बायिंद वाक्यवे होंडुवदिल्ल. निनगे नन्न अनुग्रहवु इरुवदरिंद शुभविषयक प्रवृत्तियायितु. इदक्के प्रमाणवु-" याव श्रीहरियु एल्लर वागिंद्रियदल्लिद्दु माताडिसुवनु, एल्लर मनःसिनल्लिद्दु सकल व्यापारगळन्नु माडिसुवनु " एंदु श्रुतियु उंटु ॥ ३८ ॥

**प्रीतोहमस्तु भद्रं ते लोकानां विजयेच्छया ॥ यदस्तौषीद्गुणमयं निर्गुणं मानुवर्णयन् ॥ ३९ ॥ ॥**

कथापि स्तोत्रलक्षणा न प्रहेलिका बालप्रियेति भावेनोक्तं स्फुटयति । प्रीतइति । लोकानां सृष्टिविजयेच्छया गुणमयं सार्वज्ञ्यादिगुणपूर्णं निर्गुणं सत्वादिगुणरहितं मामनुवर्णयन्नस्तौषीदिति । यत्तेनाहं प्रीतोस्मि ते भद्रं कल्याणमस्तु इत्यन्वयः । " सार्वज्ञ्यादिगुणैर्युक्तं सत्वादिगुणवर्जितं । योजानाति हरिंतस्य प्रीतो भवति केशव " इतीदं प्रमाणं गुणोत्कर्षज्ञानमेव प्रीतिजनकं न निर्गुणज्ञानमिति भावेनोदाहृतं ॥ ३९ ॥

नीनु इदुवरेगे श्लोकरचनेयिंद नन्न स्तोत्र माडिद्दु, हुडुगरिगे प्रीतिकरवाद ' प्रहेलिका ' वचनवल्लवु. प्रहेलिका— एंदरे " व्यक्तीकृत्य कमप्यर्थं स्वरूपार्थस्यगोपना ॥ यत्रबाह्यार्थसंबद्धं कथ्यते सा प्रहेलिका " तन्न विवक्षितवाद मुख्यार्थवन्नु आ प्रबंधदल्लि गुप्तवागिट्टु मेले यावदो ओंदु अर्थवु तोरुवंते रचने माडिद प्रबंधक्के प्रहेलिकावचनवेन्नुवरु. ई चतुर्मुखनु स्तोत्र माडिद श्लोकगळु आ प्रकारदवल्लवेंदु हेळिदन्तु प्रकट माडुवनु—हदिनाल्कु लोकगळ सृष्टियु अभिवृद्धि यागलेंब इच्छेयिंद सर्वज्ञत्व मोदलाद सद्गुणगळिंद पूर्णनेंतलू सत्वादि दुर्गुणगळिंद दूरनेंतलू नन्नन्नु वर्णिसि नीनु स्तोत्र माडिदक्के नानु प्रीतनागिरुवेनु. निनगे कल्याणविरलि. " सर्वज्ञत्वादि गुणवुळ्ळवनेंतलू सत्वादिगुणहीननेंतलू श्रीहरियन्नु यारु तिळियुवरो अवर मेले केशवनु प्रीतनागुवनु " एंदु व्योमसंहितादल्लिय प्रमाणवु, श्रीहरियु गुणपूर्णनेंब ज्ञानवे अवन प्रीतिगे कारणवादद्दु; अवनु निर्गुणनेंब ज्ञानवु प्रीतिकारणवल्लवेंबदक्के हेळल्पट्टिरुवदु. ॥ ३९ ॥

**य एतेन पुमान्नित्यं स्तुत्वा स्तोत्रेण मां भजेत् ॥ तस्याहं संप्रसीदेयं सर्वकामवरेश्वरः॥ ४० ॥**

त्वत्कृतस्तोत्रेण मां भजमानो यस्तस्मै प्रसन्नोऽभीष्टं ददामि किमु तुभ्यमित्यभिप्रेत्याह । यएतेनेति । " आधिकारिकदेवानां स्वाधिकाराभिकामनं । भवतिप्रीतयेविष्णोर्भक्त्यादेरपि यत्सदे-"त्यनेन सृष्टिस्वाधिकारकामेन ब्रह्मणा कृतमिदं स्तोत्रं कथं हरिप्रीतिजनकं स्यादितीदं चोद्यं निर्मूलनीयं अतएव सर्वकामवरेश्वर इत्युक्तं सर्वकामितवराणामीश्वर इत्यर्थः ॥ ४० ॥

हे चतुर्मुखने, नीनु स्तोत्रमाडिद ई श्लोकगळिंद यारु नन्नन्नु भजिसुवरो अवरिगेमह नानु प्रसन्ननागि अभीष्टियन्नु कोडुवेनु निनगे अभीष्टयन्नु कोडुवेनेंबदेनाश्चर्यवु एंब अभिप्रायदिंद हेळुवनु— याव पुरुषनु नीनु स्तोत्र माडिद ई २९ श्लोकगळिंद नन्नन्नु स्तोत्र माडि भजिसुवनो, अवनिगे यावत्तु अपेक्षितवाद वरगळन्नु कोडुवदक्के समर्थनाद नानु अत्यंत प्रीतनागुवेनु अंदरे अवनिगे बेडिद वरवु कोडुवेनेंदर्थवु. ओळ्ळेदु, चतुर्मुखब्रह्मनु लोकगळन्नु सृष्टि माडबेकेंब कामनादिंद श्रीहरियन्नु स्तोत्र माडिरुवनु. आदरे सकामनोपासनेयु उत्तमरिगे निषेधवादद्दु; अदरिंद श्रीहरियु विशेष प्रीतनागुवदिल्लवेंदु हिंदे हेळल्पट्टदे; हीगिरलु इंथ चतुर्मुखन मेले श्रीहरियु विशेषवागि ह्यागे प्रीतनादनु ? एंदरे— श्रीहरियु इंथिंथ देवतिगळु जगत्तिन संबंधवाद इंथिंथ केलसगळन्नु माडबेकेंदु नियामिसिरुवनु. आ देवतिगळिगे जगत्तिन विषयदल्लि अधिकारविद्दकारण अवरिगे ' आधिकारिक ' देवतिगळेन्नुवरु. आ आधिकारिक देवातिगळु तमगे श्रीहरियिंद अप्पणेयाद जगत्तिन विषयकवाद अधिकारवन्नु ( आया कार्यगळन्नु माडुवदक्के इच्छिसुवदु ) अपेक्षिसुवदु विहितकामना एनिसुवदु. आ अधिकारक्के तक्कंते श्रीहरियु प्रीतनागल्लेंदु केलस माडुवदरिंद अवरमेले अधिकवागि श्रीहरिप्रीतियुंटागुवदु. एंदु प्रमाणविद्दकारण, ई चतुर्मुख ब्रह्मनु, सृष्टि माडुव विषयक्के श्रीहरियिंद अधिकारवन्नु पडेद ' आधिकारिक ' देवतियु आदकारण इवनु बेडिकोंडद्दु श्रीहरिगे केवल प्रीत्यास्पदवादद्दु, आदकारण मलिन संदेहवु एनू उळियदंते होयितु. आदकारणवे ' सर्वकामवरेश्वरः ' एंब विशेषण कोट्टिरुवनु ॥ ४० ॥

**पूर्तेन तपसा यज्ञैर्दानैर्योगैः समाधिना ॥ राज्यं निःश्रेयसं पुंसां मत्प्रीतिस्तत्वविन्मतं ॥ ४१ ॥ अहमात्मात्मनां धातः प्रेष्ठः सन्प्रेयसामपि ॥ अतो मयि रतिं कुर्याद्देहादिर्यत्कृते प्रियः ॥ ४२ ॥ ॥ ॥**

१. अत्र प्रीतेः निःश्रेयसत्वं राज्यत्वं कथमित्यतस्तदभिप्रायमाह । निःश्रेयसमिति । तथाच सप्तम्युप्रथमेतिसूत्रात् निःश्रेयसमिति प्रथमासप्तम्यर्थे राज्यशब्दोपि न रूढ्यादेशपरः किंतु योगेन रंजनीयार्थकः रंजुराग इतिधातोः अतः पुंसामुत्तमाधिकारिणां निःश्रेयसे मोक्षेपि मत्प्रीतिरेव पूर्तादिभिः राज्यं लिंगव्यत्ययेन रंजनीया एष्टव्या मोक्षस्तु तदर्थमेवेति तत्वविदां मतं अतत्वविदां तु पूर्तादिना स्वर्गादिकमेव राज्यमिति मूलार्थ इतिभावः ॥— ( या. )

मत्प्रीतेरेव सर्वपुरुषार्थोत्तमत्वं नान्यस्येत्याह । पूर्तेनेत्यादिना । तुलापुरुषादिहिरण्यदानैः पुंसां मत्प्रीतिः निःश्रेयसं राज्यं रंजनीयं तत्त्वविन्मतं तत्त्वज्ञानिभिः मतं रंजनीयमित्यनेन मोक्षेपि रंजनीया मत्प्रीतिरेवेति ध्वनयति । तदुक्तं "मुक्तस्यापिहरेःप्रीतिः सर्वतोप्यनुराजत" इति॥ ४१॥ मुक्तावपि मत्प्रीतिरेव रंजनीयेत्युक्तं तत्र मुख्यसाधनं भक्तिरेवेत्याह । अहमिति । धातश्चतुर्मुख अहमात्मना सर्वजीवानां आत्मा अंतर्यामित्वेनानंदादिनिर्माताअतएव प्रेयसामतिशयेन प्रियाणां स्वात्मादीनामपि सन्नभ्यर्हितः प्रेष्ठः प्रियतमः। सर्वस्मात्प्रियाद्देहादेस्तव प्रेष्ठत्वं कथमित्यतउक्तं । देहादिगिति । देहादिर्यस्य स्वात्मनः कृतेऽर्थे प्रियः अस्य स्वात्मनो देहादिप्रियः स्यादिति मयैवापादितत्वादिति यदतः स्वात्मादिभ्यः प्रियतमत्वान्मयि रतिं भक्तिं भवान् कुर्यादित्यन्वयः । "सर्वतोपि प्रियोह्यात्मा तस्यापि प्रियतांहरिः॥ आपादयति यत्तस्मात्स्वात्मनोपि प्रियो हरि-" रितिच ॥४२॥

नन्न ( श्रीहरिय ) प्रीतियं सर्व पुरुषार्थगळल्लि श्रेष्ठवादद्दु, एरडनेदु यावदु अद्दन्नु एंदु हेळुवनु- जनरु केरे-बाविगळन्नु कट्टिसुवदरिंदलू तपःसु माडुवदरिंदलू, यज्ञगळन्नु माडुवदरिंदलू, तन्न भारक्के सरियादष्टु सुवर्णवन्नु तूगि दान माडुवदरिंदलू, अनेक योगाभ्यासगळिंदलू, एकाग्रचित्तरूपवाद समाधियिंदलू नन्न ( श्रीहरिय ) प्रीतियन्ने संपादिसतक्कद्दु ( अंदरे इवुगळन्नेल श्रीहरिप्रीतियु तम्ममेले उंटागलि एंब उद्देशदिंदले माडतक्कद्दु. ) इल्लि-' निःश्रेयसं ' एंब पदक्के ' मोक्षदल्लि ' एंदर्थवु; राज्यं-एंदरे देशवेंबर्थवल्लवु, मनोल्हादकवेंदर्थवु. उत्तमाधिकारिगळिगे मोक्षदल्लि आल्हाद उंटागुवदु नन्न प्रीतियिंदले एंब ई अभिप्रायवे तत्वज्ञानिगळिगे सम्मतवादद्दु. मोक्षदल्लि सह मनोरंजकवाद स्वरूपवु नन्न प्रीतियिंदले दोरेयुवदु एंब अर्थवु, ' राज्यं एंदरे रंजनीयं ' एंब अर्थदिद प्रकटवागुवदु. हागू इदक्के प्रमाणवू उंटु- ' मुक्तरिगादरु सर्व प्रकारदिद श्रीहरिप्रीतियि, प्रकाशवन्नुंटु माडुवदु ' ॥४१॥ आ श्रीहरिप्रीतियु जनरमेले उंटागबेकादरे भक्तिये मुख्य साधनवेंदु हेळुवनु-' हे धातः ' एले चतुर्मुखब्रह्मने, नानु सकल जीवरिगे अंतर्नियामकनागिद्दु अवरिगे आनंदादिगळन्नु कोडतक्कवनु; आदकारणवे नमगे अतिशयवागि प्रीत्यास्पद देहमोदलादवुगळिगिंत हेच्चागि अत्यंत प्रीत्यास्पदनादवनु; एल्लक्कू प्रीत्यास्पदवाद देहमोदलादवुगळिगिंत नीनु ह्यागे प्रीत्यास्पदनु, एंदरे ' देहादिर्यत्कृते प्रियः ' याव देहमोदलादद्दु अंतर्नियामकनाद श्रीहरि इरुवदरिंदले प्रीत्यास्पदवागिरुवदु मत्तु ई जीवनिगे इवन देहमोदलादद्दु प्रीत्यास्पदवागिरलि. एंदु प्रीतियन्नु अवुगळल्लि नानागे हुट्टिसिरुवेनु. आदकारण तन्न देह मोदलादवुगळिगिंत नाने अतिशय प्रीत्यास्पद नाद्दरिद नन्नल्लि भक्तियन्नु अवश्यवागि माडतक्कद्दु.' एल्ल वस्तुगळिगिंत तन्न देहवु प्रीत्यास्पदवादद्दु; आ देहक्कादरू श्रीहरिये प्रीतियन्नु उंटु माडुववनादकारण आ तन्न देहद किंतलू श्रीहरिये प्रीत्यास्पदनु ' एंदु वचनगळिरुववु ॥ ४२ ॥

**सर्ववेदमयेनेमा आत्मनात्मात्मयोगिना ॥ प्रजाः सृज यथापूर्वं याश्च मय्यनुशेरते ॥ ४३ ॥**

१. सर्ववेदार्थविषयकेनात्मात्मयोगिना आत्मनां जीवानां आत्मा स्वामी यः तद्विषयकव्यानादिरूपयोगवता आत्मना मनसा इमाः देवऋष्यादिरूपाः याः इदानीं मय्यनुशेरते ताः प्रजा यथापूर्वं पूर्वकल्पे यथा अभूवन् तथा विचार्य सृज वेदार्थानुसारेण नामरूपात्मकप्रपंचं सृजेत्यर्थः चशब्देन तदाश्रयान् भूरादिलोकांश्च सृजेति ग्राह्यं ॥-( **या.** )



**सृष्टावेवाधिकृतत्वात् ब्रह्मणः सृष्टिकामनं न दोषहेतुः किंतु हरेः प्रीतिहेतुस्तदाज्ञाकारित्वादिति सूचितं तदिदानीं स्पष्टमाह। सर्वेति। सर्ववेदमयेन "प्रजापते-नत्वदेतान्यन्यो विश्वा जातानि परिताबभूवे-" त्याद्यखिलवेदप्रतिपाद्येनात्मनो मत्तः योगः संबंधोस्यास्तीति आत्मयोगी तेन मत्तो जातेनात्मना देहेनात्मा ब्रह्मा त्वं या मय्यनुशेरते ता इमाः प्रजाः यथापूर्वं यथापूर्वकल्पे सृष्टास्तथा सृजेत्यन्वयः त्वदन्यस्यानधिकृतत्वात्त्वमेवैतत्कुर्वित्यवधारणार्थे चशब्दः रुद्राद्युपसंग्रहार्थो वा ४३**

सृष्टिमाडुवदक्कागिये चतुर्मुखनन्नु श्रीहरियु आ अधिकारदल्लि नियमिसिरुवनु. आदकारण श्रीहरियिंद नियमिसल्पट्ट सृष्टि माडुव अपेक्षेयु चतुर्मुखनिगे दोषकारणवल्लवु. श्रीहरिय आज्ञेयन्नु पालिसुवदरिंद अवन विशेष प्रीतिगे कारणवादद्देंदु हिंदे सूचन माडल्पट्टितुः अदे संगतियन्ने ईग्ये स्पष्टवागि हेळुवनु- ' हे प्रजापते चतुर्मुखने, निन्न होर्तु एरडनेयवनु ई यावत्तु प्रजासमूहवन्नु परिपालने माडतक्कवनिल्लवु,' इवे मोदलाद यावत्तु वेदगळिद मुख्यवागि प्रतिपाद्यवाद नन्न संबंधवुळ्ळ अंदरे नन्निंद उत्पन्नवाद देहवुळ्ळ नीनु ई नन्नल्लिद्द सूक्ष्मरूपदिंद याव जविगळु ईग्ये सृष्टियन्नु होंदतक्कवागिरुववो, सृष्टिगे बरतक्क आ जीवरगळन्नु हिंदिन ब्रह्मकल्पदल्लि हिंदिन ब्रह्मनु यावप्रकार सृष्टिमाडिद्दनो, अदेप्रकार सृष्टि माडु. निन्नहोर्तु एरडनेदवरिगे ई विषयक्के अधिकारविल्लद्दरिंद नीने ई केलसवन्नु माडबेकु, एंदु निश्चयार्थवन्नु हेळुवदक्के ' च ' शब्दविरुवदुः अथवा रुद्रादिगळादरु इदेप्रकार श्रीहरियिंद अधिकार पडेदवरु एंब अर्थवन्नादरू हेळुवदु. ४३

**मैत्रेय उवाच ॥ तस्मा एवं जगत्स्रष्टा प्रधानपुरुषेश्वरः ॥ व्यज्येदं स्वेन रूपेण कंजनाभस्तिरोदधे ॥ ४४ ॥**

**इति श्रीमद्भागवते तृतीये दशमोऽध्यायः ॥ १० ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥**

**एवंविधमहिम्नो ब्रह्मणोप्यदृश्योभून्नारायण इति माहात्म्यातिशयप्रकटनाय हरेस्तिरोधानं कथयति। तस्माइति । प्रधानपुरुषयोः प्रकृतिब्रह्मणोरीश्वरः यद्ब्रह्मणो मनसि सन्निहितमिदं व्यज्य व्यक्तीकृत्य ॥ ४४ ॥ इतिश्रीमद्भागवते महापुराणे तृतीयस्कंधे विजयध्वजटीकायां दशमोऽध्यायः ॥ १० ॥**

मैत्रेयरु विदुरनिगे हेळुवरु- इंथ महिमेयुळ्ळ चतुर्मुख ब्रह्मनिगादरु नारायणनु अदृश्यनादनु एंदु अवन महामहिमेयन्नु प्रकटमाडुवदक्के श्रीहरिगु अदृश्यनाद संगतियन्नु हेळुवरु-प्रकृतियू ब्रह्मनिगू स्वामियाद जगत्सृष्टिकर्तृवाद श्रीनारायणनु, ब्रह्मदेवन मनसिनल्लिद्दद्दन्नु प्रकटमाडि ( अवन मनोभिप्रायवन्नु पूर्ण माडि ) कमलनाभियाद आ श्रीनारायणनु तन्न स्वरूपवन्नु अदृश्य माडिदनु ॥ ४४ ॥ ईप्रकार श्रीमद्भागवत मूल ग्रंथक्कू विजयध्वज व्याख्यानक्कू सरियागि योजनेयिंद प्रकाशिसुव ' सुखार्थबोधिनी ' एंब प्राकृत टीकेयु कूसनूर श्रीनिवासनिंद रचितवाद तृतीयस्कंधद १० ने अध्यायवु मुगिदितु ॥ १० ॥

**विदुरउवाच ॥ अंतर्हिते भगवति ब्रह्मा लोकपितामहः ॥ प्रजाः ससर्ज कतिधा दैहिकीर्मानसीर्विभुः ॥ १ ॥ ये च मे भगवन्पृष्टा स्त्वय्यर्था बहुवित्तम ॥ तान्वदस्वानुपूर्व्येण छिंधि नः सर्वसंशयान् ॥ २ ॥ सूत उवाच । एवं संचोदितस्तेन**

क्षत्रा कौषारवोमुनिः ॥ प्रीतः प्रत्याह तान् प्रश्नान् हृदिस्थानथ भार्गव ॥ ३ ॥ ॥ ॥ ॥

अस्मिन्नध्याये चतुर्विधसृष्टिकथनेन निरतिशयमहिमा हरेरुच्यते तत्र शुको मैत्रेयंप्रति विदुरः पृच्छतीति परीक्षितमाह । अंतर्हितइति । दैहिकीर्मानसीरिति देहमनोभ्यां सृष्टाः ॥ १ ॥ २ ॥ हृदिस्थान् विदुरस्येतिशेषः ॥ ३ ॥

ई अध्यायदल्लि ओंभत्तप्रकारद सृष्टियन्नु हेळुवदरिंद, श्रीहरिय अत्यधिकवाद महिमेयु वर्णिसल्पडुवदुः आ मोदलु, विदुरनु मैत्रेयरन्नु प्रश्नमाडुवनेंदु श्रीशुकाचार्यरु परीक्षितराजनिगे हेळुवरु–विदुरनु मैत्रेयरन्नु प्रश्नमाडुवनु–श्रीहरियु अदृश्यनागलु, लोकक्के पितामह नेनिसिद श्रेष्ठनाद ब्रह्मनु देहदिंदलू मनःसिनिंदलू एष्टुप्रकार प्रजासृष्टियन्नु माडिदनु? ॥ १ ॥ 'हे भगवन्' पूज्यराद मैत्रेयरे, नानु (विदुरनु) तम्मन्नु केळवु अर्थविषयवागि, हिंदक्के प्रश्न माडिरुवेनष्टे, तावु आ विषयगळेल्ल बल्लवरल्लि श्रेष्ठरादकारण अवुगळिगे क्रमानुसारवागि उत्तरवन्नु हेळि, नम्म यावत्तू संशयगळल्लु कळेयबेकु ॥ २ ॥ ई संगतियन्नु सूतनु शौनकरिगे हेळुवनु— ईप्रकार कुशारवमुनिपुत्रराद मैत्रेयऋषिगळु विदुरन प्रश्नेयन्नु केळि संतुष्टरागि, हे भृगुकुलोत्पन्ननाद शौनकने, अनंतर मनसिनल्लिद्द आ एल्ल प्रश्नगळिगे उत्तर हेळलारंभिसिदरु. ॥ ३ ॥

मैत्रेयउवाच ॥ विरिंचोपि तथा चक्रे दिव्यं वर्षशतं तपः ॥ आत्मन्यात्मानमाविश्य यथाह भगवानजः ॥ ४ ॥ तद्विलोक्याब्जसंभूतो वायुना यदधिष्ठितं ॥ पद्ममंभश्च तत्कालकृतवीर्येण कंपितं ॥ ५ ॥ तपसा ह्येधमानेन विद्यया चात्मसंस्थया ॥ विवृद्धविज्ञानबलो न्यपाद्वायुं सहांभसा ॥ ६ ॥ ॥ ॥ ॥

भूयश्च तप आतिष्ठेति हरिणा यदुक्तं तदाज्ञाकरणप्रकारमाह । विरिंचोपीति । आत्मनि परमेश्वरे आत्मानं मन आविश्य निधाय ॥ ४ ॥ यदात्मनाधिष्ठितं तत्पद्मं तत्कालकृतवीर्येण प्रलयकालकृतपराक्रमेण तीव्रेणेत्यर्थः । वायुना कंपितमंभश्च कंपितं विलोक्य ॥ ५ ॥ मूलोन्मूलनन्यायेन अंभसासह वायुं न्यपादित्यन्वयः " निपानमुदपानंस्यादापानंपानगोष्टिक " इति हलायुधः ॥ ६ ॥

मैत्रेयरु हेळुवरु— इन्नादरू तपःसु माडेंदु श्रीहरियु ब्रम्हनिगेनु आज्ञेयन्नु माडिद्दनो, आ आज्ञेयन्नु ब्रम्हदेवनु नडिसिद संगतियन्नु हेळुवरु—तनगे यावप्रकार श्रीहरियु हेळिद्दनो आ प्रकारवागि सर्वेश्वरनाद श्रीहरियल्लि मनःसित्तु चतुर्मुख ब्रम्हनादरु देवमानानुसारवागि नूरुवरुषपर्यंतरवागि पुनः तपःसु माडिदनु. ॥ ४ ॥ आ समयदल्लि तानु याव कमलदल्लि कुळितुगोंडिद्दनो आ कमलवू, सुत्तलिद्द महोदकवू, प्रलयकालदल्लि माडल्पट्ट पराक्रमवुळ्ळ ( तीक्ष्णवादएंदर्थवु ) पराक्रमेयुळ्ळ महावायुविनिंद नडुगुत्तिरुवदन्नु कंडु ॥ ५ ॥ तन्न अभिवृद्धवाद तपःसिनिंदलू

१. अविस्मृताविनियावत ॥– ( या. )

श्रीहरियन्नु ध्यानमाडतक्क तन्नाल्लिय विद्येयिंदलू परमात्मन तत्वज्ञानबलवु अधिकवाद्दरिंद आ उदकसहितवाद वायुवन्नु ब्रम्हदेवनु प्राशनमाडिदनु. ' उदकपानक्के निपानवेन्नुवरु. आपान मत्त पानगोष्टिका इवु एरडु शब्दगळु नीरु कुडियतक्क सभेगे हेसरु एंदु हलायुधकोशवु. ॥ ६ ॥

तद्विलोक्य वियद्व्यापि पुष्करं यदधिष्ठितः ॥ अनेन लोकान्प्राग्लीनान्कल्पितास्मीत्यचिंतयत् ॥ ७ ॥

हरिणा स्रष्टुमुपदिष्टो ब्रह्मा संहर्तुमुपक्रमते किमिदं हंतेत्याशंक्य सर्वविरोधित्वात्तयोः पानं युक्तमिति भावेनाह । तद्विलोक्येति । वियद्व्यापि आकाशवन्महत्परिमाणोपेतं ॥ ७ ॥

श्रीहरियिंद सृष्टिमाडुवदक्के अप्पणेपडेद चतुर्मुखब्रह्मनु संहारक्के प्रारंभिसिदनल्ल, इदु एनु आश्चर्यवु? एंदु मंदहबंदरे आ प्रलयोदकवू आ प्रचंड वायुवू मुंदिन एल्ल सृष्टिकार्यक्के प्रतिबंधकवादकारण अवुगळल्लु प्राशनमाडिद्दु उचितवे एंब अभिप्रायदिंद हेळुवरु– तानु याव कमलदल्लि कुळितुगोंडिरुवनो आ कमलवु आकाशदंते बहळदोड्डदागिद्ददन्नु नोडि, ई कमलदल्लि सूक्ष्मरूपदिंद इदुवरेगे मुच्चिकोंडिद्द हदिनाल्कु लोकगळन्नु इन्नु स्थूलरूपदिंद सृष्टिमाडुवेनु एंदु आलोचनेमाडिदनु ॥ ७ ॥

पद्मकोशं तदाविश्य भगवान्कर्मचोदितः ॥ एकं व्यभांक्षीदुरुधा त्रिधा भाव्यद्विसप्तधा ॥ ८ ॥

एकेन पद्मेन त्रित्वादिसंख्याविशिष्टलोकरचनं कथमिति तत्राह । पद्मकोशमिति । यदाचिंतयत्तदैव चतुर्दशभुवननिर्माणनिमित्तेन कर्मणाऽदृष्टेन चोदितः कर्मणा विषयभूतेन हरिणा प्रेरितो भगवान् ज्ञानवैराग्यादिगुणशाली पद्मकोशमाविश्य एकत्वसंख्याविशिष्टमुरुधा बहुत्वसंख्याविशिष्टत्वेन व्यभांक्षीद्विभक्तवान् किमनंतसंख्याविशिष्टमकरोन्नेत्याह त्रिधेति । भूम्यंतरिक्षस्वर्गात्मना त्रिधा भाव्य कृत्वा तत्रयं पुनर्द्विसप्तधा चतुर्दशभुवनात्मना विभक्तवानिति शेषः ॥ ८ ॥

ओंदु पद्मदिंद मूरु प्रकारवे मोदलाद लोकरचनेयु ह्यागायितेंदरे हेळुवरु– यावाग्गे चतुर्मुखनु लोकगळल्लु सृष्टिमाडबेकेंदु योचने माडिदनो आ कूडले हदिनाल्कु लोकगळन्नु सृष्टिमाडुवदक्के निमित्तवाद अदृष्टवेंब कर्मक्के नियामकनाद श्रीहरियिंद प्रेरितनागि, ज्ञानवैराग्यमोदलाद गुणसंपन्ननाद चतुर्मुखनु, आ कमलद मोगगयमध्यदल्लि प्रवेशमाडि, ओंदागिद्द कमलवन्नु बहुप्रकारवागि बेरेबेरे माडिदनु. बेरेबेरे एंदरे एनु? अनंतवागि विभागमाडिदनो? अल्ल भूमियू, अंतरिक्षवू, स्वर्गवू एंदु मूरु प्रकारवागि माडि पुनः हदिनाल्कुलोकगळागुवंते विभागमाडिदनु ॥ ८ ॥

एतावान् जीवलोकस्य संस्थाभेदः समासतः ॥ धर्मस्य ह्यनिमित्तस्य विपाकः परमेष्ठिनः ॥ ९ ॥

न्यूनातिरेकसंख्या निषेधयति । एतावानिति । जीवानां लोकस्यावस्थानस्य संस्थाभेदः व्यवस्थाविभागः समासतः संक्षेपतः मया तव कथित इति शेषः

१. वक्ष्यामि । – ( या. ) २. वैकुंठं ब्रह्मांडबाह्यदेशंच व्यावर्तयितुं समासतइत्युक्तं । - ( या. )

। इदमपि न स्वशक्त्या कृतमित्याहधर्मस्येति । परमेष्ठिनो ब्रह्मणोऽनिमित्तस्य । " आनिषेधेपुमान्विष्णा "-वित्यभिधानादः परमात्मा निमित्तं यस्य सोऽनिमित्तः तस्य ब्रह्मार्पणबुद्धया कृतस्येत्यर्थः । धर्मस्य कृतस्य विपाकः विशिष्टफलमितिविद्धीति शेषः । " अइतिब्रह्मेति " श्रुतेः । निर्निमित्तो नार्थः तपआदिनां भगवद्विषयत्वोक्तेः ॥ ९ ॥

हिंदिन श्लोकदल्लि लोकगळन्नु एष्टुप्रकार विभागमाडिदनेंदु मंस्येयन्नु हेळिदरो आ मंस्येगे हेच्चुकाडिमे इल्ल, अदे मरियादेंदु हेळुवरु—जीवममूहवु इरुवदक्के प्रत्येकवागि स्थळगळ भदवु संक्षेपवागि नन्निंद (मैत्रेयरिंद) निनगे (विदुरनिगे) हेळल्पट्टितु. ई व्यवस्थेयादरु ब्रह्मदेवन शक्तियिद माडल्पट्टद्दल्लवेंदु हेळुवरु. ब्रह्मदेवनिंद माडल्पट्ट ई यावत्तु धर्मवु 'आनिमित्तस्य' निर्निमित्तवेंदर्थवल्लवु. 'अ' एंबदु निषेधार्थदल्लिरुवदु हागू पुल्लिंगवाचकवागि विष्णुवाचकवागिरुवदु, एंदु कोशवु हेळुवदुः मत्तु 'अ' एंबदु परब्रह्मवाचकवु एंदु श्रुतियु हेळुवदु. आदकारण विष्णुविन निमित्तकवाद धर्मवु एंदरे परब्रह्मगे अर्पणबुद्धियिंद आ धर्मवु माडलपट्ट कारण 'विपाकः' श्रेष्ठवाद फल कोडतक्कद्दायितु एंदु तिळि. यांकेंदरे तपःसुमोदलादवुगळु श्रीहरिगे अर्पिसिदरे अवु सफलवागुववेंदु हिंदे हेळल्पट्टदे ॥ ९ ॥

## विदुरउवाच ॥ यदात्थ बहुरूपस्य हरेरद्भुतकर्मणः ॥ कालाख्यं लक्षणं ब्रह्मन् यथा वर्णयनः प्रभो ॥१०॥

श्रुतहरिमहिम विदुरः कथातरप्रसंगेन मैत्रेयः भगवत्कथा समापयतीति भीत्या मैत्रेयं पृच्छति । यदिति । बहुरूपस्यानंतरूपस्य हरेः कालाख्यं लक्षणं स्वरूपं यथा यथावत् । " लक्षणंलक्ष्यमात्माच स्वरूपमिति कथ्यत " इत्यभिधानान्नान्योर्थः किंतुस्वरूपमेव ॥ १० ॥

ईप्रकार हरिमहिमेयन्नु केळि विदुरनु, मैत्रेयरु एरडने कथेयन्नु हेळुत्त भगवत्कथेयन्नु मुगिसारु एंब भयदिंद मध्यदल्लि मत्ते प्रश्नमाडुवनु—हे प्रभो मैत्रेयरे नावु अद्भुत कार्य माडुव बहुरूपनाद्ळ याव श्रीहरिय महिमेयन्नु हेळिदिरो, आ श्रीहरिय काल एंदु नामवुळ्ळ स्वरूपवन्नु नावु बल्लवरादरिंद यथाप्रकारवागि हेळरि. कोशदल्लि लक्षण शब्दक्के स्वरूपवेंदु अर्थ माडिदकारण, ई श्लोकदल्लि 'कालाख्यं लक्षणं' एंबल्लि श्रीहरिय कालस्वरूपवन्नु एंतले अर्थ हेळबेकेहोर्तु बेरे अर्थ हेळगूडदु ॥ १० ॥

## मैत्रेयउवाच ॥ गुणव्यतिकराकारो निर्विशेषोऽप्रतिष्ठितः ॥ पुरुषस्तदुपादानमात्मानं लीलयासृजत् ॥ ११ ॥

कालस्य सर्वप्रवर्तकत्वेन प्रधानत्वात् सूचीकटाहन्यायेन तत्स्वरूपं वक्ष्यन् मैत्रेय आदौ जगत्सृष्टयाद्यर्थं गुणत्रयोपादानकर्तृ भगवद्रूपत्रयप्रादुर्भावप्रकारं वक्ति । गुणेति । प्रलये गुणानां द्रष्टृत्वेन स्थितो गुणाना व्यतिकरं विकारविशेषं सम्यक्करोतीति गुणव्यतिकराकारः । कर्मण्यणप्रत्ययः पुरुषः पूर्णषड्गुणः अतएव निर्विशेषः निर्विकारः अधिकांतररहितो वा अतएवाप्रतिष्ठितः अन्यत्रेतिशेषः । " स भगवान्कस्मिन् प्रतिष्ठितइतिस्वेमहिम्नी-" तिश्रुतेः । तस्य गुणव्यतिकरस्योपादानं स्वीकारो येन स तथा तं गुणव्यतिकरोपादानकर्तारमित्यर्थः त्रिरूपत्वेनात्मानं लीलयाऽसृजत् आविरभावयत् ॥ ११ ॥

१. गुणव्यतिकरं गुणवैषम्यं सृष्टिरितियावत् ॥-- (या.) २. विशिष्यत इति विशेषः स्वापेक्षया विशिष्टरहितः ॥-- (या.)

मैत्रेयरु हेळुवरु—कालक्के सर्व जगत्तन्नु प्रवर्तन माडतक्क शक्तिइरुवदरिंद मुख्यत्ववदः अंथ कालद स्वरूपवन्नु हेळुत्त सूचीकटाहन्यायदिंद (सूचीकटाह न्यायवेंदरे— ओब्बनु कडायवन्नु माडुव दोड्डुकार्यदल्लिद्दागे मध्ये यावनो ओब्बनु सूजेयन्नु माडिकोडेंदु अवसर माडहत्तिदनु, आदरे आग्ये आ कम्मारनु तन्न कैयल्लिद्द कडाइद केल्सवु तीव्रमुगियतक्कद्दल्लवु, आद्दरिंद ई अवसरद सूजेय सण केलसवन्नु मोदलु मुगिसिकोट्टु मत्त नम्म कडायवन्नु माडुव एंदु कूडले केय्योळगिन केलस बिट्टु आ सूजेयन्नु मोदलु माडिकोट्टनु. तात्पर्यवेनेंदरे दोड्डु केलस माडुवाग्ये मध्यदल्लि सणकेलसद प्रसंग बंदरे अदन्नु आकूडले माडिबिडबेकेंबदक्के ई सूर्चीकटाह न्यायवु) मोदलु जगत्तिन सृष्टिमोदलादवुगळसलुवागि, सत्वादिगुणगळन्नु स्वीकार माडतक्क मूरु भगवद्रूपगळ प्रकटनप्रकारवन्नु मैत्रेयरु हेळुवरु—प्रळयकालदल्लि सत्वरजस्तमोगुणगळन्नु नोडुत्तलिद्द श्रीहरियु (सृष्टियप्रारंभकालदल्लि) 'गुणव्यतिकरं' सृष्टियन्नु आ 'सम्यक्' चन्नागि माडुत्तानेंदु 'गुणव्यतिकराकारः' एंदेनिसुत्त इल्लि कर्मणि अणुप्रत्ययवु) निर्विकारियाद, तन्न मेल्धिकारिगळारु इल्लदे ताने श्रेष्ठनादरिंदल्ल एरडनेदवर आश्रयदल्लिरदे 'आ परमात्मनु एल्लिरुवनेंदरे तन्न महिमेयल्लिये इरुवनु' एंदु श्रुतियल्लि हेळिद्दरिंद, तन्न महिमेयल्लिय्ये इरतक्क पूर्णषड्गुणनाद सृष्टि-स्थिति-लयगळन्नु माडुवदक्कागि आयासविल्लदले मूरुस्वरूपगळिंद प्रादुर्भूतनादनु ॥ ११ ॥

## विश्वं वै ब्रह्म तन्मात्रं संस्थितं विष्णुमायया ॥ ईश्वरेण परिच्छिन्नं कालेनाव्यक्तमूर्तिना ॥ १२ ॥

स्वार्थाभावेप्यन्यस्य किं प्रयोजनमुद्दिश्य रूपांतरग्रहणं हरेरिति तत्राह विश्वमिति । सृष्ट्याद्यर्थत्वेन तस्य पुरुषस्य ब्रह्माविष्णुरीश्वरइति त्रीणि रूपाण्यात्मना सृष्टानीत्यनेनोच्यते । तथाहि विश्वं ब्रह्म तन्मात्रं वै ब्रह्माणं सृष्ट्वा चतुर्मुखत्वेन तं प्रविश्य सृष्टिबृंहणाद्ब्रह्मनाम्ना तेन विष्णुना मितं त्रातं चेति तथोक्तं विष्णुनाम्नो-हरेर्मायया सामर्थ्येन संस्थितं व्यवस्थापितं स्वस्वाधिकारइति शेषः । अत्र यदीश्वराख्यं संहर्तृरूपं तत्कालाख्यं तेन रुद्रं सृष्ट्वा पंचमुखत्वेन तं प्रविश्य कालेन संहर्त्राव्यक्तमूर्तिना चक्षुराद्यगम्यस्वरूपेण हरिणा परिच्छिन्नं संहृतं इत्यन्वयः । चतुर्मुखं सृष्ट्वा तं प्रविश्य स्वयं चतुर्मुखो ब्रह्मनामा हरिः सृष्टये रजोगुणमुपादत्ते अन्यरूपप्रवेशमंतरेण स्वयं विष्णुनामा रक्षार्थं सत्वमुपादत्ते पंचमुखमीशानं सृष्ट्वा पंचमुखस्तं प्रविश्येश्वरनामा हरिः संहारार्थं तमोगुणमुपाददातीति । तात्पर्यार्थोपि वाइत्यनेन श्रुतिप्रसिद्धिद्योतकेन ज्ञायते । "अथत्रयीवावप्रकृतिःसत्वंरजस्तमइति । तांनारायणः पर्यपश्यत्यनन्य प्रतिष्ठस्तंवाएनमाहुः पुरुषइतिपूर्णोह्येषभवति । सत्रेधाबभूवैषागुणानामुपादानायविष्णुर्वाविसत्वस्यरजसोब्रह्मेशोनामतमसः सआविवेशब्रह्माब्रह्माणंचतुर्मुखं ईशईशानं पंचमुखं योवावईशईशानमाविवेशतंकालइत्याचक्षते कालइत्याचक्षते " इति सौकरायणश्रुतिः तदुपादानं सोव्यक्तलक्षणो बोध उपादानं कार्याधिकरणं यस्य स तथा तं तदुपादानं आत्मानमेव चेतनाचेतनस्वरूपेणासृजदित्युक्तत्वादाकाशादेरविद्यमानस्यैवोत्पत्तिर्नैतत्सारं यतो विश्वमाकाशादि तन्मात्रं प्रलयकाले बभूव तत्कथं संस्थितं प्रलीनं नष्टमितियावत् विष्णुमायया व्याप्तस्य ब्रह्मणो माययाव्यक्तलक्षणया ईश्वरेण ब्रह्मणा परिच्छिन्नं विषयीकृतं, कालेन कालात्मकेन ज्ञानस्वरूपेण साक्षिणाऽव्यक्तमूर्तिना चक्षुराद्यगम्यस्वरूपेणेति

सृष्टि-स्थिति-लयगळिंद नमगे येनू प्रयोजनविल्लदिद्दरू एरडनेदवन याव प्रयोजनवन्नु उद्देशमाडि रूपांतरग्रहणवु श्रीहरिगे एंदरे विश्वंएंब श्लोकदिद हेळुत्तारे—सृष्टि-स्थिति-संहारगळसलुवागि आ पुरुषरूपियाद परमात्मन ब्रह्मा विष्णु महेश्वर एंब मूरुरूपगळन्नु तन्निंद स्वीकरिसल्पट्टवेंदु ई श्लोकदिद हेळल्पडुवदु; अदु ह्यागेंदरे— ' विश्वं ब्रह्मनन्मात्रं वे ' श्रीहरियु ब्रह्मनन्नु सृष्टिमाडि चतुर्मुख स्वरूपदिंद अवनन्नु प्रवेशमाडि, सृष्टियन्नु प्रबलमाडिदकारण ब्रह्मनेंदु हेसरुळ्ळ विष्णुविनिंद जगत्तु नियमितवागि रक्षितवागिरुवदु; मत्तु विष्णु एंदु हेसरुळ्ळ श्रीहरिय सामर्थ्यदिंदले ई जगत्तु अवरवर अधिकारदल्लिये इडल्पट्टिरुवदु. इदरल्लि याव ईश्वरनेंब जगत्तन्नु संहारमाडतक्क रूपवो; अदु कालनामकनाद परमात्मन स्वरूपवु. आ कालाख्य भगवद्रूपदिंद रुद्रनन्नु सृष्टिमाडि पंचमुखस्वरूपदिंद अवनन्नु प्रवेशमाडि महाकारणवाद यार चक्षुरादिगळिगे तोरदेइद्द कालवेंब स्वरूपधररिंद श्रीहरियिंद अळतेइल्लद सर्वजगत्तु संहृतवागुवदु. चतुर्मुखनन्नु सृष्टिमाडि अवनन्नु प्रवेशमाडि तानु नाल्कुमुखवुळ्ळवनागि ब्रह्मनेंब हेसरुळ्ळ श्रीहरियु रजोगुणवन्नु सृष्टिगागि तेगेदुकोळ्ळुवदु. अन्यरूप प्रवेशमाडदे तानु श्रीविष्णु एंब नामवुळ्ळवनागि जगत्तिन रक्षणार्थवागि सत्वगुणवन्नु स्वीकरिसुवनु. पंचमुखवुळ्ळ रुद्रनन्नु सृष्टिमाडि, तानु पंचमुखवुळ्ळवनागि अवनन्नु प्रवेशमाडि ईश्वरनेंब हेसरुळ्ळ श्रीहरियु जगत्तिन संहारक्कागि तमोगुणवन्नु स्वीकरिसुवनु. ई तात्पर्यवादरु श्रुतिप्रसिद्धवादद्देंदु, ई श्लोकदलिय ' वा ' एंबदरिंद तिळियुवदु. आ श्रुतियु यावदेंदरे—" इन्दु वेदप्रतिपाद्यळाद प्रकृतियु सत्वरजस्तमोगुणस्वरूपळागिरुवळु अवळन्नु एरडनेयवर आश्रयविल्लदे स्वतंत्रनाद नारायणनु सृष्टिय सलुवागि नोडिदनु; अवनन्नु पूर्णनाद कारण पुरुषनेन्नुवरु. आ पुरुषनु सत्वादिगुणगळन्नु सृष्टियसलुवागि तेगेदुकोळ्ळुवदक्के तानु मूरु रूपधरिसिदनु. अदरल्लि विष्णुवेंबवनु सत्वगुणवन्नु स्वीकरिसुवनु; ब्रह्मनु रजोगुणवन्नु; ईशाननु तमोगुणवन्नु स्वीकरिसुवनु. आ विष्णुवु चतुर्मुखनाद ब्रह्मनन्नु ब्रह्मनेंब हेसरिनिंद प्रवेशमाडिदनु. पंचमुखनाद ईशाननन्नु ईशनेंब स्वरूपदिंद प्रवेशमाडिदनु. यावनु ईशाननन्नु ईशनेंब स्वरूपदिंद प्रवेशमाडिदनो, अवनन्नु कालनेंदु हेळुवरु. " ई प्रकार सौकरायणवेंब श्रुतियु हेळुवदु. ( परकीयव्याख्यानवु-) ' तदुपादानं ' अव्यक्तस्वरूपवाद बोधवे चिद्रूपवाद्ब्रह्मवे कार्यक्के स्थानवागि तानि चेतनाचेतन स्वरूपदिंद भ्रमक्के कारणवायितु. एंदु हेळिद्दरिंद आकाशमोदलादद्दु इल्लदे इद्दद्दु सृष्टवादंते तोरुवदु. इदु यथास्थितवल्लवु. याकेंदरे आकाशमोदलादद्दु शब्दमोदलाद मात्रासहितवागि प्रलयकालदल्लिद्दितु; अदु ह्यागे इरुतेदरे ' प्रलीनं ' नष्टवागित्तु. ( सत्यभूतवाद वस्तुविगे नाशविल्लवु; ई आकाशमोदलादद्दु नाशहोंदुवदाद कारण इदु सत्यवल्लवु, मायामयवेंदु तिळियतक्कद्दु. ) ' विष्णुमायया '= व्याप्तनाद ब्रह्मन अव्यक्तस्वरूपवाद मायादिंद ' ईश्वरेण परिच्छिन्नं ब्रह्मणा विषयीकृतं ( किमितिविषयीकृतमितिचेत् ) कालेन कालात्मकेन ज्ञानस्वरूपेण साक्षिणा अव्यक्तमूर्तिना चक्षुराद्यगम्यस्वरूपेण जगत् त्रैकालिकाऽसत्वेन विषयीकृतं ' इति व्याख्यानमयुक्तं; कालात्मकनाद ज्ञानस्वरूपियाद, चक्षुरादिइंद्रियगळिगे गोचरनागदेइद्द साक्षिस्वरूपचैतन्यनिंद ई जगत्तु मूरुकालदल्लियू असत एंदु विषयीकरिसल्पट्टित्तु एंब व्याख्यानवु अयुक्तवादद्दु ॥ १२ ॥

## यथेदानीं तथाचाग्रे पश्चादप्येतदीदृशं ॥ सर्गो नवविधस्तस्यप्राकृतो वैकृतश्च यः ॥१३॥ ॥

**प्रपंचत्रैकालिकाबाध्यत्वस्यानुमानासिद्धत्वादित्याह यथेति । यथेदानीं सृष्टिकालेऽर्थक्रियाकारित्वात्सत्यत्वमनुभूयते तथाग्रे सृष्टेः पूर्वं प्रलये पश्चादुत्तरत्राप्येतज्जगदीदृशं सत्यमित्यनुमातव्यं यथेदानीं कारणरूपेण सचैतन्यं दृश्यमाकाशादिकार्यमुपलभ्यते तथा अग्रे प्रलयकाले च कारणरूपेण सचैतन्यं दृश्यमिति चानुमातव्यमिति त्रैकालिकासत्त्वेऽयं दृष्टांत इतिचेन्न अस्मदुक्तस्य प्रमाणानुकूल्यादन्यस्यानुकूल्यादनर्थहेतुत्वाच्च । तदुक्तं " सृष्टिश्चप्रलयश्चैव संसारोमुक्तिरेवच । देवर्षिप्रभृतयोलोकालोकाभूरादयस्तथा । अनाद्यनंतकालीनाः सर्वदैकप्रकारतः । जगत्प्रवाहःसत्योऽयं नैवामिथ्या कथंचन । येत्वेतदन्यथाब्रूयुः सर्वहंतारएवत " इत्यादि प्रवाहरूपेण सत्यस्य विश्वस्य सर्गस्य नवविधत्वाच्च सत्यत्वं सिद्धं नहींद्रजालवन्मिथ्याभूतस्य नियतसंख्याविषयत्वमनेकविधत्वात्तस्येति भावेनाह । सर्गइति । तस्य विश्वस्य । " विधा विधौ प्रकारः स्या- " दित्यभिधानं । प्रकृतिविकृतत्वाच्च नानिर्वाच्यमायाकृतमित्याह प्राकृतइति । " यः सर्गः प्राकृतो वैकृतश्चेत्यन्वयः । अव्यक्ताद्याः पृथिव्यंताः सर्गाः प्रकृतयः स्मृताः । तदुपादानकः सर्गः प्राकृतः परिपठ्यते । अंडंतुविकृतंज्ञेयं तज्जो वैकृतउच्यत " इति वचनात् । अंडाद्बहिः सर्गः प्राकृतः विकृतोंडांतस्थः सर्गो वैकृत इति ज्ञातव्यं चशब्देन मायामयस्य परिणामादर्शनं लिंगमिति सूचयति स्वरूपादप्रच्युतादन्यथा स्फुरणं मायेत्यंगीकारात् ॥ १३ ॥**

मेले हेळिद परकीयर व्याख्यानवु याके अयुक्तवेंदरे—प्रपंचवु मूरु कालदल्लियू बाधइल्लद सत्यवादद्देंदु युक्तियिंदलूसह सिद्धवागुवदेंदु हेळुवरु— ' यथा इदानीं ' ई सृष्टिकालदल्लि ' अर्थक्रियाकारी ' सृष्टिमोदलाद केलसक्के उपयोगिसुत्त फलदायकवाद कारण ई जगत्तु सत्यवादद्देंदु ह्यागे अनुभवक्के बरुवदो, अदरंतेये सृष्टिय पूर्वदल्लि अंदरे प्रलयकालदल्लि स्थितिकालदल्लियादरू ई जगत्तु सत्यवादद्दु एंदु तिळियतक्कद्दु; ( हागादरे इदक्के प्रतियागि अनुमानवु परकीयरिगादरू हेळलोशवे; अदु ह्यागेंदरे )-' यथा इदानीं ' ईगे सृष्टिकालदल्लि ह्यागे कारणरूपदिंद ब्रह्मचैतन्ययुत सत्यरूपवागिद्दु अदरमेले आकाशमोदलाद मिथ्यारूपकार्यवु तोरुवदो, अदरंते प्रलयदल्लियादरू कारणरूपदिंद चैतन्यवु सत्यवे कार्यरूपवाद मिथ्याप्रपंचवु ज्ञानदिंद बाध्यवागुवदु एंब अनुमानदिंद जगत्तु मूरु कालदल्लियू असत् एंदु साधिसल्पडुवदु; एंदरे हागल्लवेंदु हेळुवरु— नावु ( द्वैतवादिगळु जगत्तु सत् एंदु हेळुववरु ) हेळिदयुक्तिगे श्रुतिस्मृतिगळ प्रमाणानुकूलविरुवदु. परकीयरु ( जगत्तु मिथ्यएंदु हेळुववरु ) हेळुव युक्तिगे श्रुतिस्मृति प्रमाणानुकूलविल्लद्दरिंद हागे अर्थमाडिदरे नरकाद्यनर्थक्के कारणवागुवदु. ( ई विषयक्के प्रमाणवु )-' सृष्टियु प्रलयवू संसारवू मुक्तियू देवतिगळू ऋषिगळे मोदलाद जनरू भूलोकवे मोदलाद लोकगळू, इवु एल्लवू अनाद्यनंतकालदिंद सर्वदा एक प्रकारवागि इरुववु; ई प्रकार जगत्तु प्रवाहरूपदिंद सत्यवादद्दु. ( प्रवाहरूपदिंद सत्यवेंदरे—केरेयल्लि ह्यागे ओंदे नीरु इरुवदो, प्रवाहदल्लि हागे ओंदे नीरु इरुवदिल्लवु; मेलिंदमेले होस नीरु बरुत्तलू इद्द नीरुहोगुत्तलू इरुवदु. आ प्रकार जगत्तु ओंदुसारे हुट्टिदु कडेतनक ओंदे प्रकार इरुवदेंदल्लवु. हुट्टुवदू बेळेयुवदू सायुवदु ई मूरु सर्वदा इरुवदु. ) इदु एंदिगू ' मिथ्या '= ब्रह्मनल्लि अज्ञानदिंद आरोपितवु एंदल्लवु. यारु इदक्के विपरीतवागि जगत्तु मिथ्यएंदु तिळियुवरो अवरु सर्वहत्या माडिद पापक्के पात्ररागुवरु ' एंदु स्कंदपुराणदल्लि हेळिरुवदु. प्रवाहरूपदिंद सत्यवाद जगत्तिन सृष्टिगे ओंभत्तप्रकारविरुवदरिंद जगक्के सत्यत्ववु सिद्धवागुवदु, इंद्रजालदंते जगत्तु मिथ्याभूतवादरे इष्टे प्रकारवेंदु नियमदिंद विभागमाडलिक्के बरुवदिल्ल. याकेंदरे— आ इंद्रजालमायेयु अनेकप्रकारवादद्दु अदु इष्टे हींगे एंदु हेळलिक्के शक्यवल्लवु, एंब अभिप्रायदिंद हेळुवरु— ' सर्गो नवविधः ' विधः एंब शब्दवु प्रकारवाचकवेंदु कोशदल्लि हेळिदकारण इल्लि नवविधः एंदरे ओंबत्तु प्रकारवेंदु अर्थवु. ई ओंभत्तु प्रकारवाद सृष्टियु प्रकृतियिंद विकार होंदुवदादकारण, इदु अनिर्वाच्यवाद मायादिंद कृतवादद्दल्लवेंदु हेळुवरु— आ ९ प्रकारसृष्टियल्लि केलवु प्राकृतवेंतलू केलवु वैकृतवेंतलू एरडु भेदवुंटु. अदरल्लि प्राकृतसंज्ञेयु यावक्केंदरे ' अव्यक्तमोदलुमाडि पृथिवीपर्यंतर

वाद सृष्टियु प्रकृतसृष्टि एनिसुवदु. प्रकृतिये उपादानवागि उळ्ळसृष्टियु प्राकृतवेनिसुवदु; ब्रह्मांडवु विकृतवेनिसुवदु; आ ब्रह्मांडदाह्लि हुट्टिद यावत्तू वैकृतवेनिसुवदु. ' एंदु प्रमाणविद्दरिंद ब्रह्मांडद होरगिन सृष्टियु प्राकृतवेंतलू ओळगिनसृष्टियु वैकृतवेंतलू तिळियतक्कद्दु. ई श्लोकदल्लिय ' च ' शब्ददिंद, मायामयवादद्दर परिणाम तोरद इरुवदे अदर गुर्तेवु एंदु सूचितवागुत्तदे. ( याकेंदरे ) तत्र रूप वंदु रीतिइद्दु अदन्नु मत्तोंदु रीति तोरुसुवदे ' माया ' एंदु अंगीकारवदे ॥ १३ ॥

## कालद्रव्यगुणैरस्य त्रिविधः प्रतिसंक्रमः ॥ आद्यस्तु महतःसर्गो गुणवैषम्यमात्मनः ॥ १४ ॥ ॥

प्रतिपन्नोपाधौ सत्वप्रतिषेधवद्बाधाभावाच्च सत्यइतिभावेनाह कालेति अस्य विश्वस्य प्रतिसंक्रमः प्रलयाख्यो नाशः कालद्रव्यगुणनिमित्तभेदेन त्रिविधो ज्ञेयः शतवर्षादिसंख्याजातः कालतः घटादेः मुसलादिना द्रव्यतः प्रवृद्धेन सत्वेन तामसज्ञानमुल्बणेन तमसा सात्विकं सुखं क्वचिदुद्रिक्तेन रजसा सात्विकतामसयोरपि क्वचित्सत्वेन राजसतामसयोरपीत्यादिको विलयो गुणतः "रजस्तमश्चाभिभूय सत्वं भवतीत्युदाहृतं । तामसस्यपदार्थस्य सत्वंहि लयकारणं । सात्विकस्य तमश्चैव तयोरपिरजःक्वचित् । गुणतोयं लयः प्रोक्तो द्रव्यतस्तुविरोधिना । कालतःकालसंख्याको लयःसर्वस्यवस्तुन " इतिवचनाच्च विश्वस्य त्रैकालिकासत्वलक्षणो बाधो नोपपन्नइति । तत्र प्राकृतवैकृतयोर्मध्ये प्राकृतसर्गमाह आद्यइति । आत्मनः परमात्मनः सकाशाद्गुणवैषम्यं गुणवैषम्यनामको महतश्चतुर्मुखदेहस्य तदभिमन्यमानमहत्तत्वस्य च प्राकृतेष्वाद्यः सर्ग उच्यते । अत्रेदमाकूतं तमोगुणाद्रजोगुणो द्विगुणः रजोगुणात्सत्वगुणो द्विगुणः एवं प्रकृतिजानां गुणानां परिमाणं स्यात्तत्र त्रिगुणेषु सत्वगुणः केवलो रजस्तमोभ्यामविमिश्रः रजोगुणस्तु त्रिविधः तथाहिमूलरजसि रजोगुणाच्छताधिकः सत्वगुणः रजःशतांशस्तमोगुणइति रजोराशिः मूलतमोगुणोऽपि त्रिविधः मूलतमसि तमोगुणाद्दशगुणाधिकः सत्वगुणः रजस्तमस एकादशधाविभक्तादेकांशसंमितं एवं गुणानां निजस्थितिः तत्र प्रलये मूलरज एकादशधा विभक्तं दशांशेन शुद्धसत्वेन मिश्रितं भवति एकांशेन मूलतमस्यपि मिश्रितं स्यादेतां गुणानां साम्यावस्थामाहुः तत्र यदा मूलसत्वेन संगतं दशांशं तद्रजः सर्वं तन्मूलतमसा सह संगतं संयुक्तं भवति तदा महत्तत्वं समुत्पन्नमाहुः तत्केवलसत्वगुणमुच्यते प्रलये मूलसत्वेन संगतं मूलरजःमूलतमसि संगतं मूलरजः मूलरजसि स्वाभाविकं रज इति रजांस्येव त्रिभागा एकाशस्तम इति चतुर्भागा एषां संयोगेनोत्पन्नगुणवैषम्यनामकं महत्तत्वं ब्रह्मणोरूपमिति । तदुक्तं " तमसो रजस्तु द्विगुणं रजसः सत्वमेव वा । परिमाणतएवंस्युस्त्रयःप्रकृतिजागुणाः । तत्रसत्वंकेवलंस्याद्रजस्यपिशताधिकं । सत्वंरजःशतांशंतु तमस्तत्रप्रकीर्तितं । तमस्यपितथासत्वं तमसस्तुदशोत्तरं । तद्दशांशेनतुरजो मूलजं यद्रजस्तुतत् । विलये दशांशतःसत्व एकांशेनतमस्यपि । मिश्रितंभवतिह्येतां साम्यावस्थाविदुर्बुधाः । यदा तु तद्रजःसर्वं तमसासहसंगतं ।

१. अन्येन एकेन भागेन रजोराशौ स्थितं भवतीत्यपि ग्राह्यं. ॥--- ( या. ) २. प्रकृतिजा इत्यनेन कार्यभूतानामेवेयंस्थितिः नापरिच्छिन्न प्रकृतिरूपाणामितिसूचयति ।– (या.)
अत्र तमोरजःसत्वशब्दैः त्रिगुणात्मकमूलप्रकृतेरुद्धृत्य राशीकृतानामेव तम आदीनां ग्रहणं नतु मूलप्रकृतिभूततमआदीनां तेषां सूक्ष्मभागरूपेणानंतत्वेनैककस्माद्विगुणत्वायोगात् ॥– ( ता. दी. )



। तदात्वाहुर्महत्तत्वं तच्चतुर्भागसंभवं । तत्रत्रिभागोरजस एकाशस्तमसस्तथा । तदाहुर्ब्रह्मणोरूपं गुणवैषम्यनामकं । तदेवकेवलंसत्वमितरापेक्षयाभवेत् । श्रीर्मूलसत्वंविज्ञेया भूर्मूलंरजउच्यते । मूलंतमस्तथादुर्गा महालक्ष्मीस्त्रिमूलिका । गुणेभ्योगुणमूलाच्च योऽतीतः सजनार्दन" इति ॥ १४ ॥

अद्वैतवादिगळु ई जगत्तु मायामयवेंदु अन्नुवरु; आ मायेय लक्षणवेनेंदरे– ' स्वरूपादप्रच्युतादन्यथास्फुरणं माया ' एदुरिगिद्द यथार्थवाद वस्तुविनस्वरूपवु तोरदे अदक्के विपरीतस्फुरणवागुवदे माया एंदन्नुवरु. अंदरे ओब्ब मनुष्यन एदुरिगे ओंदु शिंपु बिद्दिरलु अवनिगे आ शिपिन निजवादरूपवु तोरदे, विपरीतवागि, इदु बेळ्ळि एंदु तोरुवदु; अदरंतेये निजवाद ब्रम्हस्वरूपवु अज्ञानि जनक्के तोरदेइद्दरिंद आ ब्रम्हनल्लि इदु जगत्तु एंदु आरोपमाडल्पट्टिरुवदु एंदु हेळुवरु; आदरे युक्तवल्लवु. याकेंदरे– शिंपिनाल्लि बेळ्ळिय आरोपदंते ई जगत्तु, ब्रम्हनल्लि आरोपितवू आगिल्लवु. आरोपितवादवस्तुवु विकारहोंदि एनादरू केलसक्के बरुवदिल्ल. शिंपिनल्लि आरोपितवाद बेळ्ळियु करिगिसि कडगवन्नु माडलिक्के बरबहुदो? अदरंते जगत्तु ब्रह्मनल्लि आरोपितवागिद्दरे सत्वादिगुणगळ विकारदिंद उत्पन्नवागि प्राकृतवैकृत, एंब भेददिंद ८ प्रकार सृष्टवायितेंदु हेळलिक्के बरुत्तिद्दिल्लवु. हागू यावदु आरोपितवागिरुवदो अदक्के आ कूडले स्वल्पकालदल्लिये बाधज्ञान उंटागुवदु. ह्यागेंदरे शिंपुकंडु इदु सत्य रजतवेंदु भ्रांतियु हुट्टुवदु, आनंतर आ उत्तरक्षणवे इदु सत्यरजतवल्ल, एंदु मोदलु सत्यरजतवेंदु तिळकोंड मिथ्या ज्ञानक्के बाधकरूपवाद निजज्ञानवु हुट्टुवदु. अदरंतेये, जगत्तिनल्लि घट पट ( मण्णिन कोड, वस्त्र ) मोदलाद अनेकवस्तुगळु सर्वरिगू तोरुत्तिरुवु. आदरे आ घटपट मोदलादवुगळल्लु नोडिदमेले स्वल्पुकालदमेले यारिगादरू इदु घटवल्ल इदु पटवल्ल एंब बाधज्ञान उंटागुवदो? यारिगू इल्लवु आदकारण अद्वैतरु हेळुवंते ई जगत्तु मिथ्या एंदु हेळुवदक्के युक्तियिंद बाधक बंदकारण हागे हेळकूडदु. ई जगत्तु सत्यवादद्दु एंब अभिप्रायदिंद ई ' कालद्रव्यगुणैः ' एंब श्लोकवन्नु हेळुवरु. ई सत्यस्वरूपवाद जगत्तिगे प्रलयवेंब नाशवु कालदिंदलू द्रव्यदिंदलू गुणदिंदलू एंदु मूरुप्रकार उंटु. अदु ह्यागेंदरे, नूरु वरुष कालवायितेंदरे जनरु मृतरागुवदु इदु कालदिंद नाशवु; मण्णिन कोड मोदलादवुगळिगे मुसल ( वनिके ) मोदलादवुगळ प्रहारदिंद आगुव नाशवु द्रव्यदिंद; सत्वगुणवु ( समाधान गुणवु ) हेच्चायितेंदरे तामस ( क्रोध अज्ञान मोदलाद ) ज्ञानवु नष्टवागुवदु, मत्तु अत्युत्कटवाद तमोगुणदिंद सात्विक सुखवादरू नाशवागुवदु. मत्तू केलवु कालक्के प्रबलवाद रजोगुणदिद ( नानु नन्नदेंब ममतेयिंद ) सात्विक, मत्तू तामस ई एरडू गुणगळू नाशवागुववु. केलवु कालक्के सत्वगुणदिंद रजोगुण तमोगुण एरडू नाशवागुववु. इदु गुणदिंद लयवेनिसुवदु. ई प्रकार हेळिद अर्थक्के एनु प्रमाण वेंदरे– " रजोगुण तमोगुण एरडन्नू मुरिदु सत्वगुणवु प्रबल वागुवदु, एंदु हेळल्पटिदु. मत्तू ताममपदार्थक्के सत्वगुणवु लयकारणवु. सात्विकक्के तमोगुणवु लयकारणवु. क्वचित् कालदल्लि सात्विकक्कू, तामसक्कू रजोगुणवु लयकारणवागुवदु. ई प्रकार गुणदिंद लयवु हेळल्पट्टितु. द्रव्यदिंद लयवु, अवुगळ विरोधियाद पदार्थगळिंद सर्ववस्तुक्कू नूरुवरुषवे मोदलाद क्लप्तकालक्के आगुव लयवु कालद लयवु. ' एंदु ब्रह्मतर्कवेंब ग्रंथदल्लि हेळिरुवदु. आदकारण जगत्तिगे मूरू कालदल्लि असत् ( सुळ्ळु ) एंब बाधवु संभविसुवदिल्लवादरिंद जगत्तु मिथ्या एंदु हेळलिक्के शक्यवल्लवु. इदरल्लि प्राकृतवैकृतगळेंब एरडु प्रकार सृष्टियल्लि प्राकृत सृष्टियन्नु हेळुवरु ' आद्यस्तुमहतःसर्गः ' श्रीहरियिंद गुणवैषम्यवेंदु हेसरुळ्ळद्दागि महत्तत्ववादिंद हुट्टिद चतुर्मुखन देहक्कू आ चतुर्मुखने अभिमानियागिरुव महत्तत्वक्कू आद सृष्टियु प्राकृत सृष्टियल्लि मोदलनेदु एनिसुवदु..आदरे ई विषयदल्लि ईमुंदे हेळुवदु रहस्यवाद अभिप्रायवु. ( एनेंदरे )–– सत्वरजस्तमोगुणात्मकळाद मूलजडप्रकृतिय संबंधवाद सत्वरजस्तमोगुणगळु अनंत अंशदिंद इरुववु. आदरे अदरल्लि जगत्तिन सृष्टिगे उपादानरूपवागि एष्टु सत्वादिगुणगळु तेगदुकोळल्पट्टिरुववो अवुगळ स्वरूपवन्नु हेळुवरु–– मूलतमोगुणदकित मूलरजोगुणवु द्विगुण (दुप्पट्टागि)-

वागिरुवदु. आ रजोगुणदकिंत मूलसत्वगुणवादरू द्विगुणवागिरुवदु. ईप्रकार प्रकृतियिंद उत्पन्नवाद गुणगळलि सृष्टिय उपादानक्कागि तेगेद सत्वादि गुणगळ परिमितियु इरुवदु. आदरे अवुगळ मूल स्थितियु ह्यागिरुवदेंदरे हेळुवरु– ई मूरुगुणगळलि सत्वगुणवु मात्र रजस्तमोगुणगळिंद मिश्रवागदे शुद्धवागिरुवदु. मूल रजोगुणवु मूरु गुणगळिंद मिश्रवागिरुवदु. अदु ह्यागेंदरे, मूलरजोगुणदलि एंटु रजोगुणवु इरुवदो अदक्कित नूरु पालु हेचागि सत्वगुणविरुवदु. मत्तू आ मूलरजोगुणद नूरु भागदलि ओंदु भागवु तमोगुणविरुवदु. ईप्रकार इवु मूरु कूडि ओंदु मूलरजोगुणद राशियु. (ई रजोराशियलि १ पालु तमोगुणवू १०० पालु रजोगुणवू१०००० पालु सत्वगुणवू इरुवदु, अंदरे मेले हेळिद लेक्कवु सरियागुवदु ) मूल तमोगुणवादरू मूरुगुणगळिंद मिश्रवागिरुवदु. अदु ह्यागेंदरे मूल तमोगुणदकिंत हत्तु पालु हेचागि सत्वगुणविरुवदु मत्तू आ मूल तमोगुणद हत्तोंदु भागदलि ओंदु भागवु रजोगुणविरुवदु. (१ पालु रजोगुणवू, ११ पालु तमोगुणवू, ११० पालु सत्वगुणवू ) ई मूरूकूडि मूलतमोगुणद स्वरूपवु. ई प्रकार मूरू गुणगळ निजस्थितियु. । 'रजोराशि तमोराश्योः सत्वगुणस्याधिक्येपि इतर गुणयोर्मध्ये यस्य यत्राधिक्यं सराशिस्तन्नाम्ना अभिधीयते इति ज्ञातव्यं । ' या. ई मेले हेळिद रजोगुण तमोगुण ई एरडु राशिगळलियू सत्वगुणवे अधिकवागिरुवदु मत्तु एरडु राशिगळलियू मूरू गुणगळू मिश्रवागिरुववु. आदरिंद यावदु रजोगुणवु, यावदु तमोगुणवेंबदु ह्याग तिळियबेकेंदरे एरडु राशिगळलियू सत्वगुणवन्नु बिट्टु याव गुणवु हेचागिरुवदो आ राशियु आ गुणदिंद करेयल्पडुवदु.) प्रलयकालदलि ई गुणगळ साम्यावस्थेयंतलू, सृष्टिकालदलि वैषम्यावस्थेयंतलू हेळुवरु. अदरलि प्रलयकालद साम्यावस्थेयु ह्यागेंदरे हेळुवरु–प्रलयकालदलि मेले हेळिद राशीभूतवाद रजोगुणदलि हत्तोंदुप्रकार विभागमाडि अदरलि हत्तुभागवु शुद्धसत्वदलि मिश्रवागुवदु ओंदु भागदिंद मूलतमोगुणदलि मिश्रवागुवदु.(हागादरे रजोराशियु नष्टवागुवदेंदलव.)मत्तोंदु भागदिंद मूलरजोगुणवु बेरेइरुवदु. साम्यावस्थेएंदरे मूरू गुणगळलि मूरूगुणगळु शेरि समान वागुवदे साम्यावस्थेयु; आग्ये प्रलयकालवु. ई प्रकार प्रलयकालदलि, सत्वगुणदलि शेरिद हत्तु अंश रजोगुणवु आ सत्वगुणवन्नु बिट्टु मूलतमोगुणदलि बंदु शेरिदेंदरे आग्ये महत्तत्ववु उत्पन्नवागि सृष्टिकालवेनिसुवदु. आग्ये सत्वगुणवु एरडने गुणदिंद मिश्रवागदे इरुवदु. प्रलयकालदलि मूलसत्वगुणदलि शेरिद मूल रजोगुणवु १: मूलतमोगुणदलि शेरिद मूलरजोगुणवु २: मूलरजोगुणदलिद्द स्वाभाविक रजोगुणवु ३. ई प्रकार मूरुविधवाद रजोगुणवू ओंदु तमोगुणवू शेरि ई नाल्कु भागगळ संयोगदिंद गुणवैषम्यनामकवाद महत्तत्वस्वरूपवाद ब्रह्मदेवन शरीरवु उत्पन्नवायितु. ई हेळिद अर्थक्के श्रीमदाचार्यरु उदाहरिसिद प्रमाणवन्नु तोरिसुवरु– ' तमोगुणकिंत रजोगुणवु द्विगुणवागिरुवदु; रजोगुणकिंत सत्वगुणवु द्विगुणवागिरुवदु. ई प्रकार परिमितियुळ्ळवागि मूरू गुणगळु प्रकृतियिंद उत्पन्नवागिरुववु. अदरलि सत्वगुणवु एनू मिश्रवागदे तानु इद्दु रजोगुणदलियादरू नूरुपालु हेचागिरुवदु मत्तु आ रजोगुणदलि रजोगुणद नूररलि ओंदु भागवु तमोगुणविरुवदु. हागू तमोगुणदलियादरू आ तमोगुणद किंत हत्तुपालु हेचागि सत्वगुणविरुवदु. आ तमोगुणद हत्तरलि ओंदु भागवु रजोगुणविरुवदु. ईप्रकार इद्दु प्रलयकालदलि आ मूल रजोगुणदोळगिन हत्तु अंशगळु मूलशुद्धसत्वदलि शेरुववु. ओंदु अंश रजोगुणवु तमोगुणदलि शेरुवदु. ईप्रकार मूरू गुणगळलि मूरू गुणगळु मिश्रवागुववादकारण इदक्के साम्यावस्थेयंदु ज्ञानिगळु बल्लरु. यावाग्ये सत्वगुणदलि शेरिद हत्तुभाग रजोगुणवु तमोगुणदलि शेरुवदो आग्ये नाल्कुभागगळिंद महत्तत्ववु उत्पन्नवायितेंदु हेळुवरु. आ नाल्कु भागगळु याववेंदरे मूरु भागगळु रजोगुणदवु ओंदुभागवु तमोगुणदु, ई प्रकार नाल्करिंद युक्तवाद गुणवैषम्यनामकवाद महत्तत्वात्मक ब्रह्मन शरीरवु हुट्टितेंदु हेळुवरु. अल्लदे, चतुर्मुख ब्रह्मन शरीरवु केवल सत्वात्मकवेंदु हेळुवरु. अंथादु सत्वगुणद संबंधवे इल्लदंते केवल रजोगुण तमोगुणगळिंद हुट्टितेंदु हेळोणायितलवेंदरे— ' तदेवकेवलं सत्वं इतरापेक्षया भवेत् ' ईमेले ब्रह्मदेवन शरीरोत्पत्तियु यावप्रकार हेळल्पट्टितो इदे केवल सत्ववेनिसुवदु. ह्यागेंदरे ' इतरापेक्षया ' इन्नु मुंदे हुट्टतक्क अहंकारतत्ववे मोदलादवुगळिगिंत ई महत्तत्वदलिये सत्वांशवु हेचागिरुवदु. अदादरू एलि उंटु ? केवलरजोगुण तमोगुणगळिंदले महत्तत्वोत्पत्तियु

हेळल्पट्टितलवेंदरे- रजोगुणदलि सत्वगुणद भागवु हेचागिरुवदेंदु मेले हेळिद्दन्नु नेनपिनलिडबेकु. मूलसत्वगुणक्के श्रीरूपवन्नु धरिसिद रमादेवियु अभिमानियु मूलरजोगुणक्के भू:एंब रमादेवियु नियामकलु. मूलतमोगुणक्के दुर्गाएंब रमादेवियु नियामकलु. ई प्रकार महालक्ष्मिये मूरुरूपवन्नु धरिसि मूरु गुणक्के नियामकळागिरुवलु. ई मूरु गुणगळिंदलू इवक्के नियामकळाद रमादेवियू मीरिदवनु यारो अवने जनार्दननेनिसुवनु. ॥ १४ ॥

## द्वितीयस्त्वहमस्तत्र द्रव्यज्ञानक्रियादयः ॥ भूतसर्गस्तृतीयस्तु तन्मात्रद्रव्यशक्तिमान् ॥ १५ ॥ ॥

द्वितीयसर्गमाह द्वितीयइति । द्वितीयोहंकारस्य सर्गः तत्राहंकारसर्गे द्रव्याणि वियदादिभूतानि ज्ञानक्रिया ज्ञानेंद्रियाणि कर्मेंद्रियाणि आदिशब्दगृहीता मन इंद्रियाभिमानिदेवाश्च जायंत इतिशेषः।भूतादीनां सर्गक्रमेण तृतीयादित्वेनाह भूतसर्गइति । भूतानामाकाशादीनां सर्गः तन्मात्रद्रव्यशक्तिमान् तन्मात्राः शब्दादयः आकाशादीनां शब्दादिस्वरूपत्वात्तन्मात्रशक्तिमान् द्रवणशक्तिमत्त्वाद्द्रव्यशक्तिमान् अहंकारतत्वेपि गुणवैषम्यमस्तीति ज्ञातव्यं तथाहिमूलेरजसियद्रजः मूले तमसि यत्तमः एतदात्मकं महत्तत्वं ब्रह्मणोरूपमेकादशधा विभज्य दशांशाः सत्वं स्युः एकांशो रजः रज एकादशधा विभज्यैकांशस्तमस्तस्मात्तमस उत्पन्नोहंकारस्तदभिमन्यमानमहंकारतत्वंचेति महतोहंकारसर्गःसोहंकारोपि त्रिविधः तस्मिन्नहंकारेपि दशांशाः सत्वं एकांशोरजस्तद्रज एकादशधा विभज्यैकांशस्तमस्तमोंशात्तामसाहंकारः रजोंशात्तैजसाहंकारः सत्वांशाद्वैकारिकाहंकारइति तत्रापि तामसाद्भूतसर्गः । तैजसादिंद्रियसर्गः वैकारिकाद्देवसर्गः । " यद्रजोमूलरजसि मूलेतमसि यद्रजः। तमश्चमूलेतमसि महत्तत्वंतदात्मकं । दशांशास्तत्रसत्वंस्युरेकांशोरजएवतु । तद्दशांशंतमोज्ञेयमहंकारस्तदात्मकः । सरुद्रस्तामसोज्ञेयो विरिंचापेक्षयैवतु । इतरापेक्षया सत्वं सत्वाद्यास्तद्वदेस्युतु । तत्तमोंशात्सात्विकांशो मनआद्यःप्रकीर्तितः । रजसोंशास्त्विंद्रियाणि तामसांशाश्चखादय " इतिवचनादिदं तात्पर्यमवगम्यते ॥ १५ ॥

एरडने अहंकारतत्वद सृष्टियन्नु हेळुवरु– एरडनेदु अहंकारसृष्टियु, आ अहंकारसृष्टियलि 'द्रव्यज्ञानक्रियादयः' ( द्रव्य एंदरे ) आकाशमोदलाद पंचभूतगळु, ज्ञानेंद्रियगळु, कर्मेंद्रियगळु ( आदिशब्ददिंद ) मनःमू इंद्रियाभिमानि देवतेगळू हुट्टुवरु. अनंतर भेददिंद पंचभूतगळ सृष्टियु मूरनेदु. आ पंचमहाभूतगळिगे आकाशादिगळु मात्रागळु, आकाशादिगळु शब्दादिगळ स्वरूपवाद कारण आ मात्रागळ शक्तियुळ्ळवेनिसुववु. द्रवणशक्ति एंदरे द्रव्यशक्तियुळ्ळवु एनिसुववु. ई अहंकारतत्वदलियादरू गुणवैषम्यवुंटेंदु तिळियतक्कद्दु. अदु ह्यागेंदरे— मूरुप्रकार रजोगुणवु ओंदुप्रकार तमोगुणवु शेरि महत्तत्ववु ब्रह्मदेवन शरीररूपवागि हुट्टितेंदु हिंदे हेळल्पट्टितु. आ महत्तत्वदलि हत्तोंदु भागमाडि अदरोळगिन हत्तुभाग सत्वगुणवु ओंदुभाग रजोगुणवु. आ रजोगुणवन्नु हत्तोंदु भागमाडि अदरलि ओंदु भाग तमोगुणवु ईप्रकार शेरि ( महत्तत्वदोळगिन १ अंश तमोगुण १० अंश रजोगुण १०० अंश सत्वगुण इष्टु शेरि. ) इदरोळगिन तमोभागदिंद

१. तदात्मकः महत्तत्वांतर्गततमोभागोपादानकः ॥– ( या. ) २. तद्वत् महत्तत्ववत् अस्यच अहंकारस्यापि तारतम्येन संतीतिशेषः ॥ तस्याहंकारतत्वस्य तमोंशादित्यर्थः पुनः सात्विकादिरूपेण त्रिधाविभक्तान्मनआदीनि जातानीतिशेषः ॥– या.

आ ब्रह्मदेवन रोममोदलादवुगळिंद एळुप्रकार छंदःसुगळ उत्पत्तिक्रमवन्नु हेळुवरु-- आ ब्रह्मदेवन रोमगळिंद उष्णिक् एंब छंदःसु उत्पन्न ( प्रकट ) वायितु. त्वगिंद्रियदिंद गायत्री छंदःसु उत्पन्नवायितु. अवन देहगतवाद मांसदिंद त्रिष्टुप् एंब छंदःसु उत्पन्नवायितु. स्नायु ( करळु ) दिंद अनुष्टुप् एंब छंदःसु उत्पन्नवायितु अस्थिगळिंद जगतीछंदःसु उत्पन्नवायितु. मज्जा ( अंदरे मांसदल्लिह्व तुप्प ) दिंद पंक्ति एंब छंदःसु उत्पन्नवायितु. प्राणदिंद बृहती एंब छंदःसु उत्पन्नवायितु. इल्लि हेळिद छंदःसुगळ क्रमवु हिंदिनदे इद्दागू 'तस्योष्णिगलोमानि' एंब इवे मोदलाद श्रुतिगळल्लि इद्द क्रमानुसारवागिरुवदरिंद बाधकवल्लवु ॥ ४५ ॥

## स्पर्शास्तस्याभवन् जीवात्स्वरो देह उदाहृतः ॥ ऊष्माण इंद्रियाण्याहुरंतस्था बलमात्मनः ॥ ४६ ॥

पंचाशद्वर्णानामपि ब्रह्मणोभिव्यक्तिप्रकारमाह स्पर्शाइति । कादयोमावसानाःस्पर्शास्तस्य ब्रह्मणो जीवाच्चैतन्यादभवन्नभिव्यक्ता आसन्वर्णानां नित्यत्वादभिव्यक्तिरेव । स्वरोऽकारादिर्देहः देहादुदाहृत उद्धृतः शषसहा ऊष्माणः श्रोत्रादींद्रियाणि इंद्रियेभ्य उत्पन्ना इत्याहुः । यरलवा अंतस्था आत्मनो ब्रह्मणो बलं बलादभिव्यक्ताः । अत्र सामानाधिकरण्यवचनं " यस्माद्यज्जायतेचांगात्तत्तदंगाभिधंभवेदि- "तिवचनाद्युक्तं । प्रथमा पंचम्यर्थे अकुहविसर्जनीयानांकंठ इत्यादिस्थानभेदवत् ग्रंथांतरे स्थानभेदसंभवे कथमत्रोक्तं एवं स्थानमिति निर्णय इतीदं चोद्यं । " स्पर्शास्तस्याभवन्जीवात्स्वरादेहात्प्रजज्ञिरे । ऊष्माणइंद्रियेभ्यश्च अंतस्थाबलतोविभोरि " त्यनेन परिहर्तव्यं ॥ ४६ ॥

ऐवत्तुवर्ण ( अक्षर ) गळादरू ब्रह्मदेवन देहदिंदले अभिव्यक्तवादवु ( होरगे होरटवु ) एंबदन्नु हेळुवरु-- आ अक्षरगळल्लि क- मोदलुमाडि म- पर्यंत स्पर्शगळेनुवरु. ई स्पर्शगळु ब्रह्मदेवन जीवचैतन्यदिंद उत्पन्नवादवु. अंदरे होरगे होसदागि प्रकटवादवेंदर्थवु; याकेंदरे' वर्णगळु नित्यवादकारण अवुगळिगे उत्पत्ति इल्लवु. अकारमोदलाद स्वरगळु आ ब्रह्मन देहदिंद उत्पन्नवादवु. श, ष, स, ह इवुगळिगे, ऊष्माण एनुवरु. अवु श्रोत्रमोदलाद इंद्रियगळिंद उत्पन्नवादवु. य, र, ल, व इवु अंतस्थवेनिसुववु. इवु आ ब्रह्मन देहगतवाद बलदिंद उत्पन्नवादवु अभिव्यक्तवादवु. ' सामानाधिकरण्यवचनं ' अंदरे-- ई श्लोकदल्लि देहात्-- स्वरः एंदु प्रयोग माडतक्कद्दु हागे प्रयोगिसदे स्वरो देहः-- एंदु एरडू पदगळन्नु समान ( ओंदे ) विभक्तियिंद प्रयोगमाडिद्दरिंद देहवे स्वरवु एंदर्थवागुवदे होर्तु देहदिंद स्वरवु एंदु ह्यागे अर्थवु एंदरे-- ' याव अंगदिंद यावदु उत्पन्नवागुवदो अदु अदर अंगवेनिसुवदु ' एंब वचनदिंद पंचमीअर्थ हेळुवल्लि प्रथमाविभक्तिप्रयोगवु उचितवाददु. ओळ्ळेदु व्याकरणशास्त्रदल्लि ' अकुहविसर्जनीयानां कंठे ' अ अंदरे अकारवु कु अंदरे कवर्गवु ह हकारवु इवुगळु विसर्जनीय एंदरे अः मोदलाद विसर्गगळु इवुगळेल्ल कंठस्थानदल्लि उत्पन्नवागिरुववेंदु हेळिद्दरिंद इल्लि हेळिद वर्णोत्पत्तिगू ग्रंथांतरोक्त वर्णोत्पत्तिगू स्थानभेदवाद्दरिंद इल्लि हेळिद वर्णोत्पत्तिय स्थानवे उचितवेंदु ह्यागे निर्णयवु वेंदरे ' ककारादिंद मकारदवरेगे स्पर्शगळु आ ब्रह्मदेवन जीवदिंद उत्पन्नवादवु अकारमोदलाद स्वरगळु देहदिंद उत्पन्नवादवु. श, ष, स, ह एंब ऊष्मगळु इंद्रियगळिंद य, र, ल,व एंब अंतस्थगळु समर्थनाद ब्रह्मदेवन बलदिंद, उत्पन्नवादवु एंब ब्रह्मपुराणवचनविद्दकारण इल्लि हेळिद मूल वर्णोत्पत्तिगु इदे प्रमाणवु एंदु मेलिन संशयवु परिहार माडल्पट्टितु ॥ ४६ ॥

## स्वराः सप्त विहारेण भवंति स्म प्रजापतेः ॥ शब्दब्रह्मात्मनस्तात व्यक्ताव्यक्तात्मनः प्रभोः ॥ ४७ ॥

" निषादर्षभगांधारषड्जमध्यमधैवताः । पंचमश्चेत्यमीसप्ततंत्रीकंठोत्थिताः स्वरा " इति सप्तस्वराः प्रजापतेर्विहारेण शरीरसंचरणविशेषेण भवंतिस्म अभवन्नित्यन्वयः । स्वराणां सप्तविशेषत्वात्तत्सामग्रीमतस्तदुत्पादनसामर्थ्यं स्यात्तदस्य कथमिति तत्राह शब्देति । " शब्दब्रह्मात्मकोब्रह्मा सर्वशब्दाभिधोयतः । ऋतेनारायणादीनिनाम्नांसविषयोयत " इति वचनान्नारायणादिनाम्नां व्यतिरेकेण सर्ववेदादिशब्दराशेर्विषयत्वात्तदुत्पादनसामर्थ्यमस्तीत्यर्थः । नित्यवर्णात्मकवेदानां नित्यत्वेन व्याप्तत्वापरिच्छिन्नस्यब्रह्मणस्तद्विषयत्वं कथमत्राह व्यक्तेति । " व्यक्तंब्रह्मांडमुद्दिष्टमव्यक्तंमहदादिच । तद्व्यापकत्वाद्ब्रह्मातु व्यक्ताव्यक्तात्मकःस्मृत " इत्यतो व्याप्तिमत्त्वात्तद्विषयत्वं युक्तं । उक्तादन्यत्रापि व्याप्तिशक्तिमत्त्वात्प्रभोरित्युक्तं ॥ ४७ ॥

निषाद, ऋषभ, गांधार, षड्ज, मध्यम, धैवत, पंचम एंब इवु एळु तंतिगळिंदलू कंठदिंदलू उत्पन्नवागुव स्वरगळु, मोदलिगे चतुर्मुखब्रह्मन शरीरसंचारविशेषदिंद उत्पन्नवादवु. स्वरगळु एळुप्रकारवागि ओंदक्कोंदु हेच्चुकडिमेयागि विलक्षण इरुववु. आ स्वरगळु उत्पन्नवागुवदक्के कारणवाद सामग्रीयुळ्ळवनिगे आ स्वरगळन्नु हुट्टिसुव ( उपादान- शब्द ) सामर्थ्यविद्दीतु अदु इवनिगे ह्यागेंदरे हेळुवरु- ' शब्द ' ब्रह्मवेंदरे वेदवु आ वेददिंद प्रतिपाद्यनादकारण चतुर्मुखनु, शब्दब्रह्मात्मकनेनिसुवनु वेदगळल्लिद्द एल्लशब्दगळिंद इवनु प्रतिपाद्य ( होगळिसिगोळ्ळुव ) नादकारण, अदरोळगू आ वेदगळल्लि लक्ष्मीनारायणरु मुख्यप्रतिपाद्यरु अवर अनंतर आ नारायणन संबंधवाद नामगळू लक्ष्मीसंबंधवाद नामगळू मत्तू अवर चिन्हगळन्नु हेळतक्क श्रुतिगळू इवुगळन्नु बिट्टु मिक्काद यावत्तू वेदगतशब्दगळिंद ब्रह्मनु प्रतिपाद्यनु, आ वेदशब्दगळिगे इवने विषयनु. आदकारण आ सप्तस्वरगळिगे उपादान ( कारणवाद शब्दगळिगे इवनु मुख्यनाद्दरिंद ) सामर्थ्यवु इवनल्लि उंटेंदु तिळियतक्कद्दु. नित्यवर्णगळ स्वरूपवाद वेदगळु नित्यवादकारण आ वेदगळु व्याप्तवागिरुववु. परिच्छिन्नपरिमिति ( इंतिष्टु एंदु अळतेयुळ्ळ ) ब्रह्मदेवनिगे सर्वत्र व्याप्तवाद वेदविषयत्ववु ह्यागे संभविसुवदु एंदरे-- ' ब्रह्मांडवु व्यक्तवेनिसुवदु महदादितत्वगळु अव्यक्तवेनिसुववु. ई एरडरल्लियू ब्रह्मदेवनु व्याप्तनादकारण व्यक्ताऽव्यक्तात्मकनेनिसुवनु. ' एंदु ब्रह्मतर्कदल्लि हेळिद्दरिंद चतुर्मुखब्रह्मदेवनु सर्वत्र व्याप्तनादकारण व्याप्तवाद वेदगळिंद प्रतिपाद्य ( विषय ) नेनदु संभविसुवदु. मेले हेळिद्दकिंत हेच्चागियू अवनु व्याप्तनादकारण ' प्रभोः ' एंब विशेषण कोट्टिरुवरु ॥ ४७ ॥

## ब्रह्मानुभावविततो नानाशक्त्युपबृंहितः ॥ ततोपरामुपादाय स सर्गाय मनो दधे ॥ ४८ ॥

देहात्तदवयवेभ्यो ब्रह्मणः सृष्टिमुक्त्वाऽधुना प्रकारांतरेण तस्मात्सृष्टिं वक्ति ब्रह्मेति । ब्रह्मा ततः पूर्वस्मादपरां स्त्रीपुरुषीकरणशक्तिमुपादाय सर्गाय मनोदध

१. ब्रह्मणः परब्रह्मणोनुभावः आनुकूल्येन चिंतनं अनुग्रहोवा तेनविततः पूर्णः ॥-- ( या. )

इत्यन्वयः परतंत्रस्य ब्रह्मणः स्वाधीनसृष्टिः कथमत उक्तं अनुभावेति अनुभावेन परब्रह्मणा विततः तस्यानुग्रहामृतेन पूर्ण इत्यर्थः ब्रह्मानुभाववितत इत्येकं वा पदं परब्रह्मणः प्रभावेण विततः हरेरनुकूलेन भावेन सत्तया विततोऽधिकृतो विशेषसन्निधानवानितिवा अतएवनानाशक्त्युपबृंहितः नानाविधसृष्टिसामर्थ्यपूर्णः ॥४८॥

ब्रह्मदेवन देहदिंदलू, अवयवगळिंदलू आदमृष्टियन्नु हेळि; इन्नु मत्तोंदु तरद मृष्टियन्नु हेळुवरु - ब्रह्मदेवनु मोदलु मृष्टिमाडिद नारदनेमोदलाद केवल पुरुषरन्ने मृष्टि माडिदनंतर अवरहोर्तु इन्नु मुंदिनवरन्नु स्त्रीयरन्नू, पुरुषरन्नू प्रत्येकवागि मृष्टिमाडि अवरवर संयोगदिंद मुंदे परंपरा सृष्टियागबेकेंब इच्छेयिंद स्त्रीपुरुषरन्नु उत्पत्तिमाडतक्क शक्तियन्नु तेगेदुकोंडु सृष्टिमाडुवदक्के मनस्सुधरिसिदनु. पराधीननाद ब्रह्मनिगे स्वाधीनवागि सृष्टियु ह्यागे संभविसुवदेंदरे–‘अनुभाववितत: ’ युगं अनु प्रतियुगं आत्मानं भावयति स्वात्मना अवतरति इति अनुभावः श्रीहरिः श्रीहरिय अनुग्रहामृतदिंद पूर्णनागिरुवनु. अथवा ‘ब्रह्मानुभाववितत: एंदु ओंदे पदवन्नु माडि परब्रह्मनेनिसिद श्रीहरिय तेजःसिनिंद पूर्णनादवनु अथवा सृष्टिगे अनुकूलवागतक्क मत्तादिंद ( सामर्थ्यदिंद ) श्रीहरिय विशेषसान्निध्यउळ्ळवनु. आद्दरिंदले आ चतुर्मुखब्रह्मनु सृष्टिमाडुवदक्के तक्कवाद अनेकप्रकार शक्तियिंद पूर्णनागिरुवनु. ॥ ४८ ॥

ऋषीणां भूरिविर्याणामपि सर्गमविस्तृतं ॥ ज्ञात्वा तद्वृद्धये भूयश्चिंतयामास कौरव ॥ ४९ ॥

तत्र सिंहावलोकनप्रकारेणापरां सृष्टिं चिंतयतीत्याह ऋषीणामिति । यत्र[१]पश्चात्तनःश्रेष्ठस्तत्र सिंहावलोकनमि ” तिवचनात् पश्चादुत्पत्स्यमानस्य मनोः श्रेष्ठ्यादत्र सिंहावलोकनं कृतमित्यर्थः । मरीच्यादिऋषीणां सकाशादपि तत्तस्मादविस्तृतत्वादेव अनेनमहतापि पुरुषेण करिष्यमाणं कार्यमालोच्य कर्तव्यं न सहसेति निदर्शितं ॥ ४९ ॥

आ समयदल्लि ब्रह्मदेवनु सिंहावलोकनन्यायदिंद आ मत्तोंदु प्रकारद सृष्टियन्नु योचिसुवनेंदु हेळुवरु--- ‘हे कौरव’ एंदु विदुरने– याव स्थळदल्लि हिंदे हेळिदकिंत श्रेष्ठवाद मुंदिन विषयदल्लि दृष्टियु इरुवदो; अदु-सिंहावलोकनवेनिसुवदु ई प्रकृतक्के हिंदे उत्पन्नराद मुनिगळकिंत मुंदे हुट्टतक्क मनुवु, श्रेष्ठनादकारण सिंहावलोकनवु माडल्पट्टितु. महासमर्थराद मरीचिऋषिगळे मोदलादवरु उत्पन्नरादाग्यू अवरिंद सृष्टियु अभिवृद्धियागलिल्लवु; एंदु तिळिदु, चतुर्मुखनु मुंदे ह्यागादरे ई सृष्टियु अभिवृद्धियादीतेंदु योचनेमाडिदनु. हींगे हेळुवदरिंद केवल श्रेष्ठपुरुषनादारू तानु मुंदे माडतक्क केलसवन्नु आलोचनेमाडि प्रारंभिसतक्कद्दु, होर्तु ओम्मेले प्रारंभिसबारदु एंदु तोरिसिदंतायितु. ॥ ४९ ॥

अहो अद्भुतमेतन्मे व्यापृतस्यापि नित्यदा ॥ न ह्येधंते प्रजा नूनं दैवमत्रविघातकं ॥ ५० ॥ एवं युक्तिमतस्तस्य दैवंचावेक्षतस्तदा ॥ कस्य रूपमभूद्[२]द्वेधा यत्कायमभिचक्षते ॥ ५१ ॥ ॥ ॥ ॥

१. यत्रयस्मिन् प्रकृतेऽर्थे निरूपणीये तदपेक्षया पश्चात्तनः पश्चान्निरूप्यमाणोर्थः श्रेष्ठः श्रोतृबुभुत्सयानुसरणादिना मध्ये निरूपणीयतां प्राप्तः तत्र तस्मिन् प्रकृतेर्थे पुनर्विस्तरतो निरूप्यमाणे सिंहावलोकनं सिंहावलोकनन्यायानुसरणमावश्यकं अन्यथाऽप्रस्तुतोक्तित्वप्रसंगादित्यर्थः ॥– (या.) २. स्त्रीपुरुषरूपेण द्वेधाभूत् । ब्रह्मदेहः सरस्वतीब्रह्मदेहद्वयात्मना परिणत इत्यर्थः ॥ – (या.)

चिंतनविधां दर्शयति अहोइति । सृष्टौ व्यापृतस्य कुतस्तत्राह नहीति । चिंतया निश्चितमाह दैवमिति । दैवानुग्रहोस्तिचेत् सृष्टिः पूर्यतइति निरचिनोदित्यर्थः ॥ ५० ॥ फलितमाह एवमिति युक्तिमतः ध्यानवतः दैवानुग्रहमप्यपेक्षमाणस्य कस्य ब्रह्मणो रूपं द्विधाभूत् यद्रूपं केन ब्रह्मणा प्राप्तत्वात्कायंनामाभिचक्षते निरुक्तज्ञा इतिशेषः ॥ ५१ ॥

ब्रह्मदेवनु आलोचनेमाडिद संगतियन्नु हेळुवरु— अहा ! इदु एनु अद्भुतवागि ननगे तोरुवदु? नानु दिनालू सृष्टियु अभिवृद्धियागुवदक्के प्रयत्नमाडुत्तालिद्दाग्यू, प्रजरु हेच्चिसलोल्लरु इदु अदृष्टनियामकनाद श्रीहरिय चित्तक्के बंदिल्ल, निश्चयवु. आ परदैवन अनुग्रहवु इद्दरे ई सृष्टियु पूर्णवादीतु. एंदु चिंतिसिदनु ॥ ५० ॥ आ योचनेय फलवन्नु हेळुवरु— ई प्रकार ब्रह्मदेवनु योचनाक्रांतनागि श्रीहरिय अनुग्रहवन्नु अपेक्षिसुत्तिरलु, ‘क’ एंदु करिसिगोळ्ळुव, ब्रह्मदेवन रूपवु एरडुप्रकारवायितु. ओंदु स्त्रीरूपवु ओंदु पुरुषरूपवु. अदरल्लि स्त्रीरूपवे सरस्वतियु पुरुषरूपवे ब्रह्मदेवन स्वरूपवु. ‘क’ शब्दवाच्यनाद ब्रह्मदेवन शरीरदल्लिये आ सरस्वतीशरीरवु ब्रह्मशरीरवू प्रकटवागि ब्रह्मनिंद व्याप्तवाद कारण आ एरडू शरीरगळिगू कायवेंदु शब्दार्थबल्लवरु हेळुवरु. ॥ ५१ ॥

ताभ्यां रूपविभागाभ्यां मिथुनं समपद्यत ॥ यस्तु तत्र पुमान्सोभून्मनुः स्वायंभुवः स्वराट् ॥५२॥ स्त्रीयासीच्छतरूपाख्या महिष्यस्य महात्मनः ॥ तदा मैथुनधर्मेण प्रजा एधां बभूविरे ॥ ५३ ॥ ॥ ॥

तद्रूपद्वयं किमभूदिति तत्राह ताभ्यामिति । तयोर्नामविशेषमाह यस्त्विति । स्वराट् चक्रवर्ती ॥ ५२ ॥[१]अस्य मनोः अयं योगो विभूतिकर इत्याह तदेति । तदा तन्मिथुनसृष्टिकालमारभ्य ॥ ५३ ॥

आ एरडू रूपगळिंदेनायितेंदरे हेळुवरु— आ सरस्वती ब्रह्मरूपगळिंद ओंदु हेण्णु ओंदु गंडु उत्पन्नवादवु. अवुगळल्लि याव गंडु कूसुइत्तो अवने चक्रवर्तियाद स्वायंभुवमनुवेनिसुवनु हेण्णुकूसे–शतरूपा- एंबवळु आ श्रेष्ठपुरुषनाद स्वायंभुवन हेंडतियु. ( आ इब्बरिगू ब्रह्मदेवनु विवाहमाडिदनु. ) ॥ ५२ ॥ ई स्वायंभुवन उत्पत्तियु ब्रह्मदेवन मनोरथवन्नु पूर्णमाडुवदेंदु हेळुवरु— अंदिनिंद ( अंदरे आ शतरूपा स्वायंभुवमनुन मिथुन मृष्टिकालवन्नारंभिसि ) स्त्रीपुरुष संयोगधर्मदिंद प्रजेयु अभिवृद्धियागलारंभिसितु. ॥ ५३ ॥

स चापि शतरूपायां पंचापत्यान्यजीजनत् ॥ प्रियव्रतोत्तानपादौ तिस्रः कन्याश्च भारत ॥ ५४ ॥ आकूतिर्देवहूतिश्च प्रसूतिरितिसत्तम ॥ आकूतिं रुचये प्रादात्कर्दमाय तु मध्यमां ॥ दक्षायादात्प्रसूतिं च यत आपूरितं जगत् ॥ ५५ ॥

इति श्रीमद्भागवते तृतीयस्कंधे त्रयोदशोऽध्यायः ॥ १३ ॥ ॥ ॥ ॥

१. केन ब्रह्मणा प्राप्तत्वात् जातत्वात् कायइत्युच्यते देहसमुदाय इत्यर्थः ॥— (या.) २. कन्यात्रयात् ॥– (या.)

अनेन मनुना कान्यपत्यान्युत्पादितानीति तत्राह सचेति । तन्नामान्याह । प्रियव्रतेत्यादिना यतः कन्यात्रयात् ॥५४॥५५॥ इतिश्रीमद्भागवते तृतीयस्कंधे विजयध्वजटीकायां त्रयोदशोऽध्यायः ॥ १३ ॥

ई मनुविनिंद याव मक्कलु मृष्टिमाडल्पट्टवेंदरे हेलुवरु — ब्रह्मपुत्रनाद आ स्वायंभुवमनुवादरू तंदेय अप्पणेप्रकार आ शतरूपा एंब हेंडतियल्लि ऐदु मंदि मक्कळन्नु मृष्टिमाडिदनु. हे विदुरने, अवरल्लि, प्रियव्रतराजनेंतलू, उत्तानपादराजनेंनलू इब्बरु गंडुमक्कलु. आकूति. देवहूति. प्रसूति. एंब मूवरु हेण्णुमक्कलु. सज्जनरल्लि श्रेष्ठनाद विदुरने' आकूतियंत्रमगळन्नु आ मनुवु रुचिनामक प्रजेश्वरनिगे कोट्टनु कर्दमऋषिय गोस्कर नडुविन मगळाद देवहूतियन्नु कोट्टनु प्रसूति एंबवळन्नादरू दक्षप्रजेश्वरनिगे विवाहमाडिकोट्टनु ई मूरुजन हेण्णुमक्कळिंदले जगत्तिनल्लि प्रजेयु तुंबितु ॥ ५४ ॥ ५५ ॥ ईप्रकार प्राक्तनटीका 'सुखार्थबोधिनी' कृ. श्री. र. तृतीयस्कंधद १३ ने अध्यायवु समाप्तवु ॥ श्रीकृष्णार्पणमस्तु ॥

॥ श्रीशुकउवाच ॥ निशम्य वाचं वदतो मुनेः पुण्यतमां नृप ॥ भूयः पप्रच्छ कौरव्यो वासुदेवकथादृतः ॥ १ ॥ विदुरउवाच ॥ स वै स्वायंभुवः सम्राट् प्रियः पुत्रः स्वयंभुवः ॥ प्रतिलभ्य प्रियां पत्नीं किं चकार ततो मुने ॥ २ ॥

अस्मिन्नध्याये हरेरवतारकथाश्रवणादिना साक्षात्पुरुषार्थः स्यादिति निरूप्यते श्रीशुक परीक्षिते पुनरपि विदुरप्रश्नप्रकारं वक्ति निशम्येति ॥१॥ स्वधर्माचारैः स्वपतिं स्वर्गं नयतीति पत्नी तां प्रतिलभ्य तत इत्यनेन व्यापारांतरं निषेधति ॥ २ ॥

ई अध्यायदल्लि श्रीहरिय अवतारमोदलाद कथाश्रवणमुंतादवुगळिंद मुख्यवाद मोक्षवु दोरेयुवदेंदु हेळल्पडुवदु. आ मोदलु श्रीशुकाचार्यरु परीक्षितराजनिगे विदुरनु प्रश्नमाडिद संगतियन्नु हेळुवरु—'हे नृप मैत्रेयमुनिगळु हेळतक्क अतिपुण्यपवित्रकरवाद वाणियन्नु केळि, आ कुरुकुलोत्पन्ननाद विदुरनु, वासुदेवकथागळल्लि अत्यंत आदरउळ्ळवनागि मत्ते प्रश्नमाडिदनु. ॥ १ ॥ विदुरनु माताडुवनु—स्वामिन् महामुनिगळाद मैत्रेयरे ब्रह्मदेवनिगे प्रीतियपुत्रनाद चक्रवर्तियाद स्वायंभुवनु, प्रीत्यास्पदळाद पत्नियन्नु होंदि मुंदे एनु माडिदनु एंदरे तन्न स्वधर्माचारगळिंद पतियन्नु स्वर्गक्के वैय्यतक्कवळु. स्वायंभुवन हेंडतियु इंथवळु ततः= आ हेंडतियन्नु होंदिदकूडले एरडने व्यापारगळिल्लदंते एंदर्थवु. ॥ २ ॥

चरितं तस्य राजर्षेरादिराजस्य सत्तम ॥ ब्रूहि मे श्रद्दधानाय विष्वक्सेनाश्रयो ह्यसौ ॥ ३ ॥ श्रुतस्य पुंसां सुचिरश्रमस्य नन्वंजसा सूरिभिरीडितोर्थः ॥ यत्तद्गुणानुश्रवणं मुकुंदपादारविंदं हृदयेषु येषां ॥ ४ ॥ ॥ ॥

कोसौ वैदुरिकः प्रश्न इत्यत्राह चरितमिति । मे मह्यं वक्तव्यत्वे हेतुमाह विष्वक्सेनेति । विष्वक् सर्वत्र सेना ज्ञानलक्षणा यस्य स तथोक्तः ॥ ३ ॥ विष्वक्सेनचरितं तद्भक्तचरितंचेति द्वयमेव पुरुषार्थांतरंगत्वेन मुमुक्षुणा श्रोतव्यं सूरिभिरीडितत्वादित्याह श्रुतस्येति । सुचिरं श्रम आयासो यस्य स तथा तस्य पुंसां श्रुतस्य वेदाद्यर्थश्रवणस्य अंजसा तत्त्वेन सूरिभिरीडितार्थोयं ननु इदं फलं हि यत्तस्य हरेर्गुणानुवादश्रवणं येषां हृदयेषु मुकुंदस्य पादारविंदं लसतीति शेषः तेषां पुंसां चरितश्रवणं च ज्ञानिभिरभिष्टुतोर्थः इति यस्मात्तस्मात् स्वायंभुवमनोर्विष्वक्सेनकथाविनाभूतत्वात्कथां ब्रूहीतिभावः ॥ ४ ॥

विदुरन प्रश्नेय मुख्यांशवु यावदु एंदरे हेळुवरु. आ आदिराजनाद, राजर्षियाद स्वायंभुवन चरित्रेयन्नु; हे श्रेष्ठरे ननगे हेळबेकु आ राजन चरित्रेयन्नु याके केळुवेनेंदरे अवनु 'विष्वक्सेनाश्रयः' सर्वत्रदल्लियू ज्ञानवेंब सैन्यवुळ्ळ श्रीहरिये आश्रयनागिउळ्ळवनु अथवा श्रीहरियन्नु निश्चयवागि आश्रयमाडिदवनु आदकारण केळुवेनु. ॥ ३ ॥ आ विष्वक्सेनन ( श्रीहरिय ) चरित्रेयन्नू अवन भक्तर चरित्रेयन्नू केळुवदे पुरुषार्थक्के अंतरंगसाधकवादद्देंदु सज्जनरिंद प्रार्थ्यवादकारण आ यरडन्ने श्रवणमाडतक्कद्देंदु हेळुवनु. मनुष्यनु बहुकालश्रमपट्टु वेदमोदलादवुगळ अर्थ श्रवणमाडिद्दक्के यथार्थवागि सज्जनरिंद प्रार्थ्यमानवाद प्रयोजनवु इदे अष्टे? ( यावदेंदरे ) सज्जनरमुखदिंद वर्णनमाडल्पडुव श्रीहरियगुणगळ श्रवणवु ( केळोणवु ) याव उत्तम जनर हृदयकमलदल्लि मोक्षदायकनाद श्रीहरिय पादकमलवन्नु प्रकाशमाडुवदो, आ सत्पुरुषर चरितश्रवणवादरू सज्जरिंद प्रार्थ्यमानवाद प्रयोजनवे; आदकारण स्वायंभुवमनुविन चरित्रेयु श्रीहरिकथेयन्नु बिट्टु बेरे इल्लवादरिंद अवन कथेयन्नु हेळबेकु एंदु अभिप्रायवु. ॥ ४ ॥

श्रीशुक उवाच ॥ इति ब्रुवाणं विदुरं विनीतं सहस्रशीर्ष्णश्चरणोपधानं[1] ॥ प्रहृष्टरोमा भगवत्कथायां प्रणीयमानो मुनिरभ्यचष्ट ॥ ५ ॥ मैत्रेयउवाच ॥ यदा स्वभार्यया साकं जातः स्वायंभुवो मनुः ॥ प्रांजलिः प्रणतश्चेदं वेदगर्भमभाषत ॥ ६ ॥

श्रीशुकः परीक्षिते विदुरप्रश्नप्रकारं वक्तीति वक्ति सूतः शौनकादिभ्य इत्याह इतिब्रुवाणमिति । सहस्रशीर्ष्णोहरेश्चरणोपधानं पादपीठायितं भगवत्कथायां प्रणीयमानः प्रेर्यमाणः अभ्यचष्टाहेत्यन्वयः । विदुरमितिशेषः ॥ ५ ॥ संभाषणानंतरमन्यकथाप्रसंगो नास्तीति भावेनाह यदेति । नायमंजलिर्दांभिक इतिभावेनोक्तं प्रणतइति ॥ ६ ॥

श्रीशुकाचार्यरु परीक्षितराजनिगे मैत्रेयरु विदुरन प्रश्नानुसार उत्तर हेळुवरेंदु हेळुवरु— सूतनु इदरंते शौनकादिगळिगे हेळुवनु.— अनंतशिरस्सुगळुळ्ळ श्रीहरिय चरणारविंदगळन्निडुवदक्के पादपीठदंतिरुव, अतिविनीतनागि ई प्रकार माताडुव विदुरनन्नु कंडु; मैत्रेयमुनिगळु परमानंददिंद मैमेले रोमांचगळुब्बि भगत्वकथेयन्नु हेळुवदक्के प्रेरितरागि हेळलारंभिसिदरु ॥ ५ ॥

१. सहस्रशीर्ष्णः श्रीकृष्णस्य चरणावुपधीयते यस्मिन् श्रीकृष्णः प्रीत्या यस्योत्संगे चरणौ प्रसारयतीत्यर्थ इति वा ॥— ( या. )

मैत्रेयरु हेळुवरु— विदुरनु संभाषणमाडिद अनंतर एरडने कथाप्रसंगवे मध्यदल्लि इल्लवु एंदु हेळुवरु— यावाग्ये तन्न हेंडतियिंद सहितनागि स्वायंभुवमनुवु उत्पन्ननादनो, आग्ये अवनु कैजोडिसिगोंडु ब्रह्मदेवनन्नु नमस्कारिसि ईप्रकार माताडिदनु. ई मनुवु कैजोडिसिद्दु दांभिकवल्लवेंदु तिळिसुवदक्के प्रणत, एंदु उक्तवायितु ॥ ६ ॥—

**त्वमेकः सर्वभूतानां जन्मकृद्वृत्तिदः पिता ॥ अथापि नः प्रजानां ते शुश्रूषा केन वा भवेत् ॥ ७ ॥ तद्विधेहि नमस्तुभ्यं कर्मस्विंज्यात्मशक्तिषु ॥ यत्कृत्वेह यशो विष्वगमुत्र च भवेद्गतिः ॥ ८ ॥ ॥ ॥**

ननु किमियं भाषा गुह्याद्यन्यतमा सांकेतिकी वा न द्वितीयः अप्रस्तुतत्वादसंभवाच्च प्रथमाच समाधिरेवेति भावेनाह त्वमेकइति अथ जन्मकृत्त्वाद्वृत्तिदत्वा-त्पितृत्वाच्च पोष्यैः शुश्रूषा कर्तव्या सा केन केन कर्मणास्यादित्यर्थः अपिशब्देन कार्याकरणे पातकं सूचयति ॥ ७ ॥ तदिति तत्कर्म इतोपि भगवच्छुश्रूषा कर्तव्येत्याह कर्मस्विति । आत्मशक्तिषु स्वकेषु नित्यनैमित्तिकेषु कर्मस्विज्या पूजा तत्कर्म विशिनष्टि यत्कृत्वेति इह लोके सर्वत्र यशोऽमुत्र परलोके गतिः-सुखप्राप्तिलक्षणा स्यात्तादृशमितिशेषः ॥ ८ ॥

ओळ्ळेदु, ई स्वायंभुवमनुवु ब्रह्मदेवनन्नु कुरितु भाषणमाडिद भाषेयु गुह्यभाषा, समाधिभाषा, अर्थभाषा एंब मूरुभाषेगळल्लि यावदादरोंदादद्दो अथवा सांकेतिकवो सांकेतिकवंतू अल्ल. अदु प्रकृतक्के अनुपयुक्तवादद्दु मोदलिंदिरोळगे, समाधिभाषेये एंब अभिप्रायदिंद हेळुवरु— स्वायंभुवनु अंदद्दु. हे तंदेये, नीनोब्बने सकलप्राणिगळन्नु हुट्टिसिदवनु मत्तू उदरपोषणक्के वृत्तियन्नु कोट्टवनु पोषणमाडतक्कवनु ई मूरुप्रकारदिंदलू पितृत्ववु निन्नल्लिरुवदु आदरू निन्निंद रक्षितराद नावु निन्न सेवेयन्नु माडतक्कद्दु; आदकारण नम्मिंद आ सेवेयु यातरिंद घटनेयादीतु, इल्लिय ' अपि ' शब्दवु; यारिंद रक्षितरागुवरो अवर सेवेयन्नु माडदिद्दरे पातकवु बरुवदेंदु सूचिसुवदु ॥ ७ ॥ निम्म सेवेयादरू भगवत्सेवेये एंदु हेळुवनु— नम्म शक्त्यनुसारवागि माडतक्क नित्य-नैमित्तिक कर्मगळल्लि यावदु मुख्यवाद भगवत्पूजेयु आ कर्मविशेषवु यावदु ? यावप्रकार भगवत्पूजेयन्नु माडुवदरिंद ई लोकदल्लि एल्लकडेयल्लियू यशःमू परलोकदल्लि सुखप्राप्तियागतक्क सद्गतियू दोरेयुवदो; अदन्नु नमगे अप्पणे माडु ॥ ८ ॥

**ब्रह्मोवाच ॥ प्रीतस्तुभ्यमहं तात स्वस्तिस्याद्वां क्षितीश्वर ॥ यन्निर्व्यलीकेन हृदा शाधि मेत्यात्मनार्पितं ॥ ९ ॥ एतावत्यात्मजैरेवं कार्या ह्यपचितिर्गुरौ ॥ शक्त्याऽप्रमत्तैर्गृह्येत शासनं गतमत्सरैः ॥ १० ॥ ॥ ॥**

१. इज्यात्मशक्तिषु इज्यारूपेषु भगवत्पूजारूपेषु स्वशक्तिविषयेषु च कर्मसु मध्ये मे शुश्रूषा केन येन कर्मणा भवेत् तद्विधेहि ॥— ( या. )

सच्छिष्ये सद्गुरुणा एवमनुग्रहः कर्तव्य इति भावं ध्वनयन् ब्रह्मा वक्ति प्रीतइति तद्यस्माच्छाधि शिक्षस्व आत्मना परप्रेरणामंतरेण ॥ ९ ॥ इयमेका गुरोः क्रियमाणा पूजेत्याह एतावतीति अपचितिः पूजा एतावतीति केयमित्यत्राह शक्त्येति अथ गुरुनियोगानंतरमेव शक्त्या शासनमाज्ञा गृह्येतेति यत्सेयमित्यर्थः ॥ १० ॥

योग्यशिष्यनल्लि सद्गुरुगळु इदे प्रकार अनुग्रह माडतक्कद्देंब अभिप्रायवन्नु प्रकटमाडुत्त ब्रह्मदेवनु हेळुवनु— ' हेतात ' एलो, अप्पा स्वायंभुवराजने, एरडनेदवर प्रेरणेइल्लदे निन्नष्टक्के नीने निर्वचनेय मनस्सिनिंद, नन्नन्नु आज्ञामाडु एंदु बेडिकोंडियो; अदरिंद नानु निन्नमेले प्रीतनागिरुवेनु. निम्मिब्बरिगू ( दंपतिगळिगे ) क्षेमविरलि. ॥ ९ ॥ इदु ओंद, गुरुगळिगे माडतक्क पूजेयु एंदु हेळुवनु— मक्कळादवरु तंदेय पूजेयन्नु इष्टे इदे प्रकारवे माडतक्कद्दु, यावदेंदरे— तंदेय अप्पणेयादनंतरवे तम्म शक्त्यनुसारवागि मदोन्मत्तगगदे मात्सर्यवन्नुबिट्टु आ हिरियर शासनवन्नु शिरसावहिसि नडिस ( जरिगिस ) बेकु ॥ १० ॥

**सत्वमस्यामपत्यानि सदृशान्यात्मनो गुणैः ॥ उत्पाद्य शाधि धर्मेण गां यज्ञैः पुरुषं यज ॥ ११ ॥ परं शुश्रूषणं मह्यं स्यात्प्रजारक्षया नृप ॥ भगवांस्ते प्रजाभर्तुर्हृषिकेशोऽनुतुष्यति ॥ १२ ॥ येषां न तुष्टो भगवान् यज्ञलिंगो जनार्दनः ॥ तेषां श्रमोप्यपार्थाय यदात्मा नादृतः स्वयं ॥ १३ ॥ ॥ ॥ ॥**

आज्ञामाह सत्वमिति अस्यां शतरूपायां ॥ ११ ॥ केनवेत्यस्य प्रश्नं परिहरति परमिति । अनेनाज्ञाग्रहणमेकमितरत्प्रजापालनमितिद्वयं शुश्रूषणमुक्तं भवति पुरुषस्य पुरुषार्थाय श्रीनारायणप्रसाद एव ततः प्रजापालनेन किं तत्राह भगवानिति ॥ १२ ॥ बाधकमाह येषामिति यज्ञो लिंगं ज्ञापको यस्य स तथा श्रमः इदं न श्रेयःसाधनं इत्यनुष्ठानाद्यायासः आत्मा परमात्मा ॥ १३ ॥

प्रकृतक्के ब्रह्मदेवनु तन्न आज्ञेयन्नु हेळुवनु— आ नीनु ( याव नीनु नन्नन्नु आज्ञामाडेंदु केळिदियो आ नीनु ) ई शतरूपाएंब हेंडतियल्लि, निन्न गुणगळिगे समानगुणगळुळ्ळ मक्कळन्नु, उत्पादनमाडि धर्मदिंद भूमियन्नु शासनमाडु; मत्तू अनेक अश्वमेधादियागगळिंद यज्ञपुरुषनन्नु पूजिसु. ॥ ११ ॥ भगवत्पूजेयन्नु यावप्रकार माडबेकेंदु मनुविन प्रश्नक्के उत्तरवन्नु हेळुवनु— ई नानु ( ब्रह्मनु ) हेळिद्दन्नु केळुवदरिंद नन्न आज्ञापालने माडिद्दांदु, निन्न मक्कळु होर्तु इतर प्रजापालनेयोंदु, एरडू नन्न सेवेये- ' हे नृप ' नीनु प्रजापालने माडुवदरिंद एल्ल प्रकारदिंदलू नन्न सेवेमाडिदंतायितु. पुरुषनिगे मोक्षक्के श्रीनारायणन प्रसादवे मुख्यवादद्दु अंदमेले ई प्रजापालनेयिंदेनु प्रयोजनवेंदरे मोक्षक्के याव श्रीहरिय प्रसादवे मुख्यवो प्रजापालने माडतक्क निन्न मेले अदे श्रीहरियु निन्न इंद्रियगळिगे नियामकनागि हृदयदल्लिद्दु परमतुष्टनागुवनु. ॥ १२ ॥ इल्लदिद्दरे ( श्रीहरिय प्रीत्यर्थकर्ममाडदिद्दरे ) बाधकवन्नु हेळुवरु— यावन ( श्रीहरिय )

१. यज्ञप्रवर्तकदेहः ॥— ( या. )

लक्षणवन्नु यज्ञवु तोरिसुवदो, आ यज्ञलिंगनेनिसिगोंड जनार्दननु यारमेले तुष्टनागुवदिल्लवो आ जनरु तमगे श्रेयस्साधनवागलेंदु श्रमपट्टद्दु ' अपार्थाय ' अपगतः अर्थः यस्मिन मः । मोक्षके साधकवागुवदिल्लवु ओळ्ळेदु आ जनार्दननु एंथवरमेले तुष्टनागुवदिल्लवेंदरे— अंतर्नियामकनाद स्वतः श्रीहरियु यारिंद अनादर माडल्पडुवनो अवरमेले ह्यागे तुष्टनादानु. ॥ १३ ॥

मनुरुवाच ॥ आदेशेहं भगवतो वर्तयाम्यरिसूदन ॥ स्थानं त्विहानुजानीहि प्रजानां मम च प्रभो ॥ १४ ॥ यदोकः सर्व सत्वानां मही मग्ना महांभसि ॥ अस्या उद्धरणे यत्नो देव देव्या विधीयतां ॥ १५ ॥ ॥ ॥

ब्रह्मणा प्रजापालनायोपदिष्टो मनुस्तदाज्ञामादाय ब्रह्माणं प्रार्थयते आदेशेहमिति कामाद्यरिसूदन अनुजानीहि अनुज्ञापयादिशेत्यर्थः ॥ १४ ॥ भूम्याख्ये स्थाने स्थितिं विधाय प्रजापालनं कर्तव्यमित्याज्ञा तदाशंक्य परिहरति यदोकइति । सर्वसत्वानां पिपीलिकादिसर्वप्राणिनां यदोक आवासस्थानं सा मही महांभसि प्रलयजले मग्नाभूत् हे देव अस्याः देव्याः भूमेरुद्धरणे यत्नः क्रियतामित्यन्वयः ॥ १५ ॥

ब्रह्मदेवनिंद प्रजापालनेगागि हेळिसिगोळ्ळल्पट्ट मनुवु, आ आज्ञेयन्नु शिरसावहिसि, ब्रह्मदेवनन्नु प्रार्थिसुवनु— मनुवु अंदद्दु– कामक्रोधमोदलाद शत्रुगळन्नु नाशमाडिद चतुर्मुखने पूज्यस्वरूपराद तम्म अप्पणेमेरेगे नानु नडेयुवेनु आदरे ( तम्म अप्पणे पालिसुवदक्कागियॆ, ) ननगू प्रजरगळिगू वासिसुवदक्के स्थळवन्नु अप्पणेमाडबेकु ( तोरिसबेकु. ) ॥ १४ ॥ भूमियेंब स्थळद्लि वासमाडिकोंडु प्रजापालने माडेंदु तम्म आज्ञेयादीतु एंदु ऊहमाडिकोंडु अदक्के मार्गविल्लेंदु हेळुवनु— इरुवेगळे मोदलाद सकलप्राणिगळिगे इरुवदक्के महास्थानवाद याव भूमियु अदेयो अदु प्रलयोदकदल्लि मुळुगिरुवदु आद कारण ' हे देव ' आ भूमियन्नु मेलक्के यत्तुव प्रयत्नमाडबेकु. ॥ १५ ॥

मैत्रेयउवाच ॥ परमेष्ठी त्वपांमध्ये तथा सन्नामवेक्ष्य गां ॥ कथमेनां समुन्नेष्य इति दध्यौ धिया चिरं ॥ १६ ॥ पीतं मया जलं पूर्वं पृथिवी च निवेशिता ॥ प्रजा देवासुरपितृमनुष्याः पशुपक्षिणः ॥ १७ ॥ सरीसृपा नगा नागा भूतान्युच्चावचानि च ॥ तथापि किमिदं साद्य प्लाव्यते पुनरंबुभिः ॥ १८ ॥ सृजतो मे क्षितिर्वार्भिः प्लाव्यमाना लयं गता ॥ अथात्र किमनुष्ठेयमस्माभिः सर्गयोजितैः ॥ १९ ॥ ॥ ॥ ॥

पूर्वमेव भूमेरभावं जानन्नपि ब्रह्मा प्रार्थनापूर्वकं कृतमेवोपकृतं स्यादिति मन्वानो भूमेरुद्धारमालोचयतीत्याह परमेष्ठीति यथोन्नेतुमशक्या तथा सन्नां मग्नां ॥१६॥ मज्जने निमित्तमाह पीतामिति यावता पीतेन जलस्योद्रेकः शाम्यति तावत्सर्वमित्युच्यते ननु निःशेषत्वेन अन्यथा वार्भिः प्लाव्यमानेत्यसंगतं स्यात् निवेशिता निवेशनीकृता ॥ १७ ॥ १८ ॥ वार्भिर्जलैः प्लाव्यमाना चंचलीक्रियमाणा लयं गता मग्ना प्रजानां भारेणेति शेषः सृजतः सतः अत्रास्यामवस्थायां ॥ १९ ॥

मैत्रेयरु हेळुवरु— मोदलिगे भूमियिल्लवेंबदन्नु तिळिदाग्यू ब्रह्मदेवनु प्रार्थनेमाडिसिगोंडु माडिद केलसवु उपकारवागुवदु, एंदु भूमियन्नु मेलक्के यत्तुवदक्के आलोचने माडुवनेंदु हेळुवरु— ईप्रकार स्वायंभुवन वाक्यगळन्नु केळि ब्रह्मदेवनु मेलक्के एत्तुवदक्के अशक्यवागुवंते नीरिनल्लि मग्नवाद भूमियन्नुनोडि; ई भूमियन्नु ह्यागे सरियागि मेलक्के एत्तेनु एंदु तन्न बुद्धियिंद बहळवेळे योचनेमाडिदनु. ॥ १६ ॥ नानु हिंदक्के प्रलयोदकद थेरेगळ उक्केरुवदु शांतवागुवंते उदकवन्नु प्राशनमाडिदेनु मत्तू पृथिवियन्नादरू नीरमेले निल्लिसि; देवतिगळन्नू दैत्यरन्नू पितृगळन्नू मनुष्य, पशु, पक्षिगळन्नू हरदाडतक हावू चेळुमोदलादवुगळन्नू गिडगळन्नू संणदोड्ड एल्लतरद प्राणिगळन्नू सृष्टिमाडिदनु अष्टरल्लिये भूमियू होयिदाड हत्तितु आग्ये नानु एनिदु भूमियू मत्ते नीरिनिंद होयिदाडुवदो एंदु योचिसुत्तिद्देनु. नानु इन्नू प्रजगळन्नु सृष्टिमाडुत्तिरलू आ प्रजाभारदिंद होयिदाडुत्त नीरिनल्लि मुळुगितु. आदरे सृष्टियन्नु माडुवदक्के उद्युक्तराद नावु इन्नुमुंदे ई विषयदल्लि एनु माडतक्कद्दु? ॥ १७ ॥ १८ ॥ १९ ॥

यस्याहं हृदयादासं स ईशो विदधातु मे ॥ इत्यभिध्यायतो नासाविवरात्सहसानघ ॥ २० ॥ वराहतोको निरगादंगुष्ठपरिमाणतः ॥ तस्याभिपश्यतः खस्थः क्षणेन किल भारत ॥ २१ ॥ गजमात्रः प्रववृधे तदद्भुतमभून्महत् ॥ मरीचिमुख्यैर्विप्रैश्चकुमारैर्मनुना सह ॥ २२ ॥ दृष्ट्वा तत्सौकरं रूपं तर्कयामास चित्रधा ॥ किमेतत्सौकरव्याजं सत्वं दिव्यमवस्थितं ॥ अहो बताश्चर्यमिदं नासाया मे विनिःसृतं ॥ २३ ॥ दृष्टोंगुष्ठशिरोमात्रः क्षणाद्गंडशिलोपमः ॥ अपिस्विद्भगवानेष यज्ञो मे खेदयन्मनः ॥ २४ ॥ ॥ ॥ ॥ ॥

इदमेवानुष्ठेयमित्याह यस्येति । सत्यसंकल्पस्य हरेर्भक्तत्वात् ब्रह्मापि सत्यसंकल्प इतीममर्थं ध्वनयन् हरेः प्रादुर्भावप्रकारमाह इतीति । नासाविवरान्नासाबिलात्सहसा सद्यो निरूपितत्वेन वराहतोको वराहशिशुः ॥ २० ॥ तस्य ब्रह्मणः खस्थः आकाशे स्थितः ॥ २१ ॥ कुमारैः सनकादिभिः ॥ २२ ॥ सौकरं सूकरस्य विद्यमानं तर्कयामास मीमांसितवान् मीमांसाप्रकारं वक्ति किमेतदिति अहो इत्यनेन निकटवर्तिनो मुनीनुन्मुखीकरोति बत खेदयन् ॥ २३ ॥ किंबहुनेदं महाश्चर्यं अंगुष्ठशिरोमात्रः अंगुष्ठाग्रपरिमाणः । " गलिताःस्थूलपाषाणा गंडशैलाइतिस्मृताः । " एष वराहः मे मनः खेदयन् यज्ञो भगवानपिस्वित् ॥ २४ ॥

एनु माडबेकेंदु योचने माडिद्दक्के ई मुंदे हेळतक्कदन्न माडबेकेंदु हेळुवरु— नानु याव श्रीमन्नारायणन उदरदिंद उत्पन्ननागिरुवेनो आ समर्थनाद नारायणने नन्न ई कार्यवन्नु माडिकोडलि

१. सूक्ष्मवराहः ॥— ( या. )

( एंदु ब्रह्मदेवनु प्रार्थनेमाडिदनु ) सत्यसंकल्पनाद श्रीहरिय भक्तनाद ब्रह्मदेवनादरू सत्यसंकल्पनेंब ई अर्थवन्नु प्रकटमाडुत्त श्रीहरिय अवतारवन्नु हेळुवरु-- ' हे अनघ ' एले दोषदूरनाद विदुरने ईप्रकार भक्तिपूर्वकवागि श्रीहरियन्नु ध्यानमाडुत्तिद्द ब्रह्मदेवन नासिकाविवर ( मूगिनहोळ्ळेयिंद ) दिंद अदे क्षणदल्लिये संण ( काडुहंदीमरियु ) वराहशिशुवु ओंदु अंगुष्ठदष्टु अळते गुळ्ळद्दागि होरगे बंदितु हे विदुरने आ ब्रह्मदेवनु अदन्नु नोडुवदरोळगे ओंदु क्षणदोळगे आ वराहवु आकाशदल्लिद्दु आनेयष्टु दोड्डदागि बेळेदितु अदु नोडुववरिगे बहळे अद्भुतवागि तोरितु. आग्गे ब्रह्मदेवनु मरीचियेमोदलाद ऋषिगळिंदलू सनकादिगळिंदलू स्वायंभुवनिंदलू सहितनागि; आ वराहरूपवन्नु नोडुत्त अनेक प्रकारवागि तर्कमाडलारंभिसिदनु. आ विचारमाडिद संगतियन्ने हेळुवरु-- अहो एंदु तन्न मक्कळकडिगे मुखवन्नु माडि येनिदु? नन्न नासिकापुटदिंद होरगे बंदद्दु इदु निमित्तमात्र वराहवु- क्रीडादिगुणसंपन्नवाद महासामर्थ्यवुळ्ळ प्राणियागि तोरुवदु- इदु बहळे आश्चर्यवु इदु मोदलु नन्न मूगिनिंद होरबीळुवाग्गे हेब्बेट्टिन तुदियष्टु तोरितु मुंदे ओंदुक्षणदोळगे ' गंडशिलोपमः ' दोड्डबंडिगल्लिनष्टायितु. सर्वज्ञशिखामणियाद नन्न मनस्सिगे, इदु याव वस्तुवेंदु विचारमाडुव विषयदल्लि इष्टु दुःख कोडबेकादरे ' अपिस्विद्भगवानेषः ' ई वराहवु अव्याहतषड्गुणैश्वर्यसंपन्ननाद श्रीमन्नारायणने यज्ञमूर्तियागि अवतरिसिरबहुदो? ' ॥ २० ॥ २१ ॥ ॥ २२ ॥ २३ ॥ २४ ॥

**इति मीमांसतस्तस्य ब्रह्मणः सह सूनुभिः ॥ भगवान् यज्ञपुरुषो जगर्जागेंद्रसन्निभः ॥ २५ ॥ ब्रह्माणं हर्षयामास हरिस्तांश्च द्विजोत्तमान् ॥ स्वगर्जितेन ककुभः प्रतिस्वनयता विभुः ॥ २६ ॥ निशम्य तद्घर्घरितं स्वखेदक्षयिष्णु मायामयसूकरस्य ॥ जनस्तपःसत्य निवासिनस्ते त्रिभिः पवित्रैर्मुनयोऽगृणन्स्म ॥ २७ ॥ ॥ ॥ ॥**

ब्रह्मणः सहसोत्पन्नाज्ञाननिरासप्रकारमाह इतीति । मीमांसतः मीमांसमानस्य सतः मरीच्यादिसूनुभिः ॥ २५ ॥ गर्जितफलमाह ब्रह्माणमिति प्रतिस्वनयता प्रतिध्वनिमतीः कुर्वता गर्जितेन ॥ २६ ॥ अयं हरिरिति ज्ञात्वा एतैः किमकारीति तत्राह निशम्येति मायामयसूकरस्येच्छामयवराहस्य स्वखेदक्षयिष्णु स्वखेदविनाशकरं घर्घरितं सूकराणां नादविशेषं श्रुत्वा जनादिलोकनिवासिनो मुनयस्त्रिभिः पवित्रैर्निर्दोषवेदैस्तं यज्ञपुरुषमगृणन्नित्यन्वयः स्मेत्यनेन गुणानुपूर्वकस्तुतिं सूचयति जनस्तपइति छंदोभंगभयाद्वेदानुकारित्वाद्वा विसर्गातं ॥ २७ ॥

ब्रह्मदेवनिगे तत्कालकेमात्र उत्पन्नवाद अज्ञाननाशवादसंगतियन्नु हेळुवरु- ईप्रकार ब्रह्मदेवनु तन्न मरीचिमोदलाद मक्कळिंद सहितनागि विचारमाडुत्तिरलु आ समयदल्लि महदैश्वर्यसंपन्ननाद यज्ञपुरुषनेनिसिगोंड आ वराहनु दोड्डपर्वतदंते रूपवन्नु धरिसि गर्जने माडिदनु ॥ २५ ॥ आगर्जनेयु ब्रह्मादिगळिगे भयोत्पादकवायितो एंदरे इल्लवु- सर्वत्र व्याप्तनाद श्रीहरियु, यद्यपि तन्न

१. गिरींद्रतुल्यः ।-( या. ) २. मायया माहत्म्या मखः पूर्णः सचासौ सूकरश्च ॥-- ( या. )



आ- गर्जनेयिंद याक्तू दिक्कुगळु प्रतिध्वनिमाडुत्तिद्दवु आदरू अंथ गर्जनेयिंद ब्रह्मदेवनन्नू आ मरीचिमोदलाद ऋषिगळन्नू हर्षबडिसिदनु. ॥ २६ ॥ आमेले इवनु श्रीहरिएंदु तिळिदु ई ब्रह्मादिगळु येनुमाडिदरेंदरे हेळुवरु- तम्म खेदवन्नु नाशमाडतक, तन्निच्छेयिंदले वराहरूपवन्नु धरिसिद श्रीहरिय वराहगळंते घर्घर एंब ध्वनियन्नु केळि, ब्रह्मादिगळु जनलोक, तपोलोक, सत्यलोक- गळल्लिद्द मुनिगळेल्लरू निर्दुष्टवाद मूरु वेदगळिंद आ वराहनन्नु होगळलारंभिसिदरु. ' स्म ' एंबदरिंद अवरु होगळिदु अवन गुणगळ आनुपूर्वकस्तुतिएंदु सूचितवागुवदु. ' जनस्तपःसत्य ' एंब मूलदल्लि विसर्गवुळ्ळप्रयोगवु छंदोभंगवागबारदेंतलू अथवा वेददल्लि हीगे प्रयोगविरुवदरिंद अदरंते ई प्रयोगवु. ॥ २७ ॥

**तेषां सतां वेदवितानमूर्तिर्ब्रह्मावधार्यात्मगुणानुवादं ॥ ननर्द भूयो विबुधोदयाय गजेंद्रलीलो जलमाविवेश ॥ २८ ॥**

स्तुतिस्तत्प्रसादजननी समभूदितिभावेनाह तेषामिति । वेदानां वितानेन विस्तारेण प्रतिपादिता मूर्तिर्यस्य स तथा यद्वा वेदएव वितानमुल्लोचमुपरिपतद्रवकरनिवारणवस्त्रं यस्याः सा वेदवितानाता तादृशी मूर्तिर्यस्य स तथा यज्ञवितानमूर्तिरिति पाठे यज्ञविस्तारेषु गृहीतमूर्तिरित्यर्थः । आत्मनो ज्ञानानंदादिगुणानामनुवादो यस्मिंस्तत्तथा ब्रह्मलक्षणं वेदमवधार्य ननर्द ननाद भूयइत्युभयत्र संबध्यते प्रलयजलं ॥ २८ ॥

इवरु माडिद स्तोत्रवु आ परमात्मन प्रसादवन्नुंटुमाडतक्कद्दायितेंदु हेळुवरु --वेदगळ विस्तारदिंद होगळिसिगोळ्ळुव स्वरूपवुळ्ळ अथवा वेदवु यावातनगे धूळि मत्तु होरगिन कस मोदलाद्दु तगलदंते हाकुव वस्त्रदंते इरुवदो आ वराहनु, तन्न आनंदादिगुणगळन्नु अनुवादमाडतक्क वेदवन्नु आ उत्तमराद ऋषिगळ मुखदिंद केळि पुनः गर्जनेमाडिदनु पुनःपुनवागि देवतिगळिगे क्षेमवागुवदक्के श्रेष्ठवाद आनेयंते आडुत्त आ भयंकरवाद नीरिनल्लि प्रवेशमाडिदनु. ॥ २८ ॥

**उत्क्षिप्तवालः खचरः कठोरसटा विधुन्वन् खररोमशत्वक् ॥ खुराहताभ्रः सितदंष्ट्र ईक्षाज्योतिर्बभासे भगवान्महीध्रः ॥ २९ ॥**

तत्तद्योनिजानां तत्तत्क्रियायां तत्तद्भावोऽनिवार्य इति जलप्रवेशे तद्भावं वक्ति उत्क्षिप्तेति स भगवान्महीध्रः नारायणाख्यः पर्वतः कं प्रलयजलमाविशदित्यन्वयः । तं विशिनष्टि उत्क्षिप्तवालः उद्धृतपुच्छः अन्यत्रोन्नतकपोलः " वालंतुकपिलंवज्रं ह्रीबेरंदीर्घरोमकमि " त्यभिधानात् । ह्रीबेरंवा खे आकाशे चरतीति खचरः उभयत्र समानं कठोराः परिदृढाः सटाः बहलकेसरान् धुन्वन् कंपयन् अन्यत्र सटा लताविशेषाः खराः परुषाः रोमशा रोमवती त्वग्यस्य स तथोक्तः अन्यत्र रोमशः पिचुमंदः खरा पिचुमंदस्य त्वग्यस्मिन् स तथा खुरैराहतमभ्रं येनासौ खुराहताभ्रः संताडितमेघः अन्यत्र खुरैः शृंगैः सितशृंगः धवलदंष्ट्रः अन्यत्र स्पष्टं ईक्षायां नेत्रस्य ज्योतिस्तारा कनीनिका तया विभासो विभासनं दीप्तिर्यस्य स तथोक्तः यद्वा दर्शनाख्याग्निज्वालया शोभमानः ॥ २९ ॥

१. वेदैर्वितन्यते विस्तृतयोच्यतइति वेदवितानाना तथाविधा मूर्तिर्यस्य तत्तथा ॥- ( या. )

आया योनिगळल्लि उत्पन्नवाद प्राणिगाळिगे आयाजातिगेतक्क केलसगळन्नु माडुवाग्गे आ कार्यगळिगे योग्यस्वभावु , यारिंदू बिडिसलोशवल्लवु एंदु वराहरूपियाद हरियु तन्न कार्यक्के तक्कभावतोरिसुवनेंदु हेळुवरु— ( आ वराहन प्रलयोदकप्रवेशमाडुव रूपवु ह्यागित्तेंदरे ) 'भगवान्महीध्रः' वराहरूपियाद परमात्मनेंब पर्वतवु, आ उदकवन्नु प्रवेशमाडितु अदन्नु वर्णिसुवरु— 'उत्क्षिप्तवालः' ई वराहवु पुच्छवन्नु मेलक्के एत्तित्तु पर्वतदल्लि कोडगल्लुगळु मेलक्के एद्दु निंतिद्दवु अथवा बालद केरगळु मेलक्के एद्दुनिंतिद्दवु 'खचरः' आकाशदल्लि संचरिसुतित्तु. ई अर्थवु पर्वतक्कू वराहक्कू समवे. 'कठोरसटाविधुन्वन्' वराहक्के बहळ दप्पाद उद्दागिद्द कूदलुगळु गद्दरिंद कुत्तिगेयवरेगे इद्दवु अवगळन्नु अगलाडिसुववनागि, पर्वतवु घट्टियाद उद्दागिद्द लतागळन्नु अल्लाडिसुवंते तोरुव 'खररोमशत्वक्' वराहवु तीक्ष्णवाद कूदलुगळिंद युक्तवाद मैमेलिन चर्मवुळ्ळद्दु पर्वतवु तीक्ष्णवाद पिचुमंदवृक्षद त्वगटिवुळ्ळद्दु. 'खुराहताभ्रः' वराहवु तन्न खुरगळिंद मेघगळन्नु ताडनमाडुव, पर्वत— कोडगल्लुगळु मेघगळिगे ताकुतिद्दवु 'सितशृंगः' वराहवु शुभ्रवाद कारिदवडिय हल्लुगळुळ्ळद्दु पर्वतवु शुभ्रकोडुगल्लुगळुळ्ळद्दु 'ईक्षाज्योतिर्विभासः' वराहवु कटाक्षदिंद नोडुवाग्ये कण्णोळगिन करेगुड्डिय प्रकाशवुळ्ळद्दु, अथवा नोटवेंब अग्निज्वालादिंदले शोभिसुत्तिद्दु पर्वतवु—दावाग्नियप्रकाशवुळ्ळद्दु. ॥ २९ ॥

**घ्राणेन पृथ्व्याः पदवीं विजिघ्रन् क्रोडापदेशः स्वयमध्वरांगः ॥ करालदंष्ट्रोऽप्यकरालदृग्भ्यामुद्वीक्ष्य विप्रान् गृणतोविशत्कं ॥ ३० ॥ स वज्रकूटांगनिपातवेगविशीर्णकुक्षिस्तनयन्नुदन्वान् ॥ उत्सृष्टदीर्घोर्मिभुजैरिवार्तश्चुक्रोश यज्ञेश्वर पाहि मेति ॥ ३१ ॥**

**घ्राणेनेंद्रियेण विजिघ्रन् घ्राणो (गंधो)पादानं कुर्वन् क्रोडापदेशः देवकार्यनिमित्तेन वराहः नतु साक्षाद्वराहः किंतु स्वयं स्वतोऽध्वरांगः यज्ञमूर्तिः श्रीनारायणः पूर्वत्र पर्वतोपमत्वेन दंष्ट्रोक्तिरत्राशांतत्वद्योतनायेति न पुनरुक्तिरध्वरस्य यज्ञस्य अंगानि कुशादीनि साधनानि यस्मिन् सोऽध्वरांग इति वा । " अपदेशो लक्ष णेस्यान्निमित्तव्याजयोरपी "- तियादवः ॥ ३० ॥ जलप्रवेशसमये समुद्रेण स्तुतिरेवाकारि नत्वाक्रोश इत्याशयेनाह सवज्रेति । स उदन्वान्समुद्रो हे यज्ञेश्वर मां पाहीति भावेन चुक्रोशाजुहावोन्ननादेत्यर्थः । रक्षाप्रार्थनायां कः क्लेशः प्राप्त इत्यत उक्तं वज्रकूटवदयोघनवद्वरिम्णोपेतस्यांगस्य निपातवेगेन विशीर्णोतिनिष्पिष्टः कुक्षिर्यस्य स तथा अतएवोदरवेदनया स्तनयन् शब्दं कुर्वन् आर्तइव उत्सृष्टा ऊर्ध्वंगता अतएव दीर्घा ऊर्मयएव करास्तैः उदरादिवेदनार्तः पुरुषो यथा शिरसि करं निधाय आक्रोशति तथेति लौकिकार्थः अध्यात्मस्तु स्तुतिरेव कृतेत्यर्थः ॥ ३१ ॥**

आ मयंकर उदकदल्लि पृथ्वियु एल्लि इरुवदेंदु हुडुकुवदक्के नासिकादिंद पृथ्विय गंधवन्नु मूसिनोडुत्त, देवकार्यनिमित्तदिंदले वराहरूपवन्नु धरिसिदवनु साक्षाद्वराहनल्ल मत्तु 'स्वयं' स्वतः यज्ञमूर्तियाद नारायणनु भयंकरवाद कारि हल्लुगळुळ्ळवनादाग्यू अभयंकर ( सौम्य ) वाद नेत्रगळिंद ( तन्नन्नु ) स्तोत्रमाडतक्क मरीचिऋषिये मोदलाद ब्राह्मणरन्नु नोडि उदकवन्नु प्रवेशमाडिदनु.

१. स्थितिं मार्गंवा विजिघ्रन् विमार्गयन् तज्जात्यनुकरणमेतत् ॥— ( **या.** ) २. यज्ञोपयुक्तकुशादिजनकांगः ॥— ( **या.** ) ३. उदरविदारणार्तः पुमान् यथोर्ध्वबाहुःसन् विदारकं प्रति मां याहीति आक्रोशति तथायमिति ज्ञातव्यं ॥= ( **या.** )

हिंदिनश्लोकदल्लि पर्वतदृष्टांतदल्लि भयंकर कारिगळ वर्णनेयु इद्दाग्यू इवू भयंकरत्ववु शांतवागिल्लवेंदु तोरिसुवदक्के इल्लि हल्लुगळ वर्णनेयं होर्तु पुनरुक्तियल्लवु. 'अध्वरांगः' यज्ञद साहित्यगळाद दर्भेमोदलादवु यावन ( वराहन ) शरीरदिंद उत्पन्नवागिरुववो अवनु. 'क्रोडापदेशः' अपदेश एंब शब्दवु लक्षणदल्लियू निमित्तदल्लियू व्याजदल्लियु प्रयोगिसल्पडुववु एंदु यादवकोशवु. ॥ ३० ॥ आ वराहवु समुद्रद नीरिनल्लि प्रवेशमाडुवाग्ये समुद्रनाथनु इवनन्नु स्तोत्रमाडिदने होर्तु आक्रोशमाडलिल्लवेंब अभिप्रायदिंद हेळुवरु— आ समयदल्लि समुद्रनाथनु हे यज्ञेश्वर, नन्नन्नु संरक्षणेमाडु एंदु दोड्ड ध्वनियिंद अवनन्नु करेयुत्त गर्जनमाडिदनु. ई समुद्रवु रक्षिसेंदु प्रार्थिसवेकादरे इवनिगे एनु क्लेशवु बंदोदागित्तु? एंदरे— वज्रसारदंते अथवा कब्बिणवन्नु कडियुवदक्के माडिद ओंदतरद अतिघट्टियागि भारवाद आयुधक्के अयोघनवे ( चमटिगिए ) नुवरु अदरंते बहुभारवाद इवन ( वराहन ) शरीरवु बीळुव वेगदिंद, छिन्नभिन्नवाद कुक्षिप्रदेशवुळ्ळवनागि समुद्रनाथनु उदरवेदनादिंद ओदरुत्त मेले बरुव थेरेगळेंब करगळिंद 'आर्तइव' उदरवेदनवे मोदलाद वेदनागळिंद आर्तनाद पुरुषनु ह्यागे शिरदल्लि करवनिट्टुगोंडु रोगपरिहारकनन्नु कुरितु नन्नसमीपक्के बा एंदु ओदरुत्तानो हागे श्रीहरियन्नु आव्हानमाडिदनेंदु लौकिकार्थवु वस्तुतः आ समुद्रनिंद श्रीनारायणन स्तोत्रवे माडल्पट्टितेंदर्थवु. ॥ ३१ ॥

**खुरैः क्षुरप्रैर्दरयंस्तदाप उत्पारवारं त्रिवरू रसायां ॥ ददर्श गां तत्रसुषुप्सुरग्रे यां जीवधानीं स्वयमभ्यधत्त ॥ ३२ ॥**

**खरतरतरणिकिरणपरितप्तलोकवराहवत्नहरेर्जलप्रवेशः किंतु यद्दर्शनार्थं प्रावेशि तद्दर्शनमनेन कृतमित्याह खुरैरिति । उत्पारवारमितिक्रियाविशेषणं पारे तीरांतरे स्थितं वारि जलं यथोद्गतं भवति तथा क्षुरप्रैः क्षुरसाधर्म्यं पूरयंतीति क्षुरवन्निशितैरित्यर्थःयदा स्वर्धचंद्रैः । " अर्धचंद्रः क्षुरप्रः स्यादि "- तियादवः । खुरैस्तस्य समुद्रस्यापो दरयन् भिंदन् त्रिभिर्वेदैर्व्रियत इति त्रिवरुः त्रिषु युगेषु अवतारं वृणोतीति वा गुरुशब्दवत्प्रक्रिया ढ्लोपेपूर्वस्य दीर्घोण इतिदीर्घः अग्रे सर्वं विलाप्य सुषुप्सुः निद्रां कर्तुकामः स हरिर्यां जीवधानीं सर्वप्राण्याधारभूतामभ्यधत्त जलस्योपरि निहितवान् तां गां तत्र रसायां पाताले ददर्शेत्यन्वयः । "वरुः सुमत्खेरवास्याद्वराहस्यचविस्तृते " त्यभिधानाद्वलित्रयांकितगलोवा पारं वृणोतीति पारवारः कर्मण्यणित्यणप्रत्ययः पक्ष्यादिप्राणिजातं तद्यथोद्गतं स्यात्तथेति वा ॥ ३२ ॥**

लोकदल्लि काडिनोळगिद्द वराहवु ( हंदियु ) अतिप्रखरवाद सूर्यन किरणगळिंद तप्तवागि ह्यागे नीरिनल्लि बीळुवदो हागे श्रीहरिय जलप्रवेशवल्ल; मत्तु याववस्तुविनसलुवागि नीरिनल्लि प्रवेशमाडिद्दनो अदन्नु कंडनेंदु हेळुवरु— ( खुरैः एंब श्लोकदिंद ) तीरांतरदल्लि स्थितवाद पक्षिमोदलाद प्राणिसमूहवु अथवा समुद्रोदकवु मेले ह्यागे होदीतो हागे तीक्ष्णवाद खड्गदंते हदनाद अर्धचंद्राकृतियागिद्द खुरगळिंद आ समुद्रद उदकवन्नु शीळुत्त 'त्रिवरुः' मूरुवेदगळिंद विस्तारमाडल्पट्ट गुणगळू मत्तु कर्मगळुळ्ळ अथवा मूरु युगगळल्लि अवतारमाडुववनाद—ई शब्दवु गुरुशब्ददंते नडेयुवदु. 'त्रिवरूरसायां' एंबल्लि रकारद हिंदे विसर्गवु बंदरे आ विसर्गवु लोपवागि हिंदिन अक्षरक्के दीर्घवरुवदु. सृष्टिसमीपदकालदल्लि ( प्रलयकालदल्लि ) सृष्टवाद जगत्तन्नु नाशमाडि प्रलयोदकदल्लि मलगबेकेंदु तानु इच्छिसिदाग्ये एल्लप्राणिगळिगे आधारळागिद्द याव भूमियन्नु नीरमेले इट्टिद्दनो आ भूमियन्नु पातालदल्लि श्रीहरियु कंडनु. वराहद उत्कृष्टवागि विशालवाद

कृत्तिगेयमेलिन रेखाके ' वरः ' एन्नुवरु आद्दरिंद ई वराहन कृत्तिगेयमेले मूरु रेखागळिद्दवेंदु अर्थवु ' पारवारः ' पारगतियन्नु अपेक्षिसतक्क पक्षिमोदलादवु ह्यागे मेलक्के हारुववो हागे इवनु केळगादरू नीरिन पारु गंडवु एंत एरडने अर्थवु. ॥ ३२ ॥

**स्वदंष्ट्रयोद्धृत्य महीं विलग्नां स उत्थितः संरुरुहे रसायाः ॥ तत्रापि दैत्यं गदया पतंतं सुनाभसंदीपिततीव्रमन्युः ॥ ३३ ॥**
**जघान रुंधानमसह्यविक्रमः सलीलयेभं मृगराडिवांभसि ॥ तद्रक्तपंकांकिततुंडगंडो यथा गजेंद्रो जगतीं विभिंदन् ॥ ३४ ॥**

भगवता महीं दृष्ट्वा किमकारीति तत्राह । स्वदंष्ट्रयेति विलग्नां रसातले बंदीगृहवत् स्थितां महीं स्वदंष्ट्रयोद्धृत्य रसाया उत्थितः स आदिवराहः संरुरुहे उपर्यारुरोह रसालयैरसुरैः स्वभूतभूम्युन्नयनसमये निद्रितं किं तत्राह तत्रापीति सहरिस्तत्र भूम्युद्धरणसमयेपि स्वं रुंधानं गदया पतंतं दैत्यमादिहिरण्याक्षं दंष्ट्रया जघानेत्यन्वयः कीदृशः सुनाभवच्चक्रवत् संदीपिततीव्रमन्युः प्रज्वलितात्युग्रकोपः अतएवासह्यविक्रमः मृगराट् सिंहः इभं गजं यथा तथा अंभसीत्यनेन रसातलात् किंचिदूर्ध्वमागत्येति सूचयति तस्य दीप्तिविशेषमाह तद्रक्तेति यथा जगतीं तटभूमिं विभिंदन् तिर्यद्दंतप्रहारेण प्रोल्लिखन् तत्पंकांकिततुंडगंडो भवति तथा दंष्ट्रया हिरण्याक्षं हत्वा तस्य रक्तपंकेनांकिततुंडगंड उच्चकाश इति शेषः अनेन विशेषणेन हिरण्याक्षौ द्वौ तत्रैको दंष्ट्रया हत इतरस्त्वन्येनायुधेनेति ज्ञायते। " ब्रह्मजस्तुहिरण्याक्षः प्रथमं दंष्ट्रया हतः । सएव पार्षदाविष्टो द्वितीयः कर्णताडनात् । पूर्वं लयोदके मग्नां द्वितीयंतेन मज्जितां । भुवमुद्धरतेवासौ हरिणाक्रोडमूर्तिने" त्यवगंतव्यः । अत्रैवोत्तरग्रंथे विदुरप्रश्नं परिजिहीर्षुणा हरिणा हिरण्याक्ष एकएव व्यत्यस्योच्यते तद्दुष्टमोहनार्थमविविच्य कथनं देवानां प्रियार्थं चेति । तदुक्तं " व्यत्यासेनापिचोच्यंते अविवेकेनकुत्रचित् । दुष्टानामोहनार्थाय तत्रतत्रकथाः क्वचिद् "- ति । अविवेकोनाम अविविच्यकथनं न वक्तुर्हरेरज्ञानं । " सर्वज्ञस्यकुतोज्ञानं व्यासस्योदारकर्मण " इतिवचनात् ॥ ३३ ॥ ३४ ॥

भूमियन्नु कंडु श्रीहरियिंद एनु माडल्पट्टितेंदरे हेळुवरु— रसातलदल्लि शरेमनियल्लिद्दंते इद्द भूमियन्नु ई वराहनु तन्न कोरेयिंद तक्कोंडु रसातलद्देशेयिंद मेले हत्तिदनु. आ रसातल वासिगळाद असुररु तम्मदागिद्द भूमियन्नु इवनु वैय्युवाग्गे निद्रेमाडतिद्दरेनु? एंदरे हेळुवरु— आ श्रीहरियु तानु आ रसातलदिंद भूमियन्नु मेलक्के एत्तुवाग्गे तनगे प्रतिबंधकमाडुवदक्के बंदु गदेयन्नु कैयल्लि हिडिदुकोंडु तन्नमेले हारुत्तिद्द आदिदैत्यनाद हिरण्याक्षनन्नु तन्न कोरेयिंद कोंदनु ह्यागे कोंदनु एंदरे चक्रदंते अत्यंतवागि उरियुत्तिरुव उग्रकोपवुळ्ळवनागि, आद्दरिंदले

१. सुनाभस्य सुदर्शनस्य संदीपिनः प्रज्वलितः तीव्रो मन्युः येन भगवता सुदर्शनमुपेक्ष्य स्वदंष्ट्रया दैत्यहनने कृतेसति ममात्र किंकृत्यमिति सुदर्शनस्य तस्मिन् समये कोप उत्पादित इति भावः ( या. )



एरडनेदवरिंद तडियलशक्यवाद पराक्रमयुळ्ळवनागि, सिंहवु आनेयन्नु ह्यागे कोल्लुवदो हागे कोंदनु. ' अंभसि ' नीरिनल्लि कोंदनु एंदन्नुवदरिंद आ कोल्लुवाग्गे रसातल बिट्टु स्वल्पु मेलक्के बंदिद्दनेंदु तोरुववु आ दैत्यनन्नु कोंदाग्गे ई श्रीभूवराहनु ह्यागे प्रकाशमंतनागिद्दनेंदरे— केंपु, हळदि, मोदलाद अनेकतरद मण्णुळ्ळ दोड्डमरडिय ( एत्तरवादभूभागव ) न्नु, मदोन्मत्तवाद आनेयु तन्न सोट्टाद दंतगळ होडतदिंद शीळि अदक्के गेरेकोरदु आ भूमिय केंपुवर्णद केसरु तन्न एरडू गल्लगळिगे हत्तिदाग्गे ह्यागे तोरुवदो? अदरंते ई वराहनादरू हिरण्याक्षनन्नु दंष्ट्रदिंद होडेदुकोंडु अवन रक्तवेंब केसरु, एरडू कपोलप्रदेशक्के हत्तिद्दरिंद अत्यंतप्रकाशमंतनादनु, ई विशेषण कोट्टु हेळुवदरिंद हिरण्याक्षरु इब्बरु अवरल्लि ओब्बनु वराहन कोरेयिंद हतनादनु मत्तोब्बनु एरडनेसारे आयुधदिंद हतनादनेंदु तिळियुवदु. इदक्के प्रमाणवु–' ब्रह्मदेवनिंद उत्पन्ननाद हिरण्याक्षनु मोदलु दंष्ट्रदिंद हतनादनु अदे हिरण्याक्षने श्रीहरिय द्वारपालकनल्लि प्रविष्टनागि एरडने सारे किवियि( कर्ण )-- ताडनदिंद हतनादनु. मोदलनेसारे प्रलयोदकदल्लि भूमियु मुळुगित्तु; एरडनेसारे दैत्यनिंदले मुळुगिसल्पट्टित्तु, इंथ भूमियन्नु मेलक्के एत्तुवाग्गे श्रीहरियु दैत्यनन्नु कोंदनु ' इदे भागवतदल्लिये ई मुंदिन ग्रंथदल्लि विदुरन प्रश्नपरिहारकालक्के ओब्बने हिरण्याक्षनेंदु कथाव्यत्यासदिंद हेळल्पडुवदु. इब्बरु हिरण्याक्षरु बेरे एंदु कथा बेरेबेरे माडदे कूडिसि हेळिरुवदु दुष्टजनर मोहार्थवागियू मूर्खर प्रीतियागुवदक्कागियू हेळल्पट्टिरुवदु. इदक्के प्रमाणवु ' श्रीवेदव्यासरिंद केलवु स्थलदल्लि व्यत्यासदिंदादरू, क्वचित् स्थळदल्लि बेरे बेरे माडदे संकली करणदिंदलू दुष्टजनर मोहक्कागि अल्लल्लि कथेगळु हेळल्पट्टवे ' इल्लि ( प्रमाणदल्लि अविवेकवेंदरे बेरे बेरे हेळदे इरोणवेंदर्थवे होर्तु ग्रंथकर्तृगळाद वेदव्यासर अज्ञानदिंददल्लवु निर्दोषकार्यगळन्नु माडतक्क सर्वज्ञशिखामणिगळाद बादरायणदेवरिगे अज्ञानवेल्लि ? ॥ ३३ ॥ ३४ ॥

**तमालनीलं सितदंतकोट्या क्ष्मामुत्क्षिपंतं गजलीलयांग ॥ प्रज्ञाय बद्धाजलयोनुवाकैर्विरिंचमुख्या उपतस्थुरीशं ॥ ३५ ॥**

अयं हरिरेव न लोकवराह इति ज्ञापनाय विरिंचप्रमुखानां देवानामुपसत्तिविधिं वक्ति तमालेति । उत्क्षिपंतं उद्धरंतं अनुवाकैरियत्संख्याविशिष्टैर्वेदवाक्यैः ३५

ईतनु साक्षात् श्रीहरिये होर्तु लोकदल्लिद्द साधारण वराहवल्लवु, एंदु तिळिसुवदक्के ब्रह्मदेवने मोदलाद देवतिगळु इवनन्नु प्रार्थनेमाडिद संगतियन्नु हेळुवरु— ' हे अंग ' प्रीत्यास्पदनाद विदुरने तमालपुष्पदंते नीलवर्णवुळ्ळ वराहरूपियु मदोन्मत्तवाद आनेय आटदंते तन्न शुभ्रवाद दंतद तुदियिंद भूमियन्नु मेलक्के एत्तिकॆय्यतक्कदन्नु, ब्रह्मादिदेवतिगळु तिळिदु; कै जोडिसिगोंडु तम्मगळिगे स्वामियाद ई यज्ञेश्वरनन्नु केलवु वेदवाक्यगळिंद स्तोत्रमाडलारंभिसिदरु- ॥ ३५ ॥

**देवाऊचुः ॥ जितं जितं तेऽजित लोक ( यज्ञ ) भावन त्रयीतनुं स्वां परिधुन्वते नमः ॥ यद्रोमगर्तेषु निलिल्युरध्वयस्तस्मै नमः कारणसूकराय ते ॥ ३६ ॥ ॥ ॥ ॥ ॥ ॥**

१. भो अजित ते त्वया जितं जितमिति संभ्रमे द्विरुक्तिः ॥-- ( या. )

उपस्थाय किंकृतं तत्राह जितंजितमिति । त्रयीतनुं त्रिवेदप्रतिपाद्यां मूर्तिं पारिधुन्वते रोमजलत्यागाय कंपमानाय निलिल्युर्निलीनाः ते तुभ्यं॥ ३६ ॥

ब्रह्मादिदेवतिगळु स्तोत्रमाडुवरु— ' हे अजित ' यरडनेदवरिंद जैसलशक्यपराक्रमवुळ्ळ हरिये सकल्लोक सृष्टिमाडतक्क निनिंद सर्ववू जितवायितु. मंभ्रमदल्लि द्विरुक्तियु. मूरुवेदगळिंद मुख्यवागि प्रतिपाद्यवाद ई देहवन्नु दैत्यवधार्थवागि नीरिनल्लि मुळुगिसि ईग्ये आ रोमकूपदल्लि शेरिद नीरुहोगुवदक्के मै नडिगिसुत्तिरुव निनगे नमस्कारवु; यावानन रोमकूपगळल्लि याव्नू समुद्रगळु मुच्चिद्दवो आ नीनु ईग्ये निमित्तमात्रदिंदले वराहरूपवन्नु धरिसिदनिनगे नमस्कारविरलि ॥ ३६ ॥

**रूपं तवैतन्ननु दुष्कृतात्मनां दुर्दर्शनं देव यदध्वरात्मकं ॥ छंदांसि यस्य त्वचि बर्हिरोमस्वाज्यं दृशि त्वंघ्रिषु चातुर्होत्रं ॥ ३७ ॥**

अनेन विष्णुरयं न लोकवराहइत्यस्य किमायातमिति तत्राह रूपमिति दुष्कृतात्मनामिति विशेषणेन सुकृतात्मनां सुदर्शनमिति ध्वनितं अत इदमेवास्य परब्रह्मत्वे मानं सूचितं अध्वरात्मकं यज्ञसाधनप्रसूतिकारणं अनेनापि न केवलभूम्युद्धरणाय किंतु सकलयज्ञसाधनप्रसूतये इदं रूपमिति सूचितं यद्वा यज्ञाख्यपरमात्मरूपं । " यज्ञोविष्णुर्देवते - " तिश्रुतेः । अनेन ब्रह्मत्वं स्पष्टमुक्तं भवति । " अयमात्माब्रह्म - " तिच । अस्य यज्ञात्मकत्वं स्पष्टयति छंदांसीत्यादिना सप्तच्छंदांसीत्यादयो यस्य तव त्वगादिषु वर्तंते तुभ्यं नम इत्यन्वयः । बर्हिर्दर्भैः । दृशि चक्षुषि चतुर्भिर्होतृभिः क्रियमाणं कर्म चातुर्होत्रं ॥ ३७ ॥

इवर स्तोत्रदिंद इवनु ( विष्णुवु ) लौकिकवराहनल्लवेंबदक्केनु निदर्शनवायितेंदरे हेळुवरु— ' हे देव ' ई निन्न, यज्ञसाधनगळेल्ल हुट्टिसुवदक्के कारणवाद स्वरूपवु, पापिजनगळिगे नोडल शक्यवाद्दु पापिजनगळिगे अशक्यवेंदु हेळुवदरिंद पुण्यवंतरिगे नोडलिक्के सुलभवेंदु भेरीहोडदंतायितु आद कारण इदे चिन्हवे इवनु परब्रह्मनेंबदक्के प्रमाणवु एंदु सूचिसुवदु. मत्तू ' अध्वरात्मकं ' एंब विशेषणदिंद ई अवतारवु केवल भूमियन्नु मेलक्के तरुवदक्के एंदल्लवु सकल यज्ञसाहित्यगळन्नु हुट्टिसुवदक्के एंदु सूचितवागुवदु. ' यज्ञगळिगे यज्ञनामकनाद विष्णुवे देवतियु ' एंदु श्रुतियिद्दरिंद इदु यज्ञनामक परमात्मस्वरूपवु इदरिंदलू ई स्वरूपवु परब्रह्मात्मकवेंदु हेळल्पडुवदु मत्तू ई वराहस्वरूपवे यज्ञेश्वर रूपवेंबदन्नु स्पष्टवागि हेळुवरु-- याव ई वराहरूपद त्वगिंद्रियदल्लि, सप्त ७ छंदःसुगळु इरुववु. रोमगळल्लि दर्भगळिरुववु. नेत्रदल्लि होमके साधनवाद घृतवु इरुवदु. नाल्वरु ऋत्विजरिंद आगतक्क दर्शपौर्णिमास्य मोदलाद इष्टिगळु पादगळल्लिरुववु. ॥ ३७ ॥

**स्रुक्तुंड आसीत्स्रुव ईश नासयोरिडोदरे चमसः कर्णरंध्रे ॥ प्राशित्रमास्ये रसने ग्रहास्तु ते यच्चर्वणं ते भगवन्नग्निहोत्रं ॥ ३८ ॥**

इडा यज्ञपात्रं चमसः चतुष्कोणसन्निवेशो यज्ञपात्रं प्राशित्रं यज्ञपात्रं पुरोडाशादिर्वा द्वादशसोमग्रहाः रसने जिव्हाया क्रियायां च चर्वणं दंतैश्चर्वणं । " चर्वणंचूर्णनंदंतैरि- " ति यादवः ॥ ३८ ॥

' हे ईश ' निन्न ( तुंड= ) उद्दागिद्द वदनदिंद, होममाडतक्क अश्वत्थकाष्ठद दोड्ड सौटिनंतिद्दु कोनेगे नालिगेयंतिरुव ' स्रुक् ' एंब हेसुरुळ्ळ पात्रेयु उत्पन्नवायितु. ' स्रुक् एंबदु प्रधानाहुतियन्नु कोडतक्क पात्रेयु ) निन्न नासिकादिंद तीर्थद सौटिनंते दुंडगागि सण्णवदनविद्दु उद्दन सौटिनंतिरुवदु ' स्रुव ' एंब पात्रेयु उत्पन्नवायितु. ( स्रुव एंबदु प्रायश्चित्ताहुतियपात्रे ) निन्न उदरदल्लि इडा एंब पात्रेयु उद्दके डोणिय आकारवागिद्द कट्टिगेय पात्रेयु (अदरल्लि ऋत्विजरु तम्म तम्म भागद पुरोडाशवन्नु अभिमंत्रणेमाडि हंचिगोळ्ळुवरु–) किविय रंध्रदल्लि चमस एंब नाल्कुमूलेयुळ्ळ सण्णपात्रेयु मुखदल्लि प्राशित्रवेंब अवांतर पात्रेयु अथवा पुरोडाश ( अग्निगे प्रधानाहुतियन्नु कोडतक्क अक्की कुट्टि हिट्टुमाडि कलिसिद मुद्दियु ) मोदलादद्दु उत्पन्नवायितु. हन्नेरडु सोमग्रहगळु रसनेंद्रियदल्लि ( नालिगियल्लि ) उत्पन्नवादवु. ' हे भगवन् ' निन्न चर्वणवु= ( हल्लुगळिंद नवलोणवु ) अदरिंद अग्निहोत्रवु उत्पन्नवायितु. ॥ ३८ ॥

आत्मजन्म तव जननं दीक्षा व्रतसंग्रहः उपसदः उपसन्नामानो यज्ञविशेषाः उपसत्तिविशेषा वा यस्त्वं प्रायणीयोदयनीयदंष्ट्रः यस्य तव दंष्ट्रयोरुपक्रमावसानकर्मणी इष्टी प्रायणीयोदनीयसंज्ञे वर्तेते इति शेषः क्रतुः संकल्पः क्रतोरितिपाठे क्रतोः सत्यसंकल्पस्य सर्वक्रत्वाधारस्यवा तव शीर्षकं शिरः सभ्यावसथ्यौ अग्निचितयः सप्तक्रतवस्तवासवः प्राणा जन्मभूमयः चितय इतीष्टकाबंधनविशेषा वा ॥ ३९ ॥

**दीक्षात्मजन्मोपसदः शिरोयस्त्वं प्रायणीयोदयनीयदंष्ट्रः ॥ जिह्वा प्रवर्ग्यस्तव शीर्षणं क्रतुः सभ्यावसथ्याचितयोऽसवो हि ते ३९**

निन्न अवतारदिंदले दीक्षाव्रतग्रहणवु उत्पन्नवायितु. शिरस्सिनिंद उपसद एंब यज्ञविशेषवु उत्पन्नवायितु, निन्न दंष्ट्रागळिंद प्रायणीय उदयनीयगळेंब यज्ञदल्लि प्रारंभकालक्कू समाप्तिकालक्कू माडतक्क इष्टिगळु उत्पन्नवादवु. प्रवर्ग्य एंबदु, सोमादियागळल्लि माडतक्क अवांतर इष्टियु, निन्न नालिगेयिंद उत्पन्नवायितु. यज्ञद संकल्पवु निन्न शिरस्सिनिंद उत्पन्नवायितु. सभ्य, आवसथ्य, इवु यरडु महायज्ञद कर्मागगळु सोममोदलुमाडि पौंड्रिकपर्यंतवाद सप्तक्रतुगळु निन्न प्राणदिंद उत्पन्नवादवु अंदरे इवुगळिगे नीने जन्मभूमियु अथवा ' चितयः '= इष्टिकाबंधन=चैनमोदलाद यागगळल्लि गरुडाकारवागि इट्टिगिगळन्नु कट्टुवरु अदक्के ' चितयः ' अंनुवरु— ॥ ३९ ॥

सोमो लता प्रातरादित्रीणि सवनानि अवस्थितिर्निश्चलत्वेन गतिनिवर्तनं संस्थाविभेदा अग्निष्टोमादयः सप्त । "अग्निष्टोमादयःसंस्थाभेदाः सप्तास्यंततव " इति यादवश्च । त्वगादिसप्त देहधातवः । अत्र श्लोकद्वयं सप्तसु प्रथमेति सूत्रात् प्रथमायाः सप्तमीत्वं युक्तं त्वचीत्यादिसप्तमीप्रयोगाच्च सर्वाणि सत्राणि बहुभिः संभूय कर्तव्यानि दीर्घकालीनानि यज्ञविशेषकर्माणि किंबहुनोक्तेनेत्युपसंहरति त्वंसर्वेति । ऐकाहिकद्व्याहिकादिसर्वयज्ञस्यापकेच्छावान् इष्टिबंधनः तव देहबंधने संहनने इष्टिः प्रतिपत्तिथ्यादिषु क्रियमाणकर्मविशेषो वर्तत इत्यर्थः ॥ ४० ॥

१. क्रतोः यज्ञरूपस्य ज्ञानरूपस्यवा ॥— ( या. )

तदुक्तं " हिरण्यकशिपुश्चापि भगवन्निंदयातम " इत्यादि न पुत्रमात्रात्पित्रादेः सद्गतिः किंतु निर्वैरादिगुणविशिष्टादितिभावेन तद्गुणमाह गायंतीति । भगवद्यशसो विनाभूतत्वात्सममित्युक्तं ॥ ४३ ॥ ४४ ॥

**कश्यपउवाच ॥ कृतशोकानुतापेन सद्यः प्रत्यवमर्शनात् भगवत्युरुमानाच्च भवे मय्यपि चादरात् ॥ ४३ ॥ पुत्रस्यैव च पुत्राणां भवितैकः सतां मतः ॥ गायंति यद्यशः शुद्धं भगवद्यशसा समं ॥ ४४ ॥ ॥ ॥ ॥**

चक्रपाणियाद श्रीहरियिंद मक्कळ वधेयु सद्गतिदायकवादकारण अपेक्षिसुवेनु एंदु आ दितिदेवियु अपेक्षिसिद्दु आ पुत्ररल्लिद्द भगवद्भक्तरिगे अपेक्षितवे हॊर्तु अल्लिद्द अभक्त, अयोग्यअसुररिगे अल्ल 'श्रीविष्णुहस्तदिंद वध आदवरिगे वैकुंठलोकवागुवदेंबदु आ विष्णुविन भक्तरिगे संबंधपट्ट मात हॊर्तु अवन द्वेषिगे याव कालक्कू अल्ल. हागादरे आ संबंधवागि अल्लल्लि आयाप्रसंगानुसारवागि विंगडिसि मूलग्रंथदल्लिये याके हेळल्पडुवदिल्लवेंदरे असुरमोहार्थवागि एल्ल विषयवन्नू संमेलनमाडि हेळुत पद्धतियुंटु, ' एंब ब्रह्मतर्कग्रंथवचनानुसार अभिप्रायवुळ्ळ कश्यपऋषिगळु; एरडने रीतियिंद निन्न मक्कळिगे सद्गतियादीतेंदु प्रकटिसुत्त, आ दितिदेविगे उत्तरवन्नु हेळुवरु--हे दिति नीनु पापकार्यमाडिद शोकदिद पश्चात्तापपट्टद्दरिंदलू पुनः युक्तायुक्तवन्नु विचारदिंद लक्षिसि तंदु कॊंडद्दरिंदलू परमपूज्यराद रुद्रदेवरन्नु बहुमानपुरस्करवागि प्रार्थनेमाडिकॊंडद्दरिंदलू नन्नल्लियू परमादरमाडिद्दरिंदलू निन्न मगनाद हिरण्यकशिपु एंबवन मक्कळल्लि ओब्बनु सज्जनरिगे सम्मतनादवनु. उत्पन्ननागुत्ताने अवनु निन्न मगनिगे सद्गतियन्नु कॊडतक्कवनागलि. ' दितिय जेष्ठपुत्रनल्लि प्रविष्टनाद हिरण्यकशिपुवेंब दैत्यनु भगवन्निंदेयन्नु माडिद्दरिंद तमःसिगे होगुवनु अल्लिद्द विजयनेंब हरिद्वारपालकनिगे सद्गतियागुवदु. यद्यपि स्वतः सद्गतिगे योग्यनादवरिगे मक्कळपुण्यदिंद अनुकूलतेयागुवदु. ' याकेंदरे योग्यतानू अनादियु भक्तियू अनादियु. अयोग्यनादवनिगे ह्यागे गतियागुवदु; एंदु ब्रह्मतर्कदल्लि हेळिदप्रकार मक्कळु द्रुष्टिमात्रक्के आ एंथवरादरू पितृगळिगे गतियागुवदेंदल्ल. मत्तु निर्वैरमोदलाद सद्गुणगळिंद युक्तरादरे उपयोगवागुवदेंब अभिप्रायदिंद हेळुवरु– आ निन्न मम्मगन शुद्धवाद कीर्तियु श्रीहरिय माहात्म्येयन्नु बिट्टिल्लादद्दरिंद आ परमात्मन महात्म्येयिंद महितवागि अवन कीर्तियन्नु लोकदल्लि सज्जनरु गानमाडुवरु ॥ ४३ ॥ ४४ ॥

साधवो यस्य प्रल्हादस्य शीलं शमादिस्वभावं अनुवर्तितुमात्मनि कर्तुं निर्वैरादिभिर्यथास्थितवस्तुदर्शनादिगुणैरात्मानमंतःकरणं भावयिष्यंति शमादिमत्कुर्वंति दोषानपनीय कथमिव योगैरौषध्याद्युपायैर्दुर्वर्णं दुष्टवर्णं हेमेव यथा भावयंति अष्टादशदोषान्निरस्य स्वस्वरूपस्थितं कुर्वंति तथेत्यर्थः अनेन निदर्शनेनात्रेदंतात्पर्यमवगंतव्यं तथाहि हिरण्यकशिपौ द्वौ चेतनौस्तस्तत्रैकः सद्गतियोग्य एकोन्यगतियोग्यः अनादिभक्तिलक्षणयोग्यतौषधेन दुःसंगदोषलक्षणदुर्वर्णमपनीय पुत्रादिः सचेतनस्य सद्गतिहेतुः स्यान्न विष्णुभक्तिविधुरस्यातोन्यद्दुष्टजनमोहनार्थं । तदुक्तं " स्वतःसद्गतियोग्यस्य पुत्रादेर्हेतुताभवेत् । योग्यतानादिभक्तिः स्यादयोग्यस्यकुतो गतिरि-" ति ॥ ४५ ॥



१. युक्तायुक्तविचारानुसंधानात् ॥— (था.)

**योगैर्हेमेव दुर्वर्णं भावयिष्यंति साधवः ॥ निर्वैरादिभिरात्मानं यच्छीलमनुवर्तितुं ॥ ४५ ॥ ॥**

( लोकदल्लि ) साधुगळु याव निन्न पौत्रनाद प्रल्हादन 'शीलं' शम, दममोदलाद गुणयुक्तस्वभाववन्नु 'अनुवर्तितुं' अनुसरिसबेकेंदु, 'निर्वैरादिभिः' यथास्थितवस्तुवन्नु नोडोणवे मोदलाद गुणगळिंद तंम अंतःकरणवन्नु, ( मनस्सन्नु ) शुद्धमाडिकोळ्ळुवरु अंदरे दोषगळन्नु बिट्टु शमादिसंपन्नरागुवरु ह्यागेंदरे-- 'योगैः दुर्वर्णंहेमेव' हीनवर्णवुळ्ळ अंदरे दोषयुक्त बंगारवन्नु ( भं ) 'योगैः' औषधमोदलाद उपायगळिंद हदिनेंटु आवर्ति अग्नियल्लि पुटक्के हाकि आ सुवर्णदल्लिद्द हदिनेंटु दोषगळन्नु तेगदु ह्यागे केवल उत्तमवर्ण ( १०० नं ) वुळ्ळद्दन्नु माडुवरो, अदरंते ई प्रल्हादनगुणगळ संस्कारगळिंद तम्म अंतःकरण शुद्धमाडिकोळ्ळुवरु– ई दृष्टांतदिंद ई प्रसंगदल्लि ई तात्पर्यवन्नु तिळकॊळ्ळतक्कद्दु एनेंदरे– दितियपुत्रनाद हिरण्यकशिपुविनल्लि एरडु चेतनगळु इद्दवु. अदरल्लि ओब्बनु सद्गतियोग्यनु, मत्तोब्बनु तमोयोग्यनु. आ देहदल्लिद्द योग्यचेतननु श्रीहरियल्लि अनादिभक्तिलक्षण उत्तमयोग्यते यंब औषधोपायदिंदलु ( योग्यपुत्रनाद प्रल्हादन सद्गुणसहवासवेंब संस्कार ( पुटहाकोण ) दिंदलू, ) आ तत्संगडसहजनागिद्द दुष्ट असुरन सहवासदिंद भगवद्द्वेषवेंब दोषलक्षणवाद दुर्वर्णवन्नु कळकॊंडद्दरिंद, 'पुत्रादिः' पुत्रनाद प्रल्हादने मोदलाद 'सचेतनस्य' आ भगवद्द्वारपालकनिगे सद्गतियागुवदक्के कारणवागुवदु. अल्लि आविष्टनाद असुरनिगे भगवन्निंदेयिंद तमःप्राप्तियागुवदु. इदकिंत हेच्चु हेळिद्दु दुष्टजनमोहनार्थवे ई अर्थ माडिद्दक्के श्रीमदाचार्यरु उदाहरिसिद ब्रह्मतर्कग्रंथद प्रमाणवु 'स्वतः सद्गतिगे योग्यनादवनिगे मक्कळेमोदलादवरिंद उपयोगवादीतु, आ योग्यताएंबदु श्रीहरियल्लि अनादिकालद भक्तिये, स्वतः अयोग्यनादवनिगे यारिंदलू सद्गतियागुवदिल्लवु. ॥ ४५ ॥

तव पौत्रस्य प्रल्हादस्य माहात्म्यं भगवत्प्रसादायत्तमिति भावेनाह यत्प्रसादादिति यस्य हरेः प्रसादात् प्रसन्नत्वे हेतुमाह यदात्मकमिति यदात्मकं यत्स्वामिकं येन व्याप्तं च शश्वद्दृक् सर्वदैकप्रकारज्ञानो भगवान् यस्यानन्यया सर्वोत्तमो हरिरेतत्सदृशोन्यो नास्तीत्येवं विशिष्टया दृशा ज्ञानेन तोष्यते ॥ ४६ ॥ सवाइति । स एव पौत्रो महात्मा एतादृशमहिमा अतत् तस्माद्धरेरन्यत्सर्वमनित्यमसारं हीनं चेति निरूप्य विहास्यति त्यक्ष्यतीत्यन्वयः। महानुभावः महाप्रभावः वैष्णवसिद्धांते महानिश्चयो वा वैकुंठं नारायणं ॥ ४७ ॥

**यत्प्रसादादिदं विश्वं प्रसीदति यदात्मकं ॥ शश्वद्दृक् भगवान्यस्य तोष्यतेऽनन्यया दृशा ॥४६॥ स वै महाभागवतो महात्मा महानुभावो महतां महिष्ठः ॥ प्रवृद्धभक्त्या ह्यनुभाविताशये विवेश्य वैकुंठमतद्विहास्यति ॥ ४७ ॥ ॥ ॥**

निन्न मम्मगनाद प्रल्हादन माहात्म्येयु श्रीहरिय प्रसादद अधीनवादद्देंब अभिप्रायदिंद कश्यपरु हेळुवरु—याव प्रल्हादगे याव श्रीहरियु प्रसन्ननाद्दरिंद ( प्रसन्ननागुवदक्के हेतुवन्नु हेळुवरु ) 'यदात्मकं' याव श्रीहरियिंद व्याप्तवाद मत्तु श्रीहरिये स्वामियागियुळ्ळ ई जगत्तु प्रसन्नवागुत्तदो ( परमानुग्रहमाडुवदो ) मत्तु 'शश्वद्दृक्' सर्वदा एकप्रकारज्ञानवुळ्ळ श्रीहरियु, याव प्रल्हाद

राजन, 'अनन्ययादृशा' श्रीहरियु सर्वोत्तमनु इवनिगे ममरारू अन्यरिल्लवेंब श्रेष्ठवाद दृढज्ञानदिंद तुष्टनागुवनो, ॥ ४६ ॥ अत्यंतभगवद्भक्तनाद आ निन्न मम्मगनु अत्यंत कीर्तियुळ्ळवनु वैष्णवसिद्धांतदल्लि अत्यंतनिश्चयवुळ्ळवनु उत्तमगुणवुळ्ळज्ञानिगळल्लि अत्यंत श्रेष्ठनु इंथ महिमेयुळ्ळवनागि, श्रीहरिचरणारविंदगळल्लि अत्यभिवृद्धवाद भक्तियिंद 'अनुभाविताशये' निर्मलवाद मनस्सिनल्लि मकल सच्छास्त्रगळल्लि नारायणने मुख्यप्रतिपाद्यनेंदु निश्चय अभिप्रायदिंद भगवदपरोक्षज्ञानवुळ्ळवनागि, 'अतद्विहास्यति' आ श्रीहरियहोर्तु मिक्काद यावत्तु जगत्तु अनित्यवादद्दु, असारवादद्दु, अवनकिंत कडिमेयद्दु एंदु तिळिदु जीवनिंद भिन्नवाद ई देहाभिमानवन्नु बिट्टुबिडुवनु. ॥ ४७ ॥

निर्वैरादिभिरित्यत्रादिशब्दोक्तान् गुणानाह अलंपटइत्यादिना । अलंपटो विरक्तः शीलधरः शीलसमाधावितिधातोः समाधिं कुर्वाणः गुणाकरः गुणनिधिः व्यथितेषु दुःखितेषु परेषु दुःखितस्तद्दुःखमात्मीयं करोतीत्यर्थः । अभूतशत्रुरजातशत्रुः नैदाधिकमुष्णकालजातं ॥ ४८ ॥ अतद्धास्यतीत्यनेन ब्रह्मेतरजगद्धास्यति ननु ब्रह्मेति ध्वनितमर्थं स्पष्टयति अंतर्बहिरिति श्रियो ललनायाः स्त्रियो ललामं तिलकस्थानीयं द्रष्टा द्रक्ष्यति ॥ ४९ ॥

अलंपटः शीलधरो गुणाकरो हृष्टः परार्थे व्यथितेषु दुःखितः ॥ अभूतशत्रुर्जगतः शोकहर्ता नैदाघिकं तापमिवोडुराजः ॥ ४८ ॥ अंतर्बहिश्चामलमब्जनेत्रं स्वपूरुषेच्छानुगृहीतरूपं ॥ पौत्रस्तव श्रीललनाललामं द्रष्टा स्फुरत्कुंडलमंडिताननं ॥ ४९ ॥

हिंदे हेळिद निर्वैरमोदलाद प्रल्हादन गुणगळन्नु विस्तारिसुवरु— आ प्रल्हादनु विषयलंपटशून्यनु ( विरक्तनु ) 'शीलधरः' सर्वदा समाधिग्रस्तनागि भगवध्यानमाडतक्कवनु, सद्गुणगळिगे मूलस्थाननागिरुवनु, तानु सर्वदा श्रीहरिध्यानदिंदले हर्षोद्रेकवुळ्ळवनु, 'परार्थे' एरडनेयवरु ( भगवद्भक्तराद एरडनेयवरु ) यारादरू दुःखितरादरे आ दुःखवु तन्नदे एंदु तिळिदु अवर दुःखवन्नु कण्णिले कंड ( अथवा किविले केळिद ) कूडले निवारणमाडुवनु 'अभूतशत्रुः' यावनिगे लोकदल्लि शत्रुगळे इल्लवु बेसिगेकालद सूर्यतापदिंद तप्तराद जनर तापवन्नु चंद्रनु तन्न दर्शनमात्रदिंदले हागे कळेयुवनो अदरंते ई प्रल्हादनादरू दर्शनमात्रदिंदले शोकिगळ शोकवन्नु कळियतक्कवनु. ॥ ४८ ॥ हिंदे ४७ ने श्लोकदल्लि 'अतद्विहास्यति' एंब पददिंद ब्रह्मभिन्नवाद जगत्तु असारवेंदु परित्यागमाडिदने होर्तु ब्रह्मननन्नु परित्याग माडलिल्लवेंदु प्रकटमाडिद अर्थवन्नु स्पष्टमाडुवरु— ( अंदरे परब्रह्मनन्नु अत्यंतवागि स्वीकरिसिद्दनेंदु हेळुवरु— ) तन्न भक्तजनरिगे यावकालक्के याव स्थळदल्लि यावप्रकारवाद रूपवन्नु श्रीहरियु स्वीकरिसबेकेंदु इच्छेयुंटागुवदो अदक्के तक्कंते रूपवन्नु धरिसुव, कमलपत्रदंते विस्तृतनेत्रगळुळ्ळ, श्रीलक्ष्मीदेवियंब सुंदरस्त्रीयळिगे तिलक हणे ( ललाटके ) गे हचुव कुंकुम स्थानीय नाद, मिंचिनंते होळेयुत्तिरुव, कर्णकुंडलमंडितवाद मुखवुळ्ळ, 'अमलं' सत्वरजस्तमोदोषदूरनाद, साक्षात् नृसिंहरूपियाद श्रीहरियन्नु आ निन्न मम्मगनाद प्रल्हादराजनु ओळगू ( तन्न हृदयकमलदल्लियू ) होरगू ( जगदल्लियू ) सह व्याप्तनादवन्नु नोडुवनु. ॥ ४९ ॥

एतच्छ्रुत्वा दित्या किमकारीति तत्राह श्रुत्वेति अमोदतेत्यनेन दितिरपि सद्गतियोग्येति निरूपितमिति ॥ ५० ॥ इ० श्रीमद्भा० तृ० वि० टी० पंचदशोऽध्यायः ॥ १५ ॥

मैत्रेयउवाच ॥ श्रुत्वा भागवतं पौत्रममोदत दितिर्भृशं ॥ पुत्रयोश्च वधं कृष्णाद्विदित्वासीन्महामनाः ॥ ५० ॥ इति श्रीमद्भागवते म०तृतीयस्कंधे दितिकश्यपसंवादे पंचदशोऽध्यायः ॥ १५ ॥ ॥ ॥ ॥

कश्यपरिंद मातुगळनुकेळि दितिदेवियु एनु माडिदळेंदरे— मैत्रेयऋषिगळु हेळुवरु— आ दितिदेवियु, तन्निब्बरु मक्कळन्नु श्रीकृष्णने कोल्लुवनेंब संगतियन्नु तिळिदुकोंडु 'महामनाः' मक्कळु मृतरागुत्तारेंब व्यसनवन्नु बिट्टु अवरिगे सद्गतियागुवदेंदु उत्सुकमनःसुळ्ळवळादळु, मत्तु तन्न मोम्मगनु केवल भगवद्भक्तनागुवनेंदु केळि, अत्यंतवागि आनंदपट्टळु अंदमेले, दितिदेवियादरू सद्गतियोग्यळेंदु हेळल्पट्टितु. ॥ ५० ॥ श्रीमद्भागवत 'सुखार्थबोधिनी' एंब प्राकृत टिप्पणेयु कूसनूर श्रीनिवासनिंद रचितवागि तृतीयस्कंधद १५ ने अध्यायवु मुगिदितु-॥ श्रीकृष्णार्पणमस्तु ॥

जयविजययोः शापमोक्षयोः प्रदानरूपसनकादिमहिम्नो वर्णनेन तेषांभगवत्समाधिसमुद्रेकसमुद्भूतमाहात्म्यं निरुपमचरितमहिमा हरिरिति निरूप्यतेऽस्मिन्ध्याये तत्रादौ दित्या पुनः किमकारीति विदुरस्य हार्दं प्रश्नं परिहरति प्राजापत्यमिति प्रजापतेः कश्यपस्येदं इति यथाविहितप्रत्ययः परेषां तेजस्विनां तेजो हन्ति हरतीति परतेजोहनं असुरार्दनाद्धरेर्वधं शंकमाना ॥१॥ किमतस्तत्राह लोकइति। तेन गर्भेण लोके हृतालोके अपहृतप्रकाशेसति तत्परिहारार्थं हतौजसो नष्टसामर्थ्याः इंद्रादिलोकपालाः दिशां ध्वांतव्यतिकरमंधकारेणप्राप्तं व्यत्ययमुपद्रवमित्यर्थः ॥ २ ॥

॥ मैत्रेयउवाच ॥ प्राजापत्यं तु तत्तेजः परतेजोहनं दितिः ॥ दधार वर्षाणि शतं शंकमानाऽसुरार्दनात् ॥ १ ॥ लोके तेन हृतालोके लोकपाला हतौजसः ॥ न्यवेदयन्विश्वसृजे ध्वांतव्यतिकरं दिशां ॥ २ ॥ ॥ ॥

ई अध्यायदल्लि सनकादिगळु जयविजयरिगे शापवन्नु आ शापमोचनेयन्नु कोट्ट महिमेयन्नु वर्णने माडुवदरिंद आ सनकादिगळिगे, श्रीहरियन्नु एकाग्रचित्तदिंद ध्यानमाडोणवेंब समाधिय प्राबल्यदिंद इंथ महात्म्येयु उत्पन्नवागिरुवदु एंबदरिंद, औपचारिकवल्लदे निजवाद महामहिमेयुळ्ळवनु श्रीहरियु एंदु हेळल्पडुवदु— आ मोदलु दितिदेवियु मुंदेनु माडिदळु एंब विदुरन मनोगतवाद प्रश्नेयन्नु मैत्रेयऋषिगळु परिहरिसुवरु— मैत्रेयरु— अंदद्दु हे विदुरने इष्टादनंतर आ दितिदेवियु एरडने तेजस्विगळ तेजःसन्नु अपहार माडतक्क कश्यपप्रजेश्वररं संबंधवाद तेजःसन्नु ( वीर्यवन्नु ); [ ई गर्भवु जननवादरे असुरमर्दकनाद श्रीहरियु कोल्लुवनु, आद्दरिंद आदष्टुदिवस ई मक्कळु नन्न गर्भदल्लिये रक्षितरागलेंदु ] आ श्रीहरिगे अंजिकोंडु नूरु १०० वरुषपर्यंतवागि गर्भदल्लि

१. पौत्रेण पुत्रयोः सद्गतिर्भविष्यतीतिभावेनामोदतेत्यर्थः ॥—( या. ) २. सोत्साहचित्ता ॥— ( या. ) ३. निरस्तसूर्यादिप्रकाशे ॥— ( या. )

धारणमाडिदलु. ॥ १ ॥ दितिदेवियु नूरु १०० वरुष गर्भधारणमाडोणदरिंदेनायितेंदरे हेळुवरु— आ गर्भदिंद लोकदल्लिद्द मूर्यचंद्ररे मोदलाद एल्लर तेजस्सु अपहृतवागु ( नाशवागु ) त्तिरलु, अदन्नु परिहारमाडुवदक्के एल्ल इंद्रने मोदलाद दिक्पालकरु सामर्थ्यहीनरागि जगत्सृष्टिकर्तृवाद ब्रह्मदेवनन्नु कुरितु बंदु एल्लदिक्कुगळल्लियू अंधकारदिंद बंदोदगिद उपद्रववन्नु हेळिकोंडरु. ॥ २ ॥

यद्येन संविग्ना भ्रांता वयं एतत्तमो वेत्थ जानासि तत्र निमित्तंवदंति नहीति । कालादिव्यवधानेनाज्ञानं स्यादित्यत उक्तं कालेनेति अस्पृष्टमव्यवहितं ज्ञानवर्त्म यस्य स तथा तस्याप्रतिबद्धज्ञानमार्गस्येत्यर्थः ॥ ३ ॥ तदेव विवृणोति परेषामुत्तमानामपरेषामधमानामतीतानागतानां वा भूतानां भाववित् हृदयज्ञोसीति यदतो व्यक्तं जानासीति भावः ॥ ४ ॥

**देवाऊचुः ॥ तम एतद्विभो वेत्थ संविग्ना यद्वयं भृशं ॥ न ह्यव्यक्तं भगवतः कालेनास्पृष्टवर्त्मनः ॥ ३ ॥ देवदेव जगद्धातर्लोकनाथ शिखामणे ॥ परेषामपरेषां त्वं भूतानामसि भाववित् ॥ ४ ॥ ॥ ॥ ॥**

देवतिगळु प्रार्थिसुवरु— ' हे विभो ' समर्थनाद चतुर्मुखने, यातरिंद नावु अत्यंतभ्रांतरागि बंदिरुवेवो आ तमःसन्नु ( कतलेयन्नु ) नीनु बल्लि, ब्रह्मदेवनु सकल जगदल्लिद्द यल्ल विषयवन्नु बल्लनेंबदरल्लि निमित्तवन्नु हेळुवरु— ज्ञानवैश्वर्यसंपन्ननाद निनगे प्रकटवागि तोरदे इद्दद्दु ई जगत्तिनल्लि यावयावदू इल्लवु. केलवु कालवु हिंदे मुंदे आगुवदरिंद अज्ञानवु बरबहुदेंदरे, ' कालेनेति ' नीनु कालदिंद तिरस्कृतवागदे इद्द ज्ञानमार्गवुळ्ळवनु ( यावदरिंदलु ) प्रतिबंधकवागद इद्द ज्ञानमार्गवुळ्ळवनेंदर्थवु. ॥ ३ ॥ आ ब्रह्मन सामर्थ्यवन्ने विवरिसुवरु— हे देवश्रेष्ठने नीने जगत्कर्तृवु सकललोकस्वामिगळाद, एल्ल दिक्पालकरिगे शिखामणियाद ब्रह्मदेवने नीनु श्रेष्ठजनरदू कनिष्ठजनरदू अथवा हिंदे होदजनरदू मुंदेबरुव जनरदू सहवागि मनोभिप्रायवन्नु बल्लव निरुवि, आद्दरिंदले ( सकललोकाभिप्रायवन्नु ) स्पष्टवागि बल्लवनेंदु भाववु. ॥ ४ ॥

सर्वस्मात्प्रणतिरेव प्रसादजननीति मत्वा तत्पूर्वकं स्तुवंति नमइति । विज्ञानवीर्यायाप्रतिबद्धज्ञानाय तदेव विशदयति माययेति मायया श्रीनारायणानुगृहीतप्रज्ञाबलेन इदं विश्वमुपेयुषे ज्ञातवते रजआदिगुणेन ज्ञानप्रतिबंधः संभाव्यत इत्यत उक्तं गृहीतेति हर्याज्ञया अनुपद्रावकत्वेन गृहीतरजआदिगुणविशेषाय इतोपि ज्ञानवीर्यं तवैवेति भावेन स्तुवंति नमस्तइति । व्यक्तं ब्रह्मांडं तस्य योनये कारणाय सृज्येषु वस्तुषु ब्रह्मांडसर्जनस्यातिबहुलज्ञानसापेक्षत्वात्तस्य स्रष्टुर्ब्रह्मणोऽतिशयितज्ञानमस्तीति किं वक्तव्यमिति निरूपितं सर्वेषां ज्ञानादिगुणप्रतिबंधका रजआदिगुणाः कथमस्य न विरोधका हरिप्रसादादिति चेत्तत्प्रसादसंभवोपि

१. अभिप्रायज्ञोसि केनाभिप्रायेण दितेर्गर्भोऽवर्धतइति जानासीत्यर्थः ॥– ( या. )

कथमित्यतो वाह अव्यक्तेति । अव्यक्तं ब्रह्म तद्योनिः कारणं यस्य स तथा तस्मै । " योब्रह्माणं विधधातीति - " श्रुतेः । "तेनेब्रह्महृदा य आदिकवय " इति च । अतः स्वपुत्रत्वेन सर्वानुग्रहपात्रत्वान्न तस्य सत्वादिगुणाः परिपंथिन इति ॥ ५ ॥

**नमो विज्ञानवीर्याय माययेदमुपेयुषे ॥ गृहीतगुणभेदाय नमस्ते व्यक्तयोनये ॥ ५ ॥ ॥**

एल्लक्कू नमस्कारवे तीव्र अनुग्रहक्के कारणवादद्देंदु तिळिदु आ नमस्कारपूर्वकवागि ब्रह्मनन्नु प्रार्थिसुवरु— यावग्यू प्रतिबंधविल्लद ज्ञानवुळ्ळ निन्न ज्ञानके प्रतिबंधकवु याके इल्लवेंदरे- ' माययेदमुपेयुषे ' श्रीनारायणन अनुग्रहदिंद दोरेद ज्ञानद बलदिंद ई यावत्तू जगत्तन्नु बल्लवनाद रजस्तमोगुणगळिंद निन्न ज्ञानके प्रतिबंधकवु बरबहुदल्लवेंदरे– श्रीहरिय आज्ञेयिंद रजस्तमोगुणगळ उपद्रवशक्तियन्नु निल्लिसिद ज्ञानसामर्थ्ययु निनगे उंटेंब अभिप्रायदिंदले इन्नादरू स्तोत्रमाडुवरु— ' व्यक्तयोनये ' ब्रह्मांडद सृष्टिगे कारणनाद निन्नगोस्कर नमोनमः सृष्टिमाडिसिगोळ्ळतक्क वस्तुगळल्लि ब्रह्मांडवन्नु सृष्टिमाडबेकादरे बहळ ज्ञानवु बेकु. अंथ ब्रह्मांडवन्नु सृष्टिमाडिद ब्रह्मदेवनिगे अतिशयज्ञानउंटेंदु एनु हेळतक्कद्दु एंदु हेळल्पट्टितु एल्लरिगू ज्ञानमोदलादवुगळिगे प्रतिबंधकवागतक्क रजोगुणमोदलाद गुणगळु ई ब्रह्मदेवनिगे याके विरोधवागुवदिल्लवेंदरे श्रीहरिप्रसादवु इवनल्लिअधिकवागिरुवदु. आ श्रीहरिप्रसादवु इवनल्लि संभविसुवदक्केनुकारणवेंदरे– ( मेलिन अर्थमाडिदाग्ये व्यक्तयोनये एंदु पदवु इग्ये ' अव्यक्तयोनये ' एंदु पदवु ) अव्यक्तवेंदरे परब्रह्मवस्तुवु याव चतुर्मुखन उत्पत्तिगे कारणवाद्दु. ' याव परमात्मनु पूर्वदल्लि ब्रह्मदेवनन्नु सृष्टिमाडुवनु ' एंदु श्रुतियु हेळुवदु. मत्तू याव परमात्मनु आदिकवियाद चतुर्मुखनिगे सांगवाद वेदवन्नु अंतःकरणपूर्वकवागि अध्ययनमाडिसिदनु. एंब प्रमाणानुसारवागि श्रीहरिय पुत्रनादकारण सर्वअनुग्रहक्कू मुख्यपात्रनाद्दरिंद निन्नन्नु सत्वादिगुणगळु यावविषयक्कू प्रतिबंधक माडुवदिल्लवु. ॥ ५ ॥

यस्य यदभीष्टं तत्प्राप्त्यै तेन तथानुष्ठेयमिति मन्वाना दितिगर्भनिमित्ततिमिरप्राप्तपराभवपरिहरणाय तादृशगुणविशिष्टत्वेन स्तुवंतीत्याह यइति । ये पुरुषा अनन्यभावेन हरेरन्यः स्वतंत्रो नास्तीति ज्ञानदृढीकृतभक्त्या त्वां भावयंति निरंतरोपासनया वशीकुर्वंति तेषां पुसां न कुतश्चित्पराभव इत्यन्वयः पराभवकर्तॄणां त्वत्सृष्टजीवांतर्गतत्वेन त्वन्नियतत्वान्न ते तावकान् द्रुह्यंतीति भावेनोक्तं आत्मभावनमिति । आत्मनो जीवान् भावयत्युत्पादयतीत्यात्मभावनस्तं आत्मनः परमात्मनो भावनया निरंतरोपासनया प्रवृद्धतदनुग्रहस्य तवासाध्यं नास्तीत्यतोवात्मभावनमिति आत्मनो भावनं यस्य स तथा तं न केवलं जीवजातं त्वदुत्पन्नत्वेन त्वदधीनं किंतु चेतनाचेतनात्मकं सर्वमपि त्वया धृतमित्याहुरित्याह आत्मनीति त्वमपि जीवेष्वेक इति मंदाशंकां निवारयति परमिति परं सर्वोत्तमं अनेन जीवोत्पादकत्वेऽनुपपत्तिः परिहृता महदादिकार्यकारणव्यापित्वेन सर्वोत्तमत्वं युक्तमिति भावेनोक्तं सदसदात्मकमिति न केवलं भारधरदेवदत्तवज्जगद्धारकत्वमस्य किंतु बहिर्व्याप्तत्वेनापीत्यतोवोक्तं सदसदात्मकमिति । " ततोविशेषंप्रतिपाद्ये–"त्यादिद्वितीये सर्वव्याप्तिमत्त्वमुक्तं मुक्तामुक्तप्रपंचस्य सुखादिदातृत्वादुक्तं युक्तमित्यतो

१. हरेरिच्छयेदं पारमेष्ठ्यं पदं उपेयुषे प्राप्तवते॥– ( या. )

वेत्युक्तं सदसदात्मकमिति संत आत्मानो मुक्ता असंतः आत्मानोऽमुक्ता येषामुभयेषामपि कं सुखं यस्मात्तत्तयोक्तं विशिष्टध्यानमनस एवंविधफलवत्वं न तु तन्मात्रस्य तन्मात्रेण योगादीनां परिपाकाभावेन युष्मत्प्रसादानुत्पत्तिरिति भावेन तान् विशिंषंतीत्याह सुव्यक्तेति । अष्टांगलक्षणो योगः ॥ ६ ॥ ७ ॥

**येत्वनन्येन भावेन भावयंत्यात्मभावनं ॥ [१]आत्मनि प्रोतभुवनं परं सदसदात्मकं ॥६॥ तेषां [२]सुव्यक्तयोगानां जितश्वासेंद्रियात्मनां ॥ लब्धयुष्मत्प्रसादानां न कुतश्चित्पराभवः ॥ ७ ॥ ॥ ॥ ॥ ॥**

यावनिगे यावदु बेकागिरुवदो अदु दोरेयुवदक्के आ पुरुषनु अदरतक्कंते अनुष्ठान ( प्राप्त्युपाय- आचरणि ) माडतक्कद्दु एंदु तिळिदु आ देवतिगळु दितिदेविय गर्भनिमित्तदिंद बंदोदगिद तमःसल्तु कळकोळ्ळुवदक्के आ कत्तलेयन्नु कळेतक्क गुणवुळ्ळवनेंदु ब्रह्मदेवनन्नु स्तोत्रमाडुवरु– याव पुरुषरु ' अनन्यभावेन ' श्रीहरिय होर्तु मत्तोब्बरु स्वतंत्रइल्लेंदु ज्ञानदिंद दृढतरवाद भक्तियिंद ( अथवा ' अनन्येनभावेन त्वां अयमेवास्माकं गुरुरितिभक्त्या भावयंति ध्यायंति ' ई चतुर्मुखने मुख्यवागि ज्ञानोपदेशकनाद गुरुवेंदु निन्नन्नु ध्यानमाडुवरो–या. ) निन्नन्नु निरतरोपासनेयिंद वशमाडिकोळ्ळुवरो आ पुरुषरिगे यावप्रकारद जनरिंदलू पराजयवु इल्ल. निन्न भक्तरन्नु सोलिमितक्क जनरादरू निन्न सृष्टियल्लि हुट्टिद जीवसमूहदल्लि शेरिदिरिंद अवरादरू निन्न अप्पणेगे वळगादवरादकारण निन्न भक्तरन्नु द्रोहबडिसुवदिल्लवु, एंब अभिप्रायदिंद हेळुवरु— ' आत्मभावनं ' आत्मशब्ददिंद करिसिगोळ्ळुव जीवरन्नु स्थूलदेहकोडुवदरिंद सृष्टिगे तरुववनु अथवा–श्रीरिय निरंतरोपासनेयिंद अतिशयवागि अवन अनुग्रहवुळ्ळवनाद्दरिंद निनगे असाध्यवादद्दु यावदू इल्लवु. केवल जीवसमूहमात्रवे निन्निंद स्थूलदेहवन्नु होंदि सृष्टिगे बंदकारण निन्न अधीनवेंदल्लवु, चेतनाचेतनात्मकवाद सर्वजगत्ते निन्निंद हिडियल्पट्टदे एंदु हेळुवरु— ' आत्मनिप्रोतभुवनं ' पुष्पमालेयु तन्नल्लि पोणिसल्पट्ट धारद आश्रयदिंदले ह्यागे इरुवदो हागे जगत्तु निन्न आश्रयदिंदले इरुवदु. नीनादरू ( ब्रह्मनादरू ) जीवराशियल्लि शेरिदवनष्टे एंब मंदजनर मेहवन्नु बिडिसुवरु— ' परं ' सर्वजीवरल्लि उत्तमनादवनु, अंदमेले तन्नहोर्तु एल्ल जीवरन्नू स्थूलदेहदिंद सृष्टिमाडुवनेंबदक्के अनानुकूल्यगळेल्लवू परिहारमाडल्पट्टवु ' सदसदात्मकं ' महत्तत्वमोदलादकारणगळल्लियू कार्यरूपवादजगत्तिनल्लियू नीनु व्यापनादकारण सर्वजीवरल्लि उत्तमनेंबदु युक्तवे. चतुर्मुखनु जगदाधारकनेनुवदरिंद लोकदल्लि यःकश्चित् पुरुषनु काष्ठभारवरिसिद्दरिंद ह्यागे अदु तंलभारवागिरुवदो हागे अल्लवु. ओळगू होरगू व्यापनागिरुववनु ईविषयवागि हिंदे द्वितीयस्कंधद २ ने अध्यायद ३१ ने ' ततोविशेषंप्रतिपद्य ' एंब श्लोकदल्लि हेळल्पट्टदे. मत्तु ई ब्रह्मदेवनु मुक्तजीवरिगू अमुक्तजीवरिगू सुखवन्नु कोडतक्कवनादकारण, हेळिद अर्थवु उचितवे एंब अभिप्रायदिंद ' वा ' एंददिरुवरु– ' सदसदात्मकं ' मुक्तरु सदात्मरेनिसुवरु अमुक्तरु असदात्मरेनिसुवरु ई उभयतरिगू ' कं ' सुखवु यावनिंदो आ ब्रह्मनेंदर्थवु. ई मेले हेळिद माहात्म्येयुळ्ळवनेंदु ( चतुर्मुखब्रह्मनन्नु ) निन्नन्नु मनसि-

१. परमात्मनि प्रोतानि ग्रथितानि स्थापितानि भुवनानि येन स तथा तं ॥– ( **या.** ) २. त्वयि मुख्यगुरुत्वादिना सम्यक्ध्याते हरिविषयकध्यानादिरूपो योगः सम्यक् व्यक्तो भवति प्राणेंद्रियजयश्च संपद्यते अनंतरं मोक्षहेतुर्युष्मत्प्रसादश्च भवतीत्यर्थः ॥– ( **या.** )



निंद ध्यानमाडतक्कवरिगे ई मुंदे हेळतक्क फलवु दोरेयुवदु, हींगे माहात्म्यज्ञानपूर्वकविल्लदे सामान्यवागि भजिसिदरे ई फलवु दोरेयुवदिल्लवु. यार्केंदरे माहात्म्यपूर्वकध्यानविल्लदेहोदरे आयायोगगळु पूर्तियागुवदिल्लवु. आदकारण तम्म ( ब्रह्मदेवन ) प्रसादवुंटागुवदिल्लवेंब अभिप्रायदिंद आया अर्थहेळतक्क विशेषणगळन्नु कोट्टु प्रशंसने माडुवरु ( विशिंषंति= विशेषणविशिष्टत्वेन प्रशंसंति ) यावमहात्मरु श्वासगळन्नू इंद्रियगळन्नू मनःसन्नू निग्रहमाडिकोंडु निम्म माहात्म्यज्ञानपूर्वक अष्टांगलक्षणवेंब योगाभ्यासमाडतक्कवरो अवरु निम्म परमप्रसादवन्नु होंदिद्दवरादकारण अवरिगे यारिंदलू पराजयविल्लवु. ॥ ६ ॥ ७ ॥

**विधिनिषेधलक्षणया वेदवाचा प्रवर्तमानाः प्रजाः स्वस्वकर्मानुसारेण सुखादिकमश्नंति तत्रायं कुत्रोपयुज्यते इत्याशंक्य तया त्वदीयया नियतास्तदुक्तप्रकारेण त्वत्पूजां कुर्वंति तदनुसारेण भवान्फलं प्रयच्छतीत्यतस्त्वं सर्वोत्तम इत्याहुरित्याह यस्येति यस्य तव तंत्या गोबंधनोपरचितया दीर्घया रज्ज्वा यंत्रिताः बद्धाः । यत्रिबंधनइतिधातुः । हरंति नयंति मुख्यात्मने सर्वेभ्यो जीवेभ्यो मुख्याय ॥ ८ ॥**

**यस्य वाचा प्रजा सर्वा गावस्तंत्येव यंत्रिताः ॥ हरंति बलिमायत्तास्तस्मै मुख्यात्मने नमः ॥ ८ ॥**

इदु माडतक्कदु, इदु बिडतक्कदु, एंदु हेळतक्क वेदवाणियिंद तम्म तम्म व्यापारगळन्नु माडतक्क प्रजरु तम्म तम्म कर्मानुसारवागि सुखदुःखगळन्नु भोगिसुवरु. अदरल्लि ई चतुर्मुखनु यावदक्के उपयुक्तनागुवनु एंदरे– निन्न वेदवेंब वाणियिंद आज्ञेयन्नु पडेदु आ वेददल्लि हेळिद प्रकारदिंदले, निन्नन्नु पूजिसुवरु आ निन्न पूजानुसारवागि नीनु अवरिगे फलकोडुवि आदकारण नीने सकलजीवराल्लि उत्तमनेंदु हेळुवरु–– हे चतुर्मुखने याव निन्न मुखदिंद बंद वेदवाणियेंब रज्जुविंद; सकलजनरू गोवुगळु कंणि अथवा मरहगगदिंद ह्यागे बद्धवागि तम्म स्वामिय आज्ञेयन्नु पालिसुववो आ प्रकार विधिनिषेधस्वरूपवाद कर्मगळल्लि बद्धरागि जननदिंद तप्पदंते कालकालक्के याव निनगे बलियन्नु ( यज्ञदल्लि आहुतिगळन्नु ) कोडुवरो, आ सकलजीवरिगे मुख्यस्वामियाद चतुर्मुखनिगे नमोनमः एंदु वंदने माडिदरु. ॥ ८ ॥

**भवतां महतां संरंभेण स्तवनाभिप्रायः क इत्यतस्तमाहुरित्याह सत्वमिति स इति तच्छब्देन पूर्वोक्तवैशिष्ट्यं स्मारयंति दितिगर्भनिमित्ततिमिरेण लुप्तसंध्यादिकर्मणां तदर्थमयमेवोपायइति विज्ञापयंतीत्याह अदभ्रेति अदभ्रा पूर्णा दया यस्यां सा तयोक्ता तया दृष्ट्या ईक्षितुं द्रष्टुं ॥ ९ ॥ किमिदानीं भयनिमित्तमिति तद्विज्ञापयंतीत्याह एषइति । काश्यपं कश्यपस्य विद्यमानं दित्यामर्पितमोजस्तेजः एष गर्भः सर्वादिशस्तिमिरयन् अंधकारयन् लोकप्रदीपानां सूर्यादिग्रहाणां तेजोवष्टंभनं दिशामंधकारित्वमतोस्य ते त्वया परिहारो द्रष्टव्य इति यावत् ॥ १० ॥ स्वप्रज्ञाधिगमं स्तुवतां तेषामुत्तरं प्रतिजानीते मैत्रेयो विदुरं वक्ति सप्रहस्येति । शब्दगो**

१. ब्राह्मणादिरूपाः ॥– ( **या.** ) २. अधीनाःमत्यः ॥– ( **या.** )

चरः मिथो व्यवहारविषयः वेदवेद्यो वा प्रीणन् प्रीणयन् प्रत्याचष्ट भवदुक्तस्योत्तरं वक्ष्यामीत्याह ॥ ११ ॥

**स त्वं विधत्स्व शं भूमन् तमसा लुप्तकर्मणां ॥ अदभ्रदयया दृष्ट्या प्रपन्नानर्हसीक्षितुं ॥ ९ ॥ एष देव दितेर्गर्भ ओजः काश्यपमर्पितं ॥ दिशस्तिमिरयन्सर्वा एधतेऽग्निरिवैधसि ॥ १० ॥ मैत्रेयउवाच ॥ स प्रहस्य महाबाहो भगवांश्छब्दगोचरः ॥ प्रत्याचष्टात्मभूर्देवः प्रीणन् रुचिरया गिरा ॥ ११ ॥ ॥ ॥ ॥ ॥**

इष्टु महाभयदिंद स्तोत्रमाडबेकादरे निम्म अभिप्रायवेनु, एंदरे– आ तम्म अभिप्रायवन्नु हेळिकोळ्ळुवरु— सः एंबदरिंद हिंदे स्तोत्रमाडिद विशेषणगळुळ्ळ एंदु स्मरिसिदंतायितु. इंथ महामहिमेयुळ्ळ पूर्णनाद चतुर्मुखने नीनु– दितिदेविय गर्भनिमित्तकवाद कत्तलेयिंद स्नानसंध्यामोदलाद कर्मगळेल्ल लोपवागिरुव नम्मगळिगे 'शं' आ कत्तले होगुवदके इदे उपायवेंदु अदरंते माडु एंदु विज्ञापने माडिकोळ्ळुवरेंदु हेळुवरु ( यलै महास्वामिये ) 'अदभ्रदयया' पूर्णदयायुक्त दृष्टियिंद नोडलु समर्थनिद्दीदि. ॥ ९ ॥ ईग्ये निमगे भयबरुवदके एनुकारणवु, एंदरे आकारणवन्नु विज्ञापन माडिकोळ्ळुवरु— 'हेदेव' देवश्रेष्ठनाद चतुर्मुखने, कश्यपरिंद दितिदेवियल्लि इडल्पट्ट 'ओजः' वीर्यरूपवाद ई गर्भवु दिकुगळेल्ल कत्तलेयागिसुत्त-लोकके प्रकाशकराद सूर्यचंद्रमोदलादवर प्रकाशवन्नु नाशमाडुत्त काष्ठदल्लि अग्नियु प्रबलवागुवंते दिनेदिने अभिवृद्धवागुवदु अदर परिहारवन्नु नीनु माडतक्कदु एंदु प्रार्थिसिदरु ॥ १० ॥ तानु अध्ययनमाडिद शास्त्रजन्यज्ञानानुसारवागि स्तोत्रमाडतक्क आ देवतिगळिगे ब्रह्मदेवनु उत्तरवन्नु हेळुवनेंदु मैत्रेयरु विदुरनन्नु कुरितु हेळुवरु– हे महाबाहुशालियाद विदुरने 'शब्दगोचरः' परस्परव्यवहारविषयनाद अथवा वेदप्रतिपाद्यनाद श्रीहरियिंद उत्पन्ननाद देवश्रेष्ठनाद चतुर्मुखब्रह्मनु दोड्ड ध्वनियिंद नक्कु मनोल्हादकरवाणियिंद संतोषबडिसुत्त नीवु केळिद्दक्के उत्तरहेळुवेनेंदु आ देवतिगळन्नु कुरितु हेळलारंभिसिदनु. ॥ ११ ॥

**स्ववचनमध्ये तत्प्रश्नो माभूदिति मन्वान आदितएव वक्तुं प्रारभते मानसा इति । मम मनसो जाताः अंतरिक्षादिलोकान् किं प्रयोजनवंत इत्यतआह लोकेष्विति ॥ १२ ॥ ततः किमत्राह तइति विकुंठाख्यं निलयं गृहं नितरां लीयतेऽस्मिन् सर्वमिति ॥ १३ ॥ शून्यागारत्वं निवारयति वसंतीति । ये नित्यम-निमित्तेन अः विष्णुर्निमित्तं यस्य सोऽनिमित्तः तेन विष्ण्वर्पणबुद्ध्या क्रियमाणेनेत्यर्थः धर्मेण हरिमाराधयंस्ते यत्र वसंतीत्यन्वयः वैकुंठवन्मूर्तिर्येषां ते तथोक्ताः सारूप्यभाज इत्यर्थः ॥ १४ ॥**

१. अहोरात्रविभागाज्ञानेन लुप्तानि कर्माणि येषां ॥– ( या. ) २. देवस्तुतिरूपशब्दविषयः ॥– ( या. )

**ब्रह्मोवाच ॥ मानसा मे सुता युष्मत्पूर्वे वै सनकादयः ॥ चेरुर्विहायसा लोकान् लोकेषु विगतस्पृहाः ॥ १२ ॥ त एकदा भगवतो वैकुंठस्यामलात्मनः ॥ ययुर्विकुंठनिलयं सर्वलोकनमस्कृतं ॥ १३ ॥ वसंति यत्र पुरुषाः सर्वे वैकुंठमूर्तयः ॥ ये नित्यम-निमित्तेन धर्मेणाराधयन्हरिं ॥ १४ ॥ ॥ ॥ ॥ ॥ ॥**

तानु हेळुवकालके मध्यदल्लि आ देवतिगळु प्रश्नमाडबारदेंदु आ दितिदेविय गर्भद वृत्तांतवन्नु मोदलिनिंदे ब्रह्मदेवनु हेळुवनु– हे देवतिगळिरा नीवेल्लरू हुट्टुवदक्किंत पूर्वदल्लि नन्न मनसिनिंद सनकादिगळेंब नाल्वरु मक्कळु उत्पन्नरादरु, अवरु सर्वलोकगळल्लियू निस्पृहबुद्धियुळ्ळवरागि अंतरिक्षमोदलाद लोकगळन्नु संचरिसुत्तिद्दरु मुंदेनायितेंदरे– आ सनकादिगळु ओंदुदिन अव्याहतषड्गुणैश्वर्यसंपन्ननाद, त्रिगुणमलसंपर्कशून्यनाद, श्रीवैकुंठशब्दवाच्यनाद, नारायणन सर्वजनरिंद वंद्यवाद अथवा सर्वलोकगळिगिंत श्रेष्ठवाद वैकुंठवेंब मंदिरवन्नुकुरितु होदरु ॥ १२ ॥ सर्वमुक्तजनरू अत्यंतवागि अदेलोकदल्लि वासमाडिकोंडिरुवरेंदु आ लोकके निलयवेन्नुवरु. ॥ १३ ॥ आ वैकुंठमंदिरदल्लि यारू इरुवदिल्लवेंदु अल्लवु याव लोकदल्लि यारु नित्यदल्लियू 'अनिमित्तेन' 'अः' श्रीविष्णुवे निमित्तवागियुळ्ळ (श्रीविष्ण्वर्पणबुद्धियिंद माडल्पट्टदेंबऽर्थवु) धर्मदिंद श्रीहरियन्नु आराधनेमाडुत्त एल्लरू आ श्रीविष्णुविनंते शंख, चक्र, गदा, पद्मगळिंद युक्तवाद चतुर्भुजवुळ्ळवरागियू पीतांबरधरिसि कर्णकुंडलमंडितरागि श्रीवत्सकौस्तुभएरडुमात्र इल्लदे सुंदररूपवन्नु धरिसिगोंडिरुवरो सारूप्यवन्नु होंदिदवरेंदर्थवु आ लोकके होंदरेंदु 'पूर्वश्लोकेन' ( १३ ) श्लोकदिंद अन्वयवु ( २९ ) श्लोकदवरिगे. ॥ १४ ॥

**यत्र लोके वृषः श्रेष्ठः आद्यः सर्वैरुपजीव्यो भगवान् स्वैर्भगैर्मूर्तिमद्भिरुपेतः शब्दगोचरः अनंतानां मूर्तिधराणां वेदानां विषयः पुमान् नारायणो विरजं दूरीकृतरजोगुणं सत्वं बलज्ञानसमाहारात्मत्वमवष्टभ्य स्वानां नो यदस्ति तत्सर्वं मृडयन् रक्षन् आस्तइत्यन्वयः ॥ १५ ॥ कैवल्यं । " ब्रह्मकैवल्यममृतमक्षरं ब्रह्म " त्यभिधानं ज्ञानपुष्पसाध्यत्वान्नैःश्रेयसं॥ १६ ॥**

**यत्र चाद्यः पुमानास्ते भगवान् शब्दगोचरः ॥ सत्वं विष्टभ्य विरजं स्वानां नो मृडयन् वृषः ॥ १५ ॥ यत्र नैःश्रेयसंनाम वनं कामदुघैर्द्रुमैः ॥ सर्वर्तुश्रीभिर्विभ्राजत्कैवल्यमिव मूर्तिमत् ॥ १६ ॥ ॥ ॥ ॥**

यावलोकदल्लि 'वृषः' श्रेष्ठनाद ( सर्वैःप्राणिभिः अद्यतेइति आद्यः । उपजीव्यत्वमेवाद्यत्वं । अद्यते अत्तिभूतानि तस्मादन्नंतदुच्यते । अद्यते प्राणिभिर्भुज्यते इतिव्याख्यातं आनंद-

१. लोकस्थविषयेषु विगतेच्छाः अथापि तेषां लोकचरणं लोकतत्वविवित्सयेत्याशयः ॥– ( या. ) २. ज्ञानबलसमाहारात्मकं देहं विष्टभ्य व्यक्तीकृत्य ॥– ( या. )

मयाधिकरणतत्वप्रकाशिकायां ) याव श्रीहरियु अन्नदल्लिद्दु एल्ल प्राणिगळिंदलू तिन्निसिगोळ्ळुत्तिद्दवनो, ( एल्ल प्राणिगळू तावु तिन्नुव अन्नदिंदले बदुकुवरेंदल्लवु आ अन्नदल्लिद्द अन्नशब्ददिंद मुख्यवाच्यनाद श्रीहरियु एल्ल प्राणिगळ क्षुधानिवृत्तियन्नु माडि, प्राणधारणशक्तियन्नुंटु माडुवनु. ) तन्न अनंतऐश्वर्यमूर्तिगळिंद युक्तनागि मूर्तिमंतराद वेदाभिमानिदेवतिगळिंद होगळिसिगोळ्ळुत्त परमपुरुषनाद भगवंतनु रजोगुणदसंपर्कविल्लद बलज्ञानगळिंद युक्तवाद देहवुळ्ळवनागि तन्न दासानुदासराद नम्मगळिगे इद्द बलज्ञानादिगळन्नु रक्षिसुत्त इरुवनो ॥ १९ ॥ आ वैकुंठलोकदल्लिद्द वनवन्नु वर्णिसुवरु– यावलोकदल्लि सकलकामितपदार्थगळन्नु कोडतक्क मत्तु सकलऋतुगळल्लिरतक्क फलपुष्पगळ संपत्तियु सर्वदा पूर्णवागिद्दु मनोल्हादकरवाद प्रकाशवुळ्ळ वृक्षगळिंद युक्तवाद नैश्रेयसवेंब हेसरुळ्ळ वनवु कामितार्थदानविषयदल्लि ' कैवल्यमिवमूर्तिमत् ' मूर्तिमंतनागि ई वनद स्वरूपधारणमाडिकोंडु परब्रह्मने निंतिरुवनो एनो एंबंते तोरुवदु. इंथ वनवु ब्रह्मज्ञानादिंद दोरेयतक्काद्दद्दरिंद नैःश्रेयसवेन्नुवरु. ॥ १६ ॥

सललनाः ललनाभिः स्त्रीभिः सहिताः वैमानिकाः विमानेन चरंतः पुरुषाः लोकस्य जनस्य शमलक्षपणानि पापनाशनानि भर्तुर्हरेश्चरितानि यत्र गायंति नन्वत्र गानं वदनव्यादानेन न घटते पुष्पसौरभ्यसमावेशादिनेंद्रियक्षोभसंभवादित्याशंक्य परिहरति अंतर्जलइति अत्रांतःशब्दः समीपवचनः जलसमीपे तटे विलसंतीनां मधौ वसंते विद्यमानानां माधवीनां वासंतीलतापुष्पाणां गंधेन खंडितधियो विक्षुब्धबुद्धयो नित्यं गंधनायकं वायुं क्षिपंतः परिहरंतः तुशब्देन भेदवाचिना मुक्ता अमुक्ताश्चेत्युभये संति तत्र मुक्तानां क्वचिदपि पुष्पगंधवायुनेंद्रियक्षोभलक्षणो भ्रमो नास्ति अमुक्तानां क्वचित्स्यादिति तात्पर्यं निरूप्यते । " मुक्ताश्चैवाधिकारस्था द्विधा वैकुंठलोकगाः अमुक्तानां भ्रमः क्वापि नमुक्तानां कचिद्भवेदि - " ति वचनात् ॥१७॥

**वैमानिकाः सललनाश्चरितानि यत्र गायंति लोकशमलक्षपणानि भर्तुः ॥ अंतर्जले नु वि ( क ) लसन्मधुमाधवीनां गंधेन खंडितधियोप्यनिलं क्षिपंतः ॥ १७ ॥ ॥ ॥ ॥ ॥ ॥**

याव नैःश्रेयसवेंबवनदल्लि सुंदरस्त्रीयरिंद सहितरागि तम्म तम्म विमानारूढराद ( मुक्तरू अमुक्तरूसह ) पुरुषरु, जनर सकलपापगळन्नु नाशमाडतक्क, सर्वस्वामियाद श्रीहरिय, चरित्रेगळन्नु गायनमाडुवरु. ओळ्ळेदु? ई वैकुंठदल्लि गानवु बायितेगेयुवदरिंद कूडूवदिल्ल यार्केंदरे आ वनदल्लिद्द मनोहरवाद पुष्पगळ सुगंधवु घ्राणेंद्रियक्के शेरोणवु ( आदिपददिंद सुंदरवादलतापुष्पगळ सौंदर्यवु चक्षुरिंद्रिके शेरोणवु ) इत्यगळिंद ई जनर इंद्रियगळु लौकिकपुरुषरंते व्याकुलवागुववल्लवेंदरे- परिहरिसुवरु— आ वनदल्लिद्द स्वच्छोदकपूर्णवाद सरोवरगळ दंडेयमेले शोभिसुत्तिरुव वसंत ( चैत्र वैशाख ) मासगळल्लिरतक्क, ' माधवीनां ' मल्लिगेबळ्ळिगळल्लिरतक्क अरळमोग्गेगळ सुगंधवातवु बरुवदरिंद आ जनर बुद्धिक्षोभवागि श्रीहरिध्यानदिंद बुद्धियु बिडुगडेयागुव

१. खडितधियोपि हरेर्श्रीशितधियोपि अनिलं गंधप्रापकं क्षिपंतःतिरस्कुर्वतः गायंति । अनेन तेषां विषयसंनिधानेन चित्तक्षोभेपि नभगवद्रतिरपगतेति सूचयति ॥ अत्रगंधेन खंडितधीत्वं न मुक्तानां युक्तं ॥– ( या. )



प्रसंगबंदाग्यू नित्यदल्लियू ' अनिलं ' गंधनायकनाद आ वायुविनन्ने तिरस्कारमाडि अवरु श्रीहरियन्नु गानमाडुत्तिद्दरु. हीगे हेळुवदरिंद आ पुरुषरिगे विषयगळ समावेशदिंद चित्तक्षोभ ( मनःसु केडुव ) प्रसंगबंदाग्यादरू भगवद्रतियु होगुवदिल्लवु एंदु सूचितवागुवदु. ई श्लोकदल्लिय ' तु ' शब्ददिंद आ वनदल्लि संचारमाडतक्कवरु मुक्तरू अमुक्तरु एंदु एरडुप्रकारजनरिरुवरु. अदरल्लि मुक्तरिगे पुष्पद सुगंधवायुविनिंद इंद्रियक्षोभवेंब भ्रमवु एंदिगू इल्लवु. अमुक्तरिगे क्वचित् कालदल्लि चित्तक्षोभवागुवदुंटु एंदु तात्पर्यवु हेळल्पडुवदु. वैकुंठलोकदल्लि होगि संचारमाडतक्कवरु मुक्त जनरू हागू अमुक्तराद अधिकारदल्लिद्द देवतिगळे मोदलाद केलवरु अदरल्लि अमुक्तजनरिगे क्वचित् भ्रमवुंटु मुक्तजनरिगे एंदिगू इल्लवु ' एंब प्रमाणानुसारवागि अर्थवु हेळल्पट्टदे. ॥ १७ ॥

तत्रत्यानां भक्तानां हरेश्चरणारविंदार्चनावसरः कदाचिविति तत्राह पारावतेत्यादिना । भृंगाधिपे हरिकथामनुगायमाने सप्तस्वरसमाहारेण गातुमुपक्रांते सति तद्गानमनुकूजद्भिः पारावतादिपक्षिगणैश्चिरमात्रया त्रिमात्रादिस्वरेण कोलाहले कलकललक्षणे कूजने विरचिते सत्ययं समयइति मत्वा यस्मिन् वैकुंठे तुलसीदले मंदारादिपुष्पराशौ च भक्तैरंघ्रिमूलेऽर्चिते सति तुलसिकाभरणेन तुलसीमालाधारिणा हरिणान्यपुष्पदलमपहाय हस्तेन तुलसीदलमुद्धृत्य तद्गंधे घ्राणेनार्चिते संभाविते सति मंदाराद्याः सुमनसो मंदारादिशब्दवाच्यास्तद्देवतास्तस्यास्तुलस्यास्तपोबहुमानयंति गंधार्थं कृतमितिशेषः । " तिरश्चीनास्थावराश्च सर्वेज्ञानाद्विकुंठगाः । अमुक्तामुक्तिमायांति नियमात्कर्मणः क्षय " इति वचनात् ज्ञानान्मुक्तत्वात्तत्समयज्ञानं गानं प्रशंसनं च भृंगाधिपानां तिर्यचां मंदारादीनां स्थावरणां च युज्यते यद्वा तुलसिकाभरणेन तुलसिकाभरणे कृते सति गंधार्थं तपो बहुमानयंति गंध इति तादर्थ्ये सप्तमी ऊर्णं करवीरपुष्पं नागो नागकेसरः पुन्नागः सुरकर्णिकारः ॥ १८ ॥१९॥

**पारावतान्यभृतसारसचक्रवाकदात्यूहहंसशुकतित्तिरबर्हिभिस्तत् ॥ कोलाहले विरचिते चिरमात्रयोच्चैर्भृंगाधिपे हरिकथामनुगायमाने ॥ १८ ॥ मंदारकुंदकुरबोत्पलचंपकोर्णपुन्नागनागबकुलाम्बुजपारिजाताः ॥ गंधेर्चिते तुलसिकाभरणेन तस्यायस्मिंस्तपः सुमनसो बहुमानयंति ॥ १९ ॥ ॥ ॥ ॥ ॥ ॥**

आ वैकुंठलोकदल्लिद्द भगवद्भक्तरु श्रीहरियन्नु पूजिसुवकालव यावदेंदरे हेळुवरु— आ वैकुंठलोकद मनोहरवाद वनदल्लिद्द श्रेष्ठवाद भ्रमरवु सप्तस्वरारोहणावरोहणक्रमदिंद श्रीहरिकथेयन्नु गायनमाडलारंभिसलु, आ गायनक्के अनुकूलवागि, पारिवाळगळू ' अन्यभृत् '= कोकिलगळू, सारसपक्षिगळू चक्रवाकपक्षिगळु ' दात्यूहः ' चातकपक्षिगळू हंसपक्षिगळू गिळिगळू तित्तिरिएंब पक्षिगळू नविलुगळू ई एल्ल पक्षिगळू एककालक्के ' चिरमात्रया ' त्रिमात्रामोदलाद सुस्वरदिंद ' कोलाहले ' कलकललक्षणउच्चध्वनिमाडुत्तिरलू इदे समयवेंदु तिळिदु ' यस्मिन् ' वैकुंठदल्लि एल्ल श्रीहरिभक्तरु हरिकथेगळन्नु गानमाडुत्त श्रीहरिय पादारविंदके तुलसीदलगळन्नू मंदारमोदलाद पुष्पसमूहगळनू अर्पिसि पूजिसुत्तिरलु ' तुलसिकाभरणेन तस्याःगंधे अर्चिते ' तुलसीमालेयन्नु धारणमाडिद श्रीहरियु एरडने पुष्पदळगळन्नु बिट्टु तुलसीदलवन्नु एत्ति आ तुलसिय गंधवन्नु मूसिनोडि श्लाघनमाडुत्तिरलु, मंदार कुंद कुरबक ( रक्तशेवंतिका ) कुमुद चंपक ( संपिगी ) करवीर नागकेसर बकुल-कमल पारिजात ई पुष्पगळ स्वरूपदिंद मुक्तिहोंदिद जीवरु, आ तुलसिय गंधवन्नु नम्मेल्लरगिंत श्रेष्ठवागि श्रीहरियु गंधर्वाकरिसवेकादरे अंथ उत्तम सुगंधवु तन्नल्लि

उंटागुवंते ई तुलसियु एष्टु तपःसु माडिद्दाळु? एंदु आ तुलसिय तपःमनु बहुमन्मानमाडुवरु — आदरे पुष्पजीवरिगे तुलसियमेले मात्सर्यवु याके उंटागलिल्लवेंदरे ' पशुपक्षिजातिय जीवगळु वृक्षलतामोदलादजातियजीवगळु मोक्षक्के बरवेकादरे परब्रह्मज्ञानदिंदले मुक्तिगे बंदिरुवरु तम्म प्रारब्धकर्मक्षयवादनंतरदल्लियै अमुक्तरागिद ई एल्ल वृक्षमोदलाद जातिय जीवरु मोक्षक्के बरुवरु. ' एंदु प्रमाणविद्दकारण इवरेल्लरू ब्रह्मज्ञानदिंदले मोक्षहोंदिदवरादकारण अल्लिद्द भ्रमरगळिगू, एल्ल जातिय पक्षिगळिगू वृक्षगळिगू लतागळिगू आयासमयज्ञानवु एल्लरल्लियू एकस्वरदिंद गानवू श्रीहरिगुणगळ प्रशंसनेयू संभविसुवदु अथवा ' तुलसिकाभरणेन ' श्रीहरियु तुलसिय संबंधवाद आभरणमाडिकोळ्ळुत्तिरलु. गंधे एंब सप्तमीविभक्तिगे गंधद सल्लवागि एंदर्थवु. ॥ १८ ॥ १९

बृहंतः कटितटाः श्रोणीभागाः यासा तास्तथोक्ताः स्मितशोभिमुख्यः स्मितेन शोभमानवक्त्राः स्त्रियः उत्स्मयाद्यैः मंदहासशृंगारादिरसविशेषैः कृष्णे हरावात्मा मनो येषां ते तथा तेषां येषां रजो रागं न आदधुर्नाकुर्वस्तेषां विमानैर्यद्वैकुंठाख्यं स्थानं संकुलं व्याप्तं मंचस्थपुरुषन्यायेन विमानानि विशिनष्टि हरीति । हरिपदयोरानतिमात्रेण तृप्तैः कृतार्थावयमिति भावद्भिः यद्वा हरिपदे व्योम्नि आनतिमात्रतृप्तैःसंचरणमात्रप्रयोजनैः वैदूर्यं पद्मरागं मरकतमिंद्रनीलं हेम सुवर्णं एतैर्विराजितैः ॥ २० ॥

**तत्संकुलं हरिपदानतिमात्रतृप्तैर्वैदूर्यमारकतहेममयैर्विमानैः ॥ येषां बृहत्कटितटाः स्मितशोभिमुख्यः कृष्णात्मनां न रज आदधुरुत्स्मयाद्यैः ॥ २० ॥ ॥ ॥ ॥ ॥ ॥**

दोड्ड दोड्ड नितंबप्रदेशगळुळ्ळ मंदहासदिंद मनोहरवाद मुखवुळ्ळ सुंदरस्त्रीयरु तम्म मंदहासमोदलादशृंगाररसविशेषगळिंद, श्रीकृष्णनल्लि मनःसुळ्ळ याव सत्पुरुषरिगे मनोविकार वलुंटुमाडुवदिल्लवो, अंथ महापुरुषर; श्रीहरिपादगळल्लि नमस्कारमाडुवमात्रदिंदले तृप्तराद स्त्रीपुरुषरिंद युक्तवाद, ( अथवा आकाशदल्लि संचारमात्र ) प्रयोजनवुळ्ळ स्त्रीपुरुषरिंद युक्तवाद ) पद्मराग मणिगळू इंद्रनीलमणिगळू भं ( वं ) गारदल्लि कट्टल्पट्ट प्रकाशमंतवाद विमानसमूहगळिंद आ वैकुंठलोकवु निबिडवागि तोरुत्तित्तु ॥ ' हरिपदानतिमात्रतृप्तैः ' एंब पदवु विमानक्के विशेषणवाद्दरिंद हरिपादक्के नमस्कार मात्रदिंद तृप्तवाद विमानगळिंद एंदरे अर्थवु संभविसुवदिल्लवादकारण ' मंचाःक्रोशंति ' एंबल्लि मिच्चिगे मेल्लिद्द पुरुषरु ओदरुवरु एंदु ह्यागे अर्थवो आ प्रकार इल्लियादरू हरिपादक्के नमस्कारमात्रदिंद तृप्तराद जनरिंद युक्तवाद विमानगळेंदु लक्षणादिंद अर्थमाडतक्कद्दु. ॥ २० ॥

वैकुंठस्येतोधिकं माहात्म्यं किं वक्तव्यमिति भावेनाह श्रीरिति अन्येषामुपासकानामस्मदादीनां उपासनादिप्रयत्ना यस्या अनुग्रहणेऽनुग्रहार्थं स्युः सा नूपुरालंकृतचरणारविंदं क्वणयती शब्दयंती जननादिसमस्तदोषैर्मुक्ता रूपिणी सौंदर्यसागरमूर्तिः श्रीर्यत्र वैकुंठे हरिवेश्मनि अंतःपुरे उपेतहेम्नि सुवर्णखचिते स्फटिककुडचे नीलांबुजेनावस्करधूननसाधनस्थानीयेन संमार्जयंतीव संलक्ष्यत इत्यन्वयः कुडयं गृहभित्तिः ॥ २१ ॥

**श्रीरूपिणी क्वणयती चरणारविंदं लीलांबुजेन हरिसद्मनि मुक्तदोषा ॥ संलक्ष्यते स्फटिककुड्यउपेतहेम्नि संमार्जतीव यदनुग्रहणेऽन्ययत्नाः ॥ २१ ॥ ॥ ॥ ॥ ॥ ॥**

वैकुंठलोकद इदक्कू हेच्चिनमहात्मेयु एनु हेळतक्कदु? एंब अभिप्रायदिंद हेळुवरु— श्रीहरियन्नु उपासने माडतक्क नावे ( ब्रह्मादिगळे ) मोदलादवरिगे उपासनेमोदलाद प्रयत्नगळु यावाकिय अनुग्रहदिंद श्रीहर्यनुग्रहक्के कारणवागुववो आ, गेज्जिगळिंद अलंकृतवाद पादगळिंद क्वणक्वण एंब ध्वनिमाडुव, जननमोदलाददोषगळिंद सर्वदा मुक्तळाद सौंदर्यक्के मूलस्थानस्वरूपळाद साक्षात् रमादेवियु; याव वैकुंठलोकदल्लि सुवर्णखचितवाद स्फटिकमयवाद गोडे ( ग्वाडि ) गळिंद मनोहरवाद श्रीहरिमंदिरदल्लि करेकमलगळ कसबोरेयन्नु हिडिदुकोंडु कसबळियुवळंते तोरुवळु. ॥ २१ ॥

यंग हे देवाः यद्यत्र प्रेष्याभिर्दासीभिरन्विता निजवने कमलवने तुलसीभिरीशमभ्यर्चती रूपिणी सौंदर्यसागरमूर्तिः श्रीरमृतामलाप्सु विद्रुमरत्नबद्धतटासु वापीषु सुखावतारकूलासु प्रतिबिंबितं स्वलकं शोभनकुंतलमुन्नसं किंचिदुन्नतनासिकं वक्त्रमुद्वीक्ष्य हरिणेदं चुंबितमित्यमतेत्यन्वयः ॥ २२ ॥

**वापीषु विद्रुमतटास्वमलामृताप्सु प्रेष्यान्विता निजवने तुलसीभिरीशं ॥ अभ्यर्चती स्वलकमुन्नसमीक्ष्य वक्त्रमुच्छेषितं भगवतेत्यमतांग यच्छ्रीः ॥ २२ ॥ ॥ ॥ ॥ ॥ ॥ ॥**

हे देवतिगळिरा— याव वैकुंठलोकदल्लि बहुमंदिदासीगणयुक्तळागि तन्न निवासस्थानवाद कमलवनदल्लि तुलसीदलगळिंद श्रीहरियन्नु पूजिसतक्क सौंदर्यसागरमूर्तियाद श्रीरमादेवियु अमृतदंते रुचिकरवाद निर्मलोदकपूर्णवाद ( विद्रुमतटासु—इल्लि विद्रुमवेंदरे हवळवेंदर्थवल्लवु ओंदुजातिय देवलोकद रत्नवेंदर्थवु ) सुत्तलू रत्नखचितवाद कट्टेयुळ्ळ, सुखदिंद इळियुवदक्के होंल्युवंथ सोपानगळुळ्ळ सरोवरगळल्लि इळियुवाग्ये आ सोपानगळल्लि प्रतिबिंबितवाद ( नेरळुबिद्द ) मनोहरवाद उंगुरुगूदलुगळिंद मंडितवाद, स्वल्पु एत्तरवागि प्रकाशमंतवाद नासिकादिंद शोभिसुव तन्न मुखमंडलवन्नु कंडु श्रीहरियिंद ई मुखवु चुंबितवादद्देंदु तिळिदळु. ॥ २२ ॥

१. शब्दयंती शनैरितस्ततः पर्यटंतीति यावत् ॥– ( **या.** ) २. मुक्तश्चांचल्यलक्षणदोषो यया सा इतरसद्मसु चांचल्यं न तया कुत्रापि मुक्तमितिभावः ॥– ( **या.** ) ३. अयंभावः हरिसद्मनि लीलांबुजं भ्रामयंती शनैश्चरंती श्रीः स्फटिकमये स्वच्छे कुड्ये प्रतिबिंबिता भवति तदा लोकैस्तत्प्रतिबिंबं दृष्ट्वा श्रीरेव संमार्जनीस्थानीयेनांबुजेन कुड्यं संमार्जयति शोधयतीत्येवं सल्लक्ष्यत इति वस्तुतः संमर्जनाभावादिवशब्दः ॥– ( **या.** ) ४. इदं मदीयं अतिसुंदरं सर्वलक्षणोपेतं वक्त्रं भगवता उच्छेषितं उच्छिष्टं कृतं चुंबितमिति यावत् अहो अहं धन्या इत्यमत अमंस्त मेने ॥– ( **या.** )

स्वर्गादीनामसुरादिगम्यत्वादस्य तदभावात्ततोतिशयमाहात्म्यमस्तीति भावेनाह यन्नव्रजंतीति अघभिदः संसारदुःखहेतुभूतपापानां भेत्तुः कृष्णस्य रचनानां बालक्रीडादिचरितानां जगत्सृष्ट्यादिकर्मणां वा अनुवादाः न विद्यंते येषां ते अरचनानुवादा असुरा यत्स्थानं न व्रजंति अनुवादः श्रवणमननादिलक्षणः येचान्यविषयाः मतिघ्नीः यथार्थज्ञाननाशनीः कुकथाः कुत्सितरतिवर्णनादिरूपाः कथाः शृण्वंति ते च यत्स्थानं न यांति तासां कथानामेतत्स्थानप्राप्तिप्रतिबंधकत्वमेव न फलं किंतु तमः प्रापकफलमपीत्याह याइति । हतभगैर्विनिष्टभक्त्यादिभाग्यैर्नृभिः श्रुताः याः कथास्ताः अशरणेषु निराश्रयेषु तमस्सु क्षिपंति आत्तवीर्याः तमःपातने बव्हभ्यासेन समुत्पन्नशक्तयः हंत अहो कष्टं तुशब्दो अधःपतितानां तारतम्यद्योतकः ॥ २३ ॥

**यन्नव्रजंत्यघभिदोरचनानुवादाः शृण्वंति येन्यविषयाः कुकथा मतिघ्नीः ॥ यास्तु श्रुता हतभगैर्नृभिरात्तवीर्यास्तास्तान् क्षिपंत्यशरणेषु तमःसु हंत ॥ २३ ॥ ॥ ॥ ॥ ॥ ॥**

स्वर्गमोदलाद लोकगळल्लि असुररु बरुवदुंटु, ई वैकुंठदल्लि अवर संबंधवे इल्लवु. आद्दरिंद ई लोकवु अनुगळकित अतिशयमहात्म्येवुळ्ळद्देंदु हेळुवरु— संसारदुःखक्के कारणवाद पापगळन्नु नाशमाडतक्क, श्रीकृष्णन बालक्रीडामोदलाद चरित्रेगळन्नु, अथवा सृष्टिस्थितिमोदलाद महिमेगळन्नु, यारु [ बायिंद ] अनुवाद माडुवदिल्लवो, आ असुररु आ वैकुंठलोकक्के प्रवेशमाडुवदिल्लवु. इल्लि अनुवादवेंदरे बायिंद वर्णनेमात्रवेंदल्लवु. श्रवणमननमोदलाद यावत्तू उपामनेयंदर्थवु. मत्तू श्रीहरिय होर्तु एरडने विषयवन्नु हेळतक्क, यथार्थज्ञानवन्नु नाशमाडतक्क,, कुच्छितवाद मन्मथोद्रेकवागतक्क विषयगळन्नु वर्णिसतक्क, दुष्टकथेगळन्नु यारु केळुवरो, आ जनरु सह याव वैकुंठलोकक्के बरुवदिल्लवु. आ दुष्ट कथेगळन्नु केळुवदरिंद वैकुंठलोकप्राप्तिगे प्रतिबंधकमात्रवे, फलवेंदल्ल अदरिंद अंधतमःसु कूडा आगुवेंदु हेळुवरु-- भक्तिमोदलाद भाग्यहीनराद जनरिंद याव दुष्ट कथेगळु केळल्पट्टिरुववो अवु, बहुसारेकेळि अभ्यासपाठवदिंद तमःसिनल्लि केडवुवदक्के पटुतरवाद सामर्थ्यवुळ्ळवागि दुःखविडिसतक्कवरारू इल्लद तमःसिनल्लि आ जनरन्नु केडवनु. इल्लिय ' तु ' शब्दवु आ तमःसिनल्लि बिद्दवरोळे तारतम्य उंटेंदु तोरिसुवदु. ॥ २३ ॥

केचिज्ज्ञानसाधनयोग्यां मनुष्ययोनिं प्राप्यापि तत्साधनं न कुर्वंति तत्र किंकारणमित्याशंक्यासुरत्वमितिभावेनाह येभ्यर्थितामिति ये पुरुषा नोऽस्माकमभ्यर्थिता ज्ञानादिप्राप्तियोग्यत्वादाकांक्षितां नृगतिं मनुष्ययोनिं प्राप्य यत्र यस्या नृगतौ सहधर्मे धर्मेणसहवर्तमानं तत्त्वविषयं ज्ञानं च प्रपन्नास्ते अमुष्य हरेर्जगति वितततया मायया बंधकशक्त्या धर्मज्ञानप्राप्तावयोग्यत्वेन संमोहिताः न भगवत आरानं कुर्वंति न वितरंत्यर्थिभ्यो नोपदिशंत्यतो धर्मज्ञानादिवर्जिता असुरत्वात्ते न मनुष्या इतीममर्थं ध्वनयति नन्वित्यनेन ॥ २४ ॥

१. आत्तं स्वीकृतं श्रोतॄणां वीर्यं पुण्यं याभिरितिवा ॥–( या. ) २. तेषां मानुषं जन्म व्यर्थं भवतीतिभावः ॥– ( या. )

**येभ्यर्थितामपि च नो नृगतिं प्रपन्ना ज्ञानं च तत्त्वविषयं सहधर्म यत्र॥ नाराधनं भगवतो वितरंत्यमुष्य संमोहिता वितततया ननु मायया ते ॥ २४ ॥ ॥ ॥ ॥ ॥**

केलवरु ज्ञानसाधनमाडुवदक्के योग्यवाद मनुष्यजन्मवन्नु होंदिदाग्यादरू आ मोक्षक्के कारणवाद ज्ञानवन्नु दोरकिसिगोळ्ळुवदिल्ल. अदु एनु कारणवेंदरे अवरु असुररेंब अभिप्रायदिंद हेळुवरु— यावपुरुषरु नम्मंथवरिगू (ब्रह्मादिगळिगू) सह ज्ञानमोदलादद्दु दोरेयुवदक्के योग्यवादकारण अपेक्षितवाद मनुष्यजन्मवन्नु होंदि याव मनुष्यजन्मदल्लि धर्मदिंदसहितवागिरतक्क भगवत्तत्वविषयकज्ञानवन्नु होंदुवदिल्लवो ( होंदिल्लवो ) आ पुरुषरु, ईश्रीहरिय जगत्तिनल्लि हरवलट्ट माया एंब बंधकशक्तियिंद बद्धरागि धर्मज्ञानगळु दोरेयुवदक्के अयोग्यराद्दरिंद अत्यंत मोहितरागि श्रीहरिय आराधनेयन्नु माडुवदिल्ल. योग्यराद याचकरिगे तम्म शक्त्यनुसार द्रव्यदानवन्नु माडुवदिल्लवु मत्तू एरडनेजनरिगे द्रव्यदानविषयक्के बोधवन्नु माडुवदिल्लवु. ई प्रकार धर्मज्ञानमोदलादवुगळिंद हीनरादकारण अवरु असुररे होर्तु मनुष्यरल्ल. एंब ई अर्थवु ' ननु ' एंबदरिंद प्रकट माडल्पडुवदु. ॥ २४ ॥

संतो देवप्रकृतएव भगवत आराधनं कृत्वा तज्ज्ञानेन यत्र स्थितं हरिं प्राप्नुवंतीत्याह यत्रेति ते यत्र नोऽस्माकं उपरि स्थितं वैकुंठस्थितं हरिं प्रयांतीत्यन्वयः । ये अनिमिषां देवानामृषभस्य स्वामिनो हरेरनुवृत्त्या निरंतरसेवया दूरेयमाः दूरीकृतयमलोका अतएव सर्वैः स्पृहयणीयशीलाः सुयशसो भर्तुर्हरेर्गुणगणानां मिथः कथने योनुरागः तस्मादुत्पन्नं यद्वैक्लव्यं पारवश्यं तन्निमित्तेन जाता या बाष्पकलानंदाश्रुधारा तया पुलकीकृतान्यंगानि शरीरतदवयवा येषां ते तथोक्ताः सुयशस इति भागवतानां विशेषणंवा वैकुंठादप्युपरि शिवलोक इति केचिदाचक्षते तस्याप्रस्तुतत्वादनुपपन्नत्वादिति हेतुद्वयं हीत्यनेन सूचयति ॥ २५ ॥

**यत्र व्रजंत्यनिमिषामृषभानुवृत्या दूरे यमाह्युपरि नः स्पृहणीयशीलाः ॥ भर्तुर्यशः सुयशसः कथनानुरागवैक्लव्यबाष्पकलया पुलकीकृतांगाः ॥ २५ ॥ ॥ ॥ ॥ ॥ ॥**

सज्जनरु देवप्रकृतियुळ्ळवरु, अवरु श्रीहरिय आराधनेयन्नु माडि आ परमात्मन अपरोक्षज्ञानदिंद याव वैकुंठलोकदल्लिद्द श्रीहरियन्नु होंदुवरेंदु हेळुवरु— आ जनरु नम्म सत्यलोकद मेलेयमेले इद्द वैकुंठवासियाद श्रीहरियन्नु होंदुवरु— अवरु योरेंदरे— यावजनरु देवतेगळिगे स्वामियाद श्रीहरिय निरंतर सेवेयिंद यमलोकवन्नु दूरमाडिरुवरु. आद्दरिंदले सर्वरिंदलू स्पर्धे माडिशिगोळ्ळुवदक्के तक्क गुणवुळ्ळवरागिरुवरु. मत्तू उत्तमयशस्वियाद श्रीहरिय गुणगळन्नु परस्पर ओब्बरिगोब्बरु हेळबेकु, केळबेकु, एंबविषयक्के अपेक्षेयुळ्ळवरागि आ हेळकेळुवदरिंद शरीरवु परवशवागि अदरिंद उत्पन्नवाद आनंदबाष्प ( संतोषदकण्णीरु ) धारागळिंद मैमेले रोमांचगळु उब्बुववो आ जनरे वैकुंठक्के बरतक्क देवप्रकृतियुळ्ळवरु ' सुयशसः ' एंब पदवु भगवद्भक्तरिगादरू विशेषणवागुवदु. वैकुंठलोकदमेले शिवलोकवुंटेंदु केलवरु हेळुवरु. आ मातु याव प्रसंगदल्लियू संबंधिसुवदिल्लवु. मत्तू योग्यवागियू तोरुवदिल्लवु. ई एरडू कारणगळु ' हि ' एंबदरिंद सूचिसल्पडुववु. ॥ २५ ॥

प्रकृतमनुसरति तद्विश्वगुर्वधिकृतमिति । अथ मुनयः परां मुदमापुरित्यन्वयः भगवत्समाधिना नित्यतृप्तानां मुनीनां कादाचित्कमोदप्राप्तौ किंकारणमुच्यते तत् विकुंठस्थानमुपेत्य कीदृशं । " उतामृतत्वस्येशानोयदन्नेनातिरोहति " इत्यादिना यो मुक्तामुक्तप्रपंचाधारत्वेन श्रुतः सचासौ विश्वगुरुस्तेन मुक्तामुक्तप्रपंचगुरुणा हरिणाधिकृतं विशेषतः स्वामित्वेनाभिमतं भुवनशब्देन तत्स्थाः पुरुषाः लक्ष्यंते तैः शिवलोकोत्तमतया वंद्यं दिव्यमप्राकृतं विचित्राणि नानावर्णानि विबुधाग्र्याणां विमानानि शोचयति दीपयति इति विचित्रविबुधाग्र्यविमानशोचिः शुचिदीप्तावितिधातुः अपूर्वं पूर्वमदृष्टं योगमायाबलेन भगवदुपासनालब्धज्ञानबलेन प्राप्येत्यर्थः ॥ २६ ॥

**तद्विश्वगुर्वधिकृतं भुवनैकवंद्यं दिव्यं विचित्रविबुधाग्र्यविमानशोचिः ॥ आपुः परां मुदमपूर्वमुपेत्य योगमायाबलेन मुनयस्तदथो विकुंठं ॥ २६ ॥**

चतुर्मुखनु ईप्रकार वैकुंठलोकवन्नु वर्णिसि प्रारंभवाद कथासंगतियन्नु हेळुवनु– इष्टागुत्तिरलु हे देवतिगळिरा आ सनकादिगळु अत्यंत संतोषहोंदिदरु. श्रीहरियन्नु एकाग्रचित्तदिंद ध्यानमाडि निरंतर तृप्तियन्नु होंदतक्क आ मुनिगळिगे एंदादरोंदिन संतोषदेरेयुवदक्केनुकारणवेंदरे अवरु आ वैकुंठलोकक्के बंदद्देकारणवु आ वैकुंठवु उतामृतत्वस्येशानो यदन्नेनातिरोहति अन्नदिंद उपजीवितरागिरतक्क अमुक्तजीवसमूहवन्नु यावकारण श्रीहरियु मीरिद्दु आ अमुक्तजीवरिगे मोक्षवन्नु कोट्टाग्यू अवरु तन्न अधीनरागिये इरुवरेंदु ( अवर उपासनानुगुणवागि ) मोक्षवन्नु कोट्टु आ मुक्तरिगू अधीश्वरनागि वैकुंठलोकदल्लिरुवनु; एंब इवे मोदलाद श्रुतिगळिंद मुक्तामुक्तप्रपंचक्के मुख्याश्रयनेंदु होगळिमिगोळ्ळुवदरिंद विश्वगुरुवेनिसिगोंड श्रीहरियिंद परिपालितवागि आ वैकुंठलोकवु श्रीहरियराजधानियेनिसिगोळ्ळुवदु. मत्तू शिवलोकमोदलाद सकललोकगळल्लिद्द जनरिंद मुख्यवागि नमस्कृतवाददु. प्राकृतवाद सत्वादिगुणगळ संपर्कविल्लद्दु, विचित्रवर्णगळिंद शोभिसतक्क सकलदेवतिगळ विमानगळन्नु प्रकाशमंतमाडुव ( मत्तू याव लोकवु एष्टोसारे होगि नोडिबंदु पुनः होदरे मत्ते एंदू नोडदे इद्द लोकदंते विचित्रवागिये तोरुवदु. ) ई सनकादिगळु एंदू नोडदे इद्दद्दु. इंथ वैकुंठलोकवन्नु कुरितु श्रीहरियन्नु बहुदिवस उपासनामाडि संपादिसिद ज्ञानबलदिंद, बंदु आ सनकादिमुनिगळु अत्यंतआनंदपट्टरु ॥ २६ ॥

मुदमुपेत्य बहिरेवावतिष्ठंत उतांतराविशन् आविश्य च किं चक्रुरिति तत्राह तस्मिन्निति। तस्मिन्वैकुंठे षट्कक्ष्याः गोपुरद्वाराण्यतीत्य तत्रासज्जमानाः अनिवार्यमाणाः सप्तमायां कक्ष्यायां स्थितौ देवावचक्षतापश्यन्नित्यन्वयः केयूरादिभिर्विटंकोऽलंकृतो वेषो ययोस्तौ तथोक्तौ ॥ २७॥

१. पालितं ॥–( या. ) २. पुनः पुनर्दर्शनेपि पूर्वादृष्ट मिवस्थितं ॥– ( या. )

**तस्मिन्नतीत्य मुनयः षडसज्जमानाः कक्ष्याः समानवयसस्त्वथ सप्तमायां ॥ देवावचक्षत गृहीतगदौ परार्ध्यकेयूरकुंडलकिरीटविटंकवेषौ ॥ २७ ॥**

आ सनकादिगळु वैकुंठवन्नुनोडि संतोषबट्टु होरगे निंतरो अथवा ओळगेबंदरो. ओळगे बंदु एनु माडिदरेंबदन्नु हेळुवरु— आ सनकादिगळु नाल्वरु ( ऐदुवर्षद हुडुगरंते ) समानवादवयःसुळ्ळवरागि आ वैकुंठलोकवन्नु प्रवेशमाडि यारदू प्रतिबंधकविल्लदंते आरु गोपुरद्वारगळन्नुदाटि; आ मेले एळने गोपुरद्वारदल्लि. निंतिद्द, अमौल्यवाद केयूर ( भुजगळ मेले इरतक्क भूषणगळु ) गळिंदलू कर्णकुंडलकिरीटगळिंदलू अलंकृतवाद वेषवुळ्ळवरागि कैयल्लि गदेयन्नु धरिसिद इब्बरु देवतिगळन्नु कंडरु. ॥ २७ ॥

तयोर्भावं वर्णयति मत्तेति असितानां श्यामानां बाहूना चतुष्टयस्य मध्ये वक्षसि विन्यस्तया मत्ता द्विरेफा भृंगा यस्यां सा मत्तद्विरेफा वनमालिका वनमाला तया निवीतौ परिवृतौ कुटिलया वक्रया वक्रस्थितया भ्रुवा सह स्फुटं निर्गतेन रक्तेक्षणेन रक्तांतकटाक्षनिरीक्षणेन मनाक् किंचिद्रभसं कोपं दधानौ अनुसंधानं कुर्वंतौ अंतःप्रविशतोनिर्गच्छतश्च जनान् ज्ञात्वा तिष्ठत इत्यर्थः ॥ २८ ॥

**मत्तद्विरेफवनमालिकया निवीतौ विन्यस्तयाऽसितचतुष्टयबाहुमध्ये ॥ वक्रभ्रुवा कुटिलया स्फुटनिर्गतेन रक्तेक्षणेन च मनाग्रभसं दधानौ ॥ २८ ॥**

आ एळने द्वारदल्लिद्द आ देवतिगळ मुखलक्षणवु ह्यागेंतेंदरे हेळुवरु— आ बागिलल्लि निंतिद्द जय–विजयरेंब द्वारपालकरु इंद्रनीलमणियंते श्यामवर्णयुक्तवाद नाल्कु भुजगळ मध्यभागवाद वक्षस्थलदल्लि धारणमाडल्पट्ट, झंकारमाडतक्क भ्रमरगळु मकरंद रसवन्नास्वादनमाडतक्क कमलगळ वनमालेयिंद भूषितरागि, मोट्टादहुब्बुगळिंद सहितवाद रक्तवर्णवे कोनेभागदल्लिवुळ्ळ मिट्टुगण्णिनिंद नोडुत्त स्वल्पु कोपानुसंधानवन्नुमाडुत्त, ओळगे प्रवेशमाडतक्क जनरन्नु विचारिसुत्त निंतिद्दरु. ॥ २८ ॥

ये मुनयः सर्ववस्तुषु स्वस्य स्वतंत्रस्य हरेर्दृष्ट्यांतर्यामित्वदर्शनेन अविषया निस्पृहा अतएव विगताभिशंकाः अविहताः अप्रतिहतगतयः सर्वत्र संचरंति हि यस्मात्तस्मात्ते मुनयः तावपृष्ट्वा मिषतोः पश्यतोस्तयोर्द्वारि तथाप्रविविशुरित्यन्वयः यथा पूर्वाः षट्द्वारः प्रविविशुः निशंकतया कीदृशीर्द्वारः या आरपुटवज्रकपाटिका आरेणं पित्तलेनालंकृतं पुटं यस्याः सा आरपुटवज्रशिलया कृतकपाटिका आरपुटवज्रकपाटिका यासां तास्तथा। " लोहमय्यारकूटंस्यात्पित्तलंचारमस्त्रियामि - " ति यादवः ॥ २९ ॥

१. प्राकारद्वाराणि –॥ (या.) (या.) २. सुवर्णनवा ॥–( या. )

द्वार्येतयोर्निविविशुर्मिषतोरपृष्ट्वा पूर्वा यथारपुटवज्रकपाटिका याः ॥ सर्वत्र तेह्यविषया मुनयः स्वदृष्ट्या ये संचरंत्यविहता विगताभिशंकाः ॥ २९ ॥ ॥ ॥ ॥ ॥ ॥

आ मनकादिमुनिगळु सकलवस्तुगळल्लि स्वतंत्रनाद श्रीहरिये अंतर्नियामकनागिरुवनेंदु नोडुत्त, निस्पृहरागि ( विषयापेक्षे इल्लदे ) आहरिंदले याव विषयदल्लियू संदेहविल्लदे, एल्लि तिरुगाडिदरू यारदू प्रतिबंधकविल्लदे सर्वत्रदल्लियू संचरिसुत्तिद्दरु. आद कारण एळने गोपुरदल्लिद्द आ इब्बरू द्वारपालकरु ई मुनिगळु प्रवेशमाडुवदन्नु नोडुत्तिरलागि, अवरन्नु केळदे आरपुटवज्रकपाटिका याः ' ओंदु विलक्षणजातिय हित्तालिय ( अथवा बंगारद ) कट्टगळुळ्ळ वज्रशिलगळिंद निर्मितवाद कपाटिका ( फडुकु–जोड्बागिलु ) गळुळ्ळ ( अप्रतिमवाद ) हिंदिन आरु बागिलगळन्नु ह्यागे संदेहविल्लदे दाटि बंदिद्दरो, अदे प्रकारवे प्रवेशमाडिदरु. लोहमयवाददक्के आरकूटवेंतलू हित्तालिगे आरवेंतलू अन्नुवरु. आरं एंब शब्दवु स्त्रीलिंगद होर्तु २ लिंगवू आगुवदु एंदु यादवकोशवुंटु ॥ २९ ॥

ततः किमभूदिति तत्राह तानिति । वातो वायुरेव रशना वस्त्रं येषां ते तथा तान् कुमारानित्युक्तं विवृणोति दशार्धवयसइति । दृष्ट्वा पंचवर्षान् विदितात्मतत्त्वान् ज्ञातपरमात्मस्वरूपान् वेत्रेण यष्ट्या स्खलयतां प्रवेशप्रतिरोधं चक्रतुः अतदर्हणान् स्खलनायोग्यान् तेजस्तेषां प्रभावं विहस्याऽगणय्य तत्र निमित्तमाह भगवदिति भगवतो हरेः प्रतिकूलं विरुद्धं शीलं ययोस्तौ तथा तौ " जयस्य विजयस्यापि कदाचिद्ब्रह्मशापतः । कृष्णावतारपर्यंतं प्रातिकूल्यंचजायत " इतिवचनेन शापनिमित्तं प्रातिकूल्यं सावधिकं चेति ज्ञायते अन्यथा तयोस्तत्रावस्थानमेव न युज्यते रजआद्यभावस्योक्तत्वात् ॥ ३० ॥

तान्वीक्ष्य वातरशनांश्चतुरः कुमारान्वृद्धान्दशार्धवयसो विदितात्मतत्वान् ॥ वेत्रेण चास्खलयतामतदर्हणांस्तौ तेजो विहस्य भगवत्प्रतिकूलशीलौ ॥ ३० ॥ ॥ ॥ ॥ ॥ ॥



मुंदेनायितेंदरे हेळुवरु— गाळिये वस्त्रवागियुळ्ळ अंदरे दिगंबरराद वयोवृद्धरादाग्यू हुडुगरागि सर्वदा ऐदुवरुषदवरंते तोरुत्तिद्दु श्रीहरिय स्वरूपज्ञानवुळ्ळवरागिद्द आ सनकादिनाल्वरु ऋषिगळन्नु आ जयविजयरु नोडि श्रीहरिगे विरुद्धस्वभाववुळ्ळवरादकारण, प्रतिबंधके योग्यरागदिद्द आ ऋषिगळन्नु अवर तपोबलवन्नु लक्षिसे नरदे तम्म कैय्यलिद्द बेत्तदिंद नीवु ओळगे

१. सप्तमायां द्वारि ॥– ( या. ) २. अनादृत्येतियावत् ॥– ३. नग्नानिति यावत् ॥– (या.) ४. वस्तुतो ॥– ( या. ) ५. तथा प्रतीयमानान् ॥– ( या. ) ६. चशब्दात् द्वारेत्यप्रिग्राह्यं ॥– ( या. ) ७. अहो अत्राप्येतेषां धार्ष्ट्यमित्युपहासः कृतइनिवा ॥– ( या. )

होगकूडदेंदु प्रतिबंधकमाडिदरु. ओळ्ळेदु रजस्तमोगुणगळ संपर्कविल्लद वैकुंठदल्लि श्रीहरिय द्वारपालकरागि अवनिगे विरुद्धस्वभाववुळ्ळवरागि ह्यागिद्दरवरु? एंदरे सर्वदा अवर स्वभाववे भगवद्विरुद्ध वाददेंदल्लवु. ' कदाचित् काल्दल्लि ब्रह्मदेवन शापदिंद– श्रीकृष्णावतारदवरेगे आ जयविजयरिगे भगवद्विरुद्धस्वभाव बुंटागुवदु ' एंदु नारदपुराणवचनविद्ददरिंद आ जयविजयरिगे शापनिमित्तदिंद श्रीहरिय विरुद्धवाद बुद्धियु इंतिष्टु कालदवरेगे इरतक्कदेंदु तिळियुत्तदे, इल्लदिद्दरे रजस्तमोगुणगळ संपर्कविल्लद आ लोकदल्लि इंथ जनरु इरुवदे असंगतवादीतु. ॥ ३० ॥

न्यस्तदंडत्वात्प्रतिषिद्धास्ते तूष्णीं यथागतं ययुः किमत्राह ताभ्यामिति सुष्टु अर्हत्तमाः पूज्यतमाः सुहृत्तमस्य हरेर्दिदृक्षितस्य दर्शनेच्छाया भग्ने विघ्ने सति ईषत्कामानुजेनाल्पकोपेन उपप्लुतानि अतिकलुषीकृतान्यक्षाणि येषां ते तथोक्ताः प्रतिहारपाभ्यामनिमिषेषु देवेषु मिषत्सु निषिध्यमाना ऊचुरित्यन्वयः ॥ ३१ ॥

ताभ्यां मिषत्स्वनिमिषेषु निषिध्यमानाः स्वर्हत्तमाह्यपि हरेः प्रतिहारपाभ्यां ॥ ऊचुः सुहृत्तमदिदृक्षितभंग ईषत्कामानुजेन सहसा त उपप्लुताक्षाः ॥ ३१ ॥ ॥ ॥ ॥ ॥ ॥

दंडिसुवदन्नु परित्यागमाडिद चतुर्थाश्रमिगळादकारण आ मनकादिगळु जयविजयरिंद ओळगे होगगोडदिद्दवरागि सुम्मने बंदहादियन्नु हिडिदु होदरेनु? अंदरे हेळुवरु— अत्यंतपूज्यरादाग्यादरू आ मनकादिगळु तमगे अत्यंत अंतःकरणियाद श्रीहरियन्नु नोडबेकेंब अपेक्षेगे विघ्नवु बरुत्तिरलु, कामद नंतर हुट्टिद स्वल्पु क्रोधदिंद तत्क्षणवे कण्णुकेंपगे माडिकोंडु देवतिगळु नोडुत्तिरलु आ द्वारपालकरिंद निषेधमाडिसिगोळ्ळल्पट्टु ई प्रकार माताडिदरु.— ॥ ३१ ॥

क्रोधाकुलितनेत्रत्वाद्धितं न किंत्वहितमेव तत्कीदृशमूचुरिति तत्राह कोवेति । भगवत उच्चैः परिचर्यया समुन्नतपूजादिसेवया इह वैकुंठे स्वयोग्यं स्थानमेत्य तद्धर्मिणां तस्य हरेर्ध्यानादिधर्मवतां सतां भागवतानामपि मध्ये कः पुमान् विषमस्वभावः शत्रुरयं इदं मित्रमिति तामसशीलंवा इत्यनेनानुपपत्तिं सूचयति भगवद्विषये शंकनीयोस्तीति भवन्निषेधः क्रियत इति तत्राह तस्मिन्निति कुहकयोर्मिथ्यादृष्टिमतोर्युवयोरात्मवत् यथात्मा परिशंकनीयस्तथेह तस्मिन् भगवति विषये परिशंकनीयो विरुद्धस्वभावः कोवास्ति न कोपीत्यन्वयः कुतोनास्तीत्यत आह प्रशांतेति लोके अप्रशांतस्य परेण सहोत्पादितवैरस्य च शंकनीयो दृष्टस्तथा नायं पुरुषेषु प्रशांतत्वात् अनुत्पादितवैरत्वाच्च किंच प्रकृष्टानंदस्वरूपत्वादनुपहतैश्वर्यादिषड्गुणपूर्णत्वात्सर्वशरीरेषु गतत्वादप्रतिद्वंद्वत्वादप्राकृतशरीरत्वाच्चातोस्मिन्निषेधो व्यर्थ इत्यर्थः ॥ ३२ ॥

१. निषेधानर्हा अपीतियावत् ॥– ( या. ) २. अकस्मादेव ॥– ( या. ) ३. युष्मासु भगवद्विषये विषमस्वभावशंकया अयं प्रतिषेधो द्वारपालकयोरावयोर्गुणएवेति शंकायामाह तस्मिन्निति ॥ ॥– ( या. )

दुष्टविषयगळ महवासदिंद दुर्मार्गदल्लिग्तक मनःस्सन्नु ई हिंदेहेळिद मार्गगळिंदलू मत्ते केलवु सदाचरणेयिंदलू मल्लने बुद्धियिंद श्रीहरियल्लि योजने माडबेकु. मत्तू भयग्रस्तनागदे भौतिकवायुवन्नु प्राणायामदिंद जयिसबेकु ॥ ७ ॥ योगाभ्यामदल्लि प्राणवन्नु ह्यागे जयिसबेकेंदरे आ संगनियमन्नु हेळुवरु. योगाभ्याममाडतक्क योगिग मोदलु आमननयविरलेबेकु ' ॐ अचलत्वंचापेक्ष्य ॐ ' एंब ब्रह्मसूत्रद ४ ने फल अध्यायदल्लि इदर विस्तारवु हेळल्पट्टिदे. आप्रकार जि।ामननादवनु शुचिर्भूतवादस्थळदल्लि ( गोमयाक्तिवादल्लि ) ' नात्युच्छ्रितं नातिनीचं चेलाजिनकुशोत्तरं ' एंब गीतोक्तियंते आसनवन्नु मिद्धपडिमि अदरमेले स्वस्तिकासनदिंद शरीरवन्नु अगलाडिमदंते समनागि कुळितु प्राणायामगळिंद योगवन्नु अभ्यासमाडबेकु. ॥ ८ ॥ अदु ह्यागेंदरे—पूरक कुंभक रेचकगळिंद ( पूरकवेंदरे होरगिनवायुवन्नु ओदेनाशिकाद्वारदिंद ओळगे एळकोळ्ळुवदु. कुंभकवेंदरे आ वायुवन्नु शक्त्यनुसारवागि हृदयदल्लि हिडियुवदु. रेचकवेंदरे ओळगिन वायुवन्नु होरगे बिडुवदु. ) भौतिकवायुविन मार्गवन्नु शोधिसबेकु. अथवा मोदलु रेचकवन्नु माडि कुंभकानंतर पूरकवन्नु माडबेकु याव प्रकारदिंदादरू मनःसू वायुवू चंचलवागदंते माडबेकु. ॥ ९ ॥ प्राणायामाभ्यासद फलवन्नु हेळुवरु— वायुवू अग्नियू इवुगळवेगदिंद, कामलपट्ट लोहवु मलिन कश्मलवन्नु ह्यागे बिडुवदो, अदरंतेये प्राणायामगळिंद श्वासजयसिगोड योगिय, मनःस बहु तीव्रदिंद, रजोगुणवन्नु परित्यागमाडुवदु. अंदरे नानु नन्नदेंब अभिलाषेयेल्लव बिट्टु निर्मलवागुवदु. ॥ १० ॥

प्राणायामैरिति रागादिदोषान् किल्बिषान् जन्मांतरसंचितपापानि दुर्जनसंसर्गावाप्तदुरितानि अनीश्वरानैश्वर्यविरोधिनः प्रकृतेः सत्वादिगुणान् ॥ ११ ॥ मनसि विरजसि सति कर्तव्यमाह यदा मनइति यदा मनो विरजं स्यात्तदा भगवतो हरेः काष्ठां पूर्णां मूर्तिं ध्यायेत् नासाग्रेणावलोकनं निरीक्षणं यस्य स तथा ॥ १२ ॥ काष्ठोत्कर्षे सीम्नि दिशीति अभिधानात्काष्ठाशब्दस्य अनेकार्थत्वादत्र विवक्षितः क इत्याशंक्य सर्वगुणोत्कृष्टं भगवद्रूपं विवक्षितमिति तत्र स्वरूपं वक्ति प्रसन्नवदनेति ॥ १३ ॥ लसतः पंकजस्य किंजल्कं केसरस्तद्वत्पीतं कौशेयं वासो यस्य स तथा तं श्रीवत्सो वक्षसि यस्य स तथा तं भ्राजता कौस्तुभेनामुक्ता बद्धा कंधरा यस्य स तथा तं ॥ १४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

**प्राणायामैर्दहेद्दोषान्धारणाभिश्च किल्बिषान् ॥ प्रत्याहारेण संसर्गान् ध्यानेनानीश्वरान्गुणान् ॥११॥ यदा मनः स्वं विरजं योगेन सुसमाहितं ॥ काष्ठां भगवतोध्यायेत्स्वनासाग्रावलोकनः ॥ १२ ॥ प्रसन्नवदनांभोजं पद्मगर्भारुणेक्षणं ॥ नीलोत्पलदलश्यामं शंखचक्रगदाधरं ॥१३॥लसत्पंकजकिंजल्कपीतकौशेयवाससं॥श्रीवत्सवक्षसं भ्राजत्कौस्तुभामुक्तकंधरं॥१४॥**

योगिगु प्राणायामगळिंद, मनःसिनसंबंधवाद ममनेये मोदलाद दोषगळन्नु सुट्टु बिडबेकु. धारणा ( एकाग्रध्यान ) गळिंद जन्मांतरदल्लि संग्रहमाडिद पापगळन्नु कळकोळ्ळबेकु. प्रत्याहारदिंद दुर्जनसंबंधदिंद बंदुरितगळन्नु कळकोळ्ळबेकु. श्रीहरियध्यानदिंद मोक्षवेंब ऐश्वर्यक्के विरोधिगळाद प्रकृतिसंबंधवाद सत्वादिगुणगळन्नु कळकोळ्ळबेकु. ॥ ११ ॥ मनःसु रजोदोषरहितवादमेले एनु

माडतक्कदेंबदन्नु हेळुवरु— यावाग्ये योगियमनःसु योगाभ्यासदिंद रजोदोषरहितवागुवदो आग्ये तन्न नासाग्रदल्लिये दृष्टियन्निट्टु श्रीहरिय पूर्णवादमूर्तियन्नु ध्यानमाडबेकु. ॥ १२ ॥ हिंदिन श्लोकदल्लि ' काष्ठांभगवतोध्यायेत् ' एंबल्लि काष्ठां एंदरे ( परमात्मन ) प्रतिमेयन्नु एंदु अर्थमाडल्पट्टितु. आदरे काष्ठा शब्दवु उत्कर्षार्थदल्लियू सीमादल्लियू दिक्किनल्लियू प्रयोगिसल्पडुवदेंदु कोशानुसारवागि अनेकार्थवागुवदु. अवुगळल्लि प्रकृतक्के याव अर्थद अभिप्रायदिंद प्रतिमेयंदर्थ माडल्पट्टितु एंदरे उत्कर्षार्थानुसारवागि सर्वगुणोत्कर्षवुळ्ळ भगवद्रूपवन्नु एंब अर्थवन्नु स्वीकरिसि अदरल्लियू ध्यान माडतक्क स्वरूपवन्नु हेळुवरु— प्रसन्नवाद मुखकमलवुळ्ळंथ, कमलद गर्भदंते स्वल्पकेंपु कण्णुगळुळ्ळंथ, करेकमलददळदंते श्यामवर्णवुळ्ळंथ शंख चक्र गदागळन्नु धरिसिदंथ कमलद मध्यदल्लिद्दकेसर ( कुसुमु ) दंते पीतवर्णद मिचिनंते होळेयतक्क रेश्मीवस्त्रवन्नु धरिसिदंथ मत्तू श्रीवत्सवेंब लक्ष्मीचिन्हवन्नु वक्षस्थळदल्लि धरिसिदंथ, होळेय्यतक्क कौस्तुभवेंब रत्नवन्नु कट्टिगोंडु शोभितवाद कंठवुळ्ळंथ, ॥ १३ ॥ १४ ॥

मत्तैर्द्विरेफैर्भृंगैराकुलया व्याप्तया परार्घ्यान्यनर्घ्यत्वेन श्रेष्ठानि हारश्च वलयश्च किरीटं चांगदं च नूपुरं च परार्घ्यहारवलयकिरीटांगदनूपुराणि यस्य स तथा तं ॥ १५ ॥ कांचीगुणेनोल्लसंती श्रोणी यस्य स तथा तं भक्तानां हृदयांभोजमेव विष्टरं यस्य स तथा तं ॥ १६ ॥ अपीच्यदर्शनं प्राप्तषोडशवर्षवद्दृश्यमानं स्वतः कैशोरे वयसि द्वादशवर्षलक्षणे संतं वर्तमानं ॥ १७ ॥ कीर्तन्यं कीर्तनीयं तीर्थं शुद्धं यशो यस्य स तथा तं पुण्यश्लोकाः ब्रह्मादयस्तेषां सृष्ट्यादिना यशः करोति पुण्यश्लोकयशस्करस्तं मनो यावन्न च्यवते न चलति सर्वांगध्यानसक्तं यथास्यात्तथा ध्यायेदित्यर्थः ॥ १८ ॥ ॥ ॥ ॥

**मत्तद्विरेफकुलया परीतं वनमालया ॥ परार्घ्यहारवलयकिरीटांगदनूपुरं ॥१५॥ कांचीगुणोल्लसच्छ्रोणिं हृदयांभोजविष्टरं ॥ दर्शनीयतमं शांतं मनोनयननंदनं ॥१६॥ अपीच्यदर्शनं शश्वत्सर्वलोकनमस्कृतं ॥ संतं वयसि कैशोरे भक्तानुग्रहकातरं ॥ १७ ॥ कीर्तन्यतीर्थयशसं पुण्यश्लोकयशस्करं ॥ ध्यायेद्देवं समग्रांगं यावन्न च्यवते मनः ॥ १८ ॥ ॥ ॥**

मदोन्मत्तवाद भ्रमरगळिंद ( मकरंदास्वादनार्थवागि ) तुंबिकोंडिद्द कालद वनमाले येद आपादमौलिपर्यंतवागि भूषितनादंथ अमौल्यवाद रत्नगळिंद युक्तवाद मालागळिंदलू कंकणगळिंदलू किरीटदिंदलू बाहुपुरिगळिंदलू गेज्जेगळिंदलू भूषितनादंथ, रत्नखचितवाद उडदारद एळेगळिंद प्रकाशमंतवाद नितंब उळ्ळंथ, तन्न भक्तर हृदयकमलवे तानु कूतुगोळ्ळुवदक्के आसनवागिवुळ्ळंथ, नोडलिक्के योग्यवादवस्तुगळल्लि अत्यंत श्रेष्ठनादंथ परमशांतनादंथ ( इवनन्नु ) नोडतक्क जनगळ मनःसिगू नेत्रगळिगू आनंद कोडतक्कंथ, ' अपीच्यदर्शनं ' हदिनारुवरुष वयःसु बंदवनंते सर्वदा यौवनस्थनागि तोरतक्कंथ सर्वजनरिंदलू अथवा हदिनाल्कु लोकदिंदलू नमस्कारमाडिसिगोळ्ळतक्कंथ, स्वतः हन्नेरडु वरुषदवनागिरतक्कंथ, तन्न भक्तरमेले अनुग्रहमाडुवविषयदल्लि आलोचनेमाडतक्कंथ

कीर्तनमाडलिक्के योग्यवाद पवित्रकरवाद यशःसु उळ्ळंथ पुण्यकीर्तियुळ्ळ ब्रह्मादिगळिगे सृष्ट्यादिगळ अधिकारवन्नु कोट्ट यशःसु तंदुकोडतक्कंथ श्रीनारायणनन्नु, तन्न ( ध्यानमाडतक्कवन ) स्थिरवाद मनःसु चंचलवागुवष्टरोळगे अवन ( श्रीनारायणन ) सर्वावयवध्यानासक्तवागुवंते ( मनःसन्नु ) ध्यानमाडबेकु. ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

हृदयगुहायां शेत इति गुहाशयं प्रेक्षणीयमीहितं चेष्टितं यस्य स तथा तं ॥१९॥ एवं समग्रांगध्यानमुक्त्वा तदशक्तौ एकैकांगध्यानप्रकारमाह तस्मिन्निति तस्मिन्हरौ समग्रांगे लब्धपदं प्राप्तास्पदं सर्वावयवसंस्थितं गर्वावयवं व्याप्य स्थितं चित्तं विलोक्य भगवतः सर्वावयवसंस्मरणाशक्तावेकत्रांगे एकस्मिन्नवयवे पादमारभ्योत्तमांगपर्यंते चित्तं संयुज्यादित्यन्वयः सर्वं स्मर्तुमशक्तः सन्नेकांगं चिंतयेद्बुध इति वचनात् ॥ २० ॥ नन्वत्र पृथक् पृथगवयवस्थितं चित्तमेकत्रैक्येन भावनायां संयुज्यात् न त्वेकैकावयवध्यानं विधीयतेऽशक्तस्येत्याशंक्यैकैकांगध्यानविधानादुक्तं युक्तमिति तत्प्रकारं वक्ति संचिंतयेदित्यादिना— भक्ताभीष्टप्रदानसामर्थ्यमस्यास्तीति अतः संचिंतनीयमिति भावेन तद्विशिनष्टि वज्रेत्यादिना उत्तुंगान्युन्नतानि रक्तानि विलसंति नखान्युत्तुंगरक्तविलसन्नखानि तान्येव चक्रवालं चंद्रमंडलं तस्य ज्योत्स्नाभिराहतो निर्दलितो महतां योगिनां हृदयांधकारोऽज्ञानाख्यो येन तत्तथोक्तं नखानां चक्रवालं आवलिस्तस्य ज्योत्स्नाभिरिव निर्मलाभिर्दीप्तिभिर्वा ॥ २१ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

**स्थितं व्रजंतमासीनं शयानं वा गुहाशयं ॥ प्रेक्षणीयेहितं ध्यायेच्छुद्धभावेन चेतसा ॥ १९ ॥ तस्मिल्लब्धपदं चित्तं सर्वावयवसंस्थितं ॥ विलक्ष्यैकत्र संयुज्यादंगे भगवतो मुनिः ॥२०॥ संचिंतयेद्भगवतश्चरणारविंदं वज्रांकुशध्वजसरोरुहलांच्छनाढ्यं ॥ उत्तुंगरक्तविलसन्नखचक्रवालज्योत्स्नाभिराहतमहद्धृदयांधकारं ॥ २१ ॥ ॥ ॥ ॥**

योगियु तन्न हृदयगुहादल्लि श्रीहरिय निंतुगोंडिद्द स्वरूपवन्नागली ओडाडतक्क स्वरूपवन्नागली कुळितिद्द स्वरूपवन्नागली शयनमाडिद्द स्वरूपवन्नागली परिशुद्धवाद अभिप्रायउळ्ळ मनःसिनिंद ध्यानमाडबेकु. मत्तू आ श्रीहरियु माडिद नोडलिक्के योग्यवाद अवतार चेष्टे कार्यगळन्नु ध्यानमाडबेकु. ॥ १९ ॥ ई प्रकार परमात्मन संपूर्णावयवध्यानद प्रकारवन्नु हेळि, आ संपूर्णावयवध्यानासक्तनाद पक्षदल्लि ओंदोंदे अवयव ध्यानमाडतक्क संगतियन्नु हेळुवरु—ई प्रकार सर्वावयवसहितनाद श्रीहरिय ध्यानमाडुवविषयदल्लि युक्तवाद मनःसन्नु नोडि; आ श्रीहरिय सर्वावयवगळन्नु एककालक्के ध्यानमाडुवदक्के मनःसु अशक्तवादरे, आ श्रीहरिय पादवन्नु मोदल्गोंडु शिरःपर्यंतवाद ओंदोंदे अवयववन्नु ध्यानमाडुवदक्के योजने माडबेकु.' ज्ञानियु सर्वावयवगळन्नु एकदा ध्यानमाडुवदक्के अशक्तनादरे ओंदोंदे अवयववन्नु चिंतिसबेकु ' एंदु प्रमाणविरुवदु. ॥ २० ॥ ओळ्ळेदु श्रीहरिय बेरेबेरे अवयवगळ ध्यानदल्लिद्द योगिय मनःसन्नु ओंदेकडिगे भाविसुवदक्के योजिसबेके, हीगिरलु अशक्तनिगादरू ओंदोंदे अवयव ध्यानमाडतक्क विधानवु कंडिल्लवु. एंदु संदेहबंदरे परमात्मन ओंदोंदे अवयव ध्यानमाडतक्क विधानवु इरुवदु आदरिंद इदु उचितवादद्देंदु ओंदोंदे अवयव ध्यानद प्रक्रियवन्नु संचिंतयेत् एंब श्लोकमोदलुमाडि केलवु श्लोकगळिंद हेळुवरु— ई ओंदोंदे अवयवध्यानवु भक्तर अभीष्ट सिद्धि माडिकोडुवदक्के समर्थवादद्देंदु तिळिसुवदक्के आ ओंदोंदे अवयवगळन्नु सरियागि चिंतने माडबेकेंब अभिप्रायदिंद आ चिंतन संगतियन्नु विस्तरिसुवरु— वज्र अंकुश ध्वज कमल ई चिन्हगळिंद युक्तवादंथ मत्तू उन्नतवाद रक्तवर्णद कांतियुळ्ळ उगुरुगळिंद युक्तवाद बेरळुगळेंब चंद्रमंडलद कांतियिंद, ध्यानमाडतक्क भक्तर हृदयदल्लिद्द अज्ञानवेंब अंधकारवन्नु कळेदंथ श्रीहरिय पादकमलवन्नु सरियागि चिंतनमाडबेकु. अथवा उगुरुगळ पंक्तिय निर्मलवाद कांतियिंद एंदु हीगादरू मेले अर्थ माडबेकु. ॥ २१ ॥

यस्य चरणारविंदस्य शौचात् प्रक्षालनलक्षणान्निःसृता सरित्प्रवरा गंगा तस्य उदकेन तीर्थेन पावनेन मूर्ध्न्यधिधृतेनाधिगतजटाबंधधृतेन शिवो महादेवः शिवोतिशयितपुण्यभाजनीभूतोभूत् ध्यातुः पुरुषस्य मनसि वर्तमानं यच्छमलं पापं तदेव शैलः पर्वतस्तस्य विदारणाय नितरां सृष्टं कल्पतं वज्रमिव वज्रं लुप्तोपमा ॥ २२ ॥ जंघांतंतु तच्चरणारविंदांतर्भूतं जानुनी पूर्वोत्तरांतर्भूतइतिभावेनोरूपास्तिमाह ऊरू इति हरेरूरू ध्यायेदित्यन्वयः सुपर्णो गरुडस्तस्य भुजयोरध्युपरि स्कंधे ओजसा बलानां निधी ओजोवष्टंभवलयोरित्यभिधानं स्वतसिकाकुसुमं प्रोत्फुल्लकल्पकुसुमं तद्वदवभासो ययोस्तौ तथोक्तौ हे अंब हरेर्नितंबं ध्यायेदित्यन्वयः व्यालंबिच प्रपादांतंच वर्णेन पीतंच वरंच यद्वासस्तद्व्यालंबिपीतवरवासस्तत्र वर्तमानो यः कांचीकलापः सप्तगुणितरशनाभूषणं तस्य परिरंभोस्यास्तीति तदंतर्वर्तमानइत्यर्थः ॥ २३ ॥ हरेर्नाभिन्हदं ध्यायेदित्यन्वयः निम्नत्वद्योतनाय लोकपद्मजन्महेतुत्वात्ध्रदमिति चतुर्दशभुवनानां कोशो गृहं भुवनकोशो ब्रह्मांडं तत् गूहयति ग्रसतीति भुवनकोशगृहं तदुदरं जठरं तत्र स्थितं यद्वा भुवनकोशनिगरणगुहास्थानीयोदरे तिष्ठतीति यद्वा भुवनकोशगुहोदे ब्रह्मांडगर्भोदके रत्वा स्थितं यत्र यस्मिन्नाभिन्हदे आत्मयोनेश्चतुर्मुखस्य धिषणं धिष्ण्यं चाखिललोकात्मकंच पद्ममात्मयोनिधिषणाखिललोकपद्मं व्यूढमुत्पन्नमित्यर्थः हरिन्मणिमुषः हरिन्मणिरिंद्रनीलरत्नं तस्य प्रभामुष्णतोऽमुष्य हरेस्तनयोर्द्वयं ध्यायेत विततस्य विस्तृतस्य हारस्य मयूखेन गौरमतिधवलं ॥ २४ ॥ ॥ ॥ ॥

**यच्छौचनिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्न्यधिधृतेन शिवः शिवोभूत् ॥ ध्यातुर्मनःशमलशैलनिसृष्टवज्रं ध्यायेच्चिरं भगवतश्चरणारविंदं ॥२२॥ ऊरू सुपर्णभुजयोरधिशोभमानावोजोनिधी स्वतसिकाकुसुमावभासौ ॥ व्यालंबिपीतवरवाससिवर्तमानकांचीकलापपरिरंभिनितंबमंब ॥ २३ ॥ नाभिन्हदं भुवनकोशगुहोदरस्थं यत्रात्मयोनिधिषणाखिललोकपद्मं ॥ व्यूढं हरिन्मणिमुषःस्तनयोरमुष्य ध्यायेद्द्वयं विततहारमयूखगौरं ॥२४॥ ॥ ॥ ॥ ॥ ॥**

याव श्रीहरिय पादकमलवन्नु प्रक्षालने माडिद्दरिंद उत्पन्नळाद उदकरूपळाद परमपवित्ररूपळाद श्रेष्ठनदियेंदेनिसिद गंगेयन्नु शिरःसिनल्लिद्द जटाजूटगळल्लि धरिसिद्दरिंद मोदलिगे पवित्रनागिद्द

शिवनु अत्यंतपुण्यपात्रनादनो, मत्तु याव पादवन्नु ध्यानमाडतक्क पुरुषन मनसिनल्लिद्द पापवेंब पर्वतवन्नु सीळुवदक्के वज्रदंते इरुव; इंथ श्रीहरिय चरणारविंदवन्नु बहुवेळेयवरेगे भक्तनु चिंतने माडबेकु. २२ हिंदे(श्रीहरिय) पादकमलध्यानवन्नु हेळि आ पादकमलदमेले इरतक्क जंघा=मणकालकेळगिन गाणिकेगळु पादगाळिगे संबंधपट्टिरुववेंदु तिळिदु मत्तु मणकालुगळु मेलिद्द तोडेगाळिगू केळगिन पादगाळिगू संबंधिसिरुववेंदु तिळिदु जंघेगळ ध्यानवन्नू मोणकालुगळ ध्यानवन्नू हेळदे अनुगळ मेलिद्द तोडेगळ ध्यानसंगतियन्नु हेळुवनु-ई तायियाद-देवहूतिये गरुडन भुजगळ मेल्भागवाद हेगलुगळमेले सामर्थ्यगळिगे मूलस्थानवाद, अरळिद अगसीहूविनंते नीलवर्णद कांतियुळ्ळ, ( श्रीहरिय ) एरडू ) तोडेगळन्नू ध्यान माडबेकु. मत्तू टोंकदिंद पादगळ हदडुगळवरेगे लंबायमानवाद, होळेय्यतक्क रेश्मी पीतांबरवन्नु धरिसि अदरमेले एळुयलियुळ्ळ रत्नखचितवाद नडिवड्याण ( उडदारदिंद सुत्तल्पट्ट; श्रीहरिय नितंबवन्नु ध्यानमाडबेकु. ॥ २३ ॥ ( इन्नु श्रीहरिय नाभियध्यान माडतक्क संगतियन्नु हेळुवनु---) श्रीहरिय नाभियु ( होक्कळु ) बहळतग्गागिरुवदेंदु तोरिसुवदक्कू मत्तू हदिनाल्कुलोकस्वरूपवाद कमलवु हुट्टुवदक्के, कारणवाद्दरिंदलू ( आ नाभियु ) 'ह्रदं' मडुविनंतिरुवदेंदु हेळिरुवरु— 'भुवनकोशगुहोदरस्थं' हदिनाल्कु लोकगळिगे मणियंतिरुव ब्रह्मांड मुच्चिगोळ्ळतक्क उदरदल्लि इरतक्कंथ, अथवा चतुर्दशभुवनकोशवन्नु नुंगुवदक्के गुहादंतिरतक्क उदरदल्लिद्द अथवा ब्रह्मांडगर्भोदकदल्लि रमणमाडुत्तलिद्द; ( श्रीहरिय ) याव नाभियेंबमडुविनाल्लि चतुर्मुख ब्रह्मनु वास माडुवदक्के स्थानवाद मत्तू हदिनाल्कुलोकात्मकवाद पद्मवु उत्पन्नवायितो अंथ मडुविनंतिरतक्क, श्रीहरियनाभियन्नु, ध्यानमाडबेकु. मत्तू रत्नपदकगळिंद विस्तृतवाद हारगळकिरणगळिंद किंचित् शुभ्रवागितोरतक्क, इंद्रनीलमणिय कांतियंते श्यामवर्णनाद श्रीहरिय एरडू स्तनगळन्नु ध्यानमाडबेकु. ॥ २४ ॥

स्मर्तॄणां पुंसां मनोनयनानां निर्वृतिमानंदमादधानमुत्पादयंतं महाविभूतेर्लक्ष्म्या अधिवासस्थानमृषभस्य हरेर्वक्षो मनसि कुर्यादित्यन्वयः कौस्तुभमणेराधिकं भूषणमेवार्थः प्रयोजनं यस्य तथा तं कंठंच मनसि कुर्यात् अखिललोकनमस्कृतत्वादृषभत्वं युक्तं ॥ २५ ॥ हरेर्बाहूंश्च दशशतारंच शंखंच संचिंतयेदित्यन्वयः मंदरगिरेः परिवर्तनेन परिभ्रमणेन निर्णिक्ताः शोभिताः बाहुवलया अंगदादयो येषां ते तथा तान् अधिश्रिता लोकपाला इंद्रादयो येषु ते तथा तान् दशशतं सहस्रमराणि दलानि यस्य तत्तथोक्तं शत्रूणामसह्यं सोढुमशक्यं तेजोवीर्यं यस्य तत् तथोक्तं तस्य हरेः करा एव सरोरुहाणि पद्मानि तेषु राजहंसमिव वर्तमानं ॥ २६ ॥ भगवतो दयितां कौमोदकीं गदां हरेः कंठे मालाममलं मणिं च स्मरेतेत्यन्वयः कथंभूतां गदां अरातयो दैत्या एव भटास्तेषां शोणितं रुधिरमेव कर्दमस्तेन दिग्धां रूषितां अरतीनां भटानांच इत्यभिधानात् कथंभूतां मालां मधुव्रतानां नित्यसुखानां भृंगाकारमितानां भक्तानां वरूथाः समूहास्तेषां स्तुतिलक्षणया गिरोपघुष्टां शब्दायमानां कथंभूतं मणिं चैत्यस्य चित्ताभिमानिनश्चतुर्मुखस्य तत्त्वं स्वरूपं ब्रह्मा चित्ताभिमानेन चैत्यस्तन्नियमाद्धरिः सच ब्रह्मा हरेः कंठे कौस्तुभत्वेन भासत इति वचनात् ॥ ॥ २७ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

**वक्षोधिवासमृषभस्य महाविभूतेः पुंसां मनोनयननिर्वृतिमादधानं॥कंठंच कौस्तुभमणेरधिभूषणार्थं कुर्यान्मनस्यखिललोकनमस्कृतस्य२५**

**बाहूंश्च मंदरगिरेः परिवर्तनेन निर्णिक्तबाहुवलयानधिलोकपालान् ॥ संचिंतयेद्दशशतारमसह्यतेजः शंखंच तत्करसरोरुहराजहंसं ॥ २६ ॥ कौमोदकीं भगवतो दयितां स्मरेत दिग्धामरातिभटशोणितकर्दमेन ॥ मालां मधुव्रतवरूथगिरोपघुष्टां चैत्यस्य तत्त्वममलं मणिमस्य कंठे ॥ २७ ॥ ॥ ॥ ॥ ॥ ॥ ॥**

स्मरणेमाडतक्क जनर मनःसिगू नेत्रगळिगू आनंदवन्नुंटुमाडिकोडतक्क, मत्तु महदैश्वर्यरूपळाद लक्ष्मीदेविगे आवासस्थानवाद, श्रीहरियवक्षस्थळवन्नु मनसिनल्लि स्मरणेमाडबेकु. सकल लोकदल्लिरतक्क एल्ल जनरिंद नमस्कारमाडिसिगोळ्ळतक्क श्रीहरिय कंठवु कौस्तुभमाणिगे भूषणवन्नु कोडुवदक्कागिरुवदेंदु मनःसिनल्लि चिंतिसबेकु ( कौस्तुभमणियन्नु कोरळल्लि कट्टिकोंडद्दरिंद इवनकोरळु चंदकाणुवदेंदल्लवु आ कौस्तुभमणियु इवनकोरळल्लिद्दरिंदले इष्ट शोभिनवागि लोकप्रख्यातवागिरुवदु एंदु तिळिसुवदक्के हीगे हेळिरुवरु— ) सकलजनरिंद नमस्कारमाडिसिगोळ्ळुववनाद्दरिंदले इवनिगे 'ऋषभ' नेन्नुवरु. ॥ २५ ॥ आमेले परमात्मन भुजगळन्नू चक्रवन्नू शंखवन्नू चिंतिसबेकेंदु हेळुवरु--हिंदक्के क्षीरसागरदल्लि अमृतोत्पत्तिय कालक्के मंदरपर्वतवन्नु कडेयुवदरिंद प्रकाशमंतवाद बाहुपुरिगळुळ्ळंथ, मत्तू इंद्रनेमोदलाद सकललोकपालकरन्नु धरिसिदंथ ( मोदलु मंदराचलवन्नु मथनमाडुवदक्के उद्युक्तराद देवदैत्यरु अशक्तरागि परमात्मनन्नु मरिहोगलु, अवरन्नेल्ल तन्न भुजगळल्लि धरिसिगोंडु ताने मथनमाडिदनु ) नाल्कु भुजगळन्नु चिंतिसबेकु. मत्तू शत्रुगळिगे सहनमाडुवदक्के अशक्यवाद ( तेजःसुळ्ळ ) सामर्थ्यवुळ्ळ सहस्रारु अरागळुळ्ळ परमात्मन कैय्योळगिन चक्रवन्नु ध्यान माडबेकु. मत्तू श्रीहरिय कैयगळेंब पद्मगळल्लि राजहंसपक्षियंते शोभिसुव शंखवन्नु चिंतिसबेकु.॥२६॥ आमेले श्रीहरिय कौमोदकी एंब गदेयन्नू कंठमालेयन्नू कौस्तुभमणेयन्नू चिंतिसबेकेंदु हेळुवरु—दैवतिगळ शत्रुगळाद दैत्यरेंब भटर रक्तवेंब केसरु हत्ति शोभितवाद, श्रीहरिय कौमोदकी एंब गदेयन्नु स्मरिसबेकु. मत्तू पुष्पगळ मकरंदवन्नु आस्वादनमाडतक्क भ्रमरगळ झंकारध्वनियिंद तुंबिदंते, नित्यसुखिगळाद भ्रमरगळंतिरतक्क भक्तसमूहगळ स्तोत्रध्वनियिंद तुंबिदंथ, श्रीहरिय कंठगतवाद पुष्पमालेयन्नु चिंतिसबेकु. मत्तू 'चित्तक्के अभिमानियाद ब्रह्मनु चैत्यनेनिसुवनु. अवनिगे प्रेरकनाद परमात्मनादरू चैत्यनेनिसुवनु. इंथ चैत्यनेनिसिगोंड ब्रह्मनु श्रीहरिय कंठदल्लि कौस्तुभमणिय स्वरूपदिंद इद्दु प्रकाशमंतनागुवनु.' एंदु भागवततंत्रवेंब ग्रंथद वचनानुसारवागि, चित्तक्के अभिमानियाद चतुर्मुखनस्वरूपवाद कौस्तुभरत्नवु परमात्मनकंठदल्लि शोभिसुवदेंदु चिंतिसबेकु. ॥ २७ ॥

भगवतो वदनारविंदं संचिंतयेदित्यन्वयः किंविशिष्टस्य इह जगति सत्सु भृत्येषु अनुकंपितया धिया द्रवीभूतचित्ततया गृहीता मूर्तिराकारविशेषो येन स तथा तस्य वदनारविंदस्य चिंतनीयत्वे गुणानाह यदिति यद्वदनारविंदं विस्फुरती किंचित्संसरती मकरकुंडले विस्फुरन्मकरकुंडले तयोर्वल्गितेन नृत्तेन विद्योतितावमलौच कपोलौ यस्मिंस्तत्तथा उदारो निर्दुष्टो हासो यस्मिंस्तत्तथा ॥ २८ ॥ यच्च श्रीनिकेतनं परममंगलायतनं यच्च सौरभ्यलोलैरलिभिः परितः सेव्यमानं यस्य स्वया स्वरूपभूतया भूत्या श्रिया सेवितं साक्षाच्छ्रीस्तु हरेरूपमिंदिरातु तदाश्रयादिति वचनात् पत्नीभूतायाः श्रीत्वं भगवदाश्रयादित्यतः स्वयेत्युक्तं

यच्च कुटिला वक्राः कुंतलाः ललाटरंगे नृत्यंतः केशविशेषास्तेषां वृंदेन समूहेन जुष्टं संवृतं किंचाब्जनेत्रपद्मदलसदृशनेत्रं ध्यायेदित्यन्वयः कीदृशं मीनद्वयस्याबा मत्वपृथुमध्यत्वतनूभयभागत्वश्वेतत्वादिलक्षणां श्रियं कांतिविशेषमधिक्षिपत् धिक्कुर्वत् किंच मनोमयं ध्यातृसंकल्पनात्मकं उल्लसंती भ्रूर्यस्य तत्तथोक्तं अतंद्रितो निरालस्य इत्यनेन ध्यानस्य निरंतरं कर्तव्यत्वं सूचयति ॥ २९ ॥ हृदयगुहायां निहितस्य हरेरवलोकं विततभावनया पूर्णभक्त्या चिरं ध्यायेदित्यन्वयः कटाक्ष-निरीक्षणं विशिनष्टि अधिकमिति अधिकं कृपयानन्यसाध्यकार्यसाधनपटीयस्याकरुणयाऽतिघोरस्य तापत्रयस्याध्यात्मिकादिलक्षणस्योपशमनाय विनाशाय नितरां सृष्टं निर्मितं किंचित् स्निग्धेन स्मितेनानुगुणितं सांद्रीकृतं विपुलः पुष्कलः प्रसादः प्रसन्नता यस्य स तथा तं ॥ ३० ॥ ॥ ॥ ॥

भृत्यानुकंपितधियेह गृहीतमूर्तेः संचिंतयेद्भगवतो वदनारविंदं ॥ यद्विस्फुरन्मकरकुंडलवल्गितेन विद्योतितामलकपोलमुदारहासं ॥२८॥ यच्छ्रीनिकेतमलिभिः परिसेव्यमानं भूत्या स्वया कुटिलकुंतलवृंदजुष्टं ॥ मीनद्वयाश्रयमधिक्षिपदब्जनेत्रं ध्यायेन्मनोमयमतंद्रितउल्लसद्भ्रु॥२९॥ तस्यावलोकमधिकं कृपयातिघोरतापत्रयोपशमनाय निसृष्टमक्ष्णोः॥ स्निग्धस्मितानुगुणितं विपुलप्रसादं ध्यायेच्चिरं विततभावनया गुहायां ॥ ३० ॥ ॥ ॥ ॥ ॥ ॥

आमेले श्रीहरिय मुखारविंदवन्नु चिंतिसबेकु— आ मुखवु एंथादेंदरे— ई जगत्तिनल्लिद्द योग्यराद. तन्न भक्तरल्लि अनुग्रह माडबेकेंदु अंतःकरणदिंद अवर मेले मनःपुकरिगि ( आ भक्तरिगे तन्न स्वरूपदर्शनमाडिसुवदक्के ) सुंदरवाद मूर्तियन्नु धरिसिद श्रीहरिय मुखकमलदल्लि चिंतन माडुवदक्के योग्यवाद गुणगळु यावेंदरे हेळुवरु— यत्= याव मुखकमलवु. मिंचि-नंते होळेयतक्क रत्नखचितवाद कर्णकुंडलगळु स्वल्पु होयिदाडुवदरिंद अवुगळकांतियिंद प्रकाशमानवाद कपोलगळिंदलू निर्दुष्टवाद मंदहासदिंदलू मनोहरवागि तोरुवदो, अंथ मुखकमलवन्नु चिंतिसबेकेंदु अर्थवु ॥ २८ ॥ इन्नु परमात्मन नेत्रकमलगळन्नु ध्यान माडबेकेंदु हेळुवरु— ' यत् श्रीनिकेतं ' यावदु परममंगळक्के मूलाश्रयवागिरुवदो, सुगंधलोलवाद भ्रमरगळिंद परिसेवितवागि ' भूत्यास्वया ' स्वरूपभूतवाद संपत्तियिंद युक्तवागिरुवदो, मत्तू वक्रवाद उंगरगूदलुगळु ललाटवेंब रंगस्थळदल्लि नर्तनमाडुत्तिरुववो अंथ कुदलुगळसमूहदिंद परिसेवितवागिरुवदो, मत्तू ' मीनद्वयश्रियमधिक्षिपदब्जनेत्रं ' एरडु मीनगळु ओंदक्कोंदु एदुरुबदरागिवंदर अवु ह्यागे बिल्लगळंते बागिद्दु मध्यदल्लि पुष्टागि कोनेगे सण्णागिद्दु कृष्णवर्ण श्वेतवर्णगळ कांतियिंद शोभिसुववो अवुगळकांतियन्नु धिक्करिसतक्क हुब्बुगळिंद युक्तवाद नेत्रगळन्नु ई प्रकार ध्यानमाडतक्कवन कल्पनानुसारवागि मनसिनल्लि तोरुवंते चिंतिसबेकु. इल्लि ' अतंद्रित ' एन्नुवदरिंद निरंतर ध्यान माडबेकेंदु सूचिसुववु. ॥ मत्तु ई श्लोकदल्लि ' श्रीनिकेतं ' एंबल्लि निरुपद श्रीशब्दप्रयोगविद्दरिंद श्री= एंदरे लक्ष्मी देवियेंदु अर्थवल्लवु लक्ष्मीदेवियु वक्षस्थळदल्लिरुवळेंदु हिंदे हेळल्पट्टदे. हागादरे इल्लि श्रीएंबदक्के एनु अर्थवेंदर तात्पर्याचार्यरु प्रमाणदिदले अर्थ हेळिरुवरु— ' साक्षाच्छ्रीस्तु हरेरूपं इंदिरातु तदाश्रया ' मुख्यवाद श्री एंबशब्दवु परमात्मनल्लिये रमादेविगे अवन

आश्रयदिंद श्रीःसंपद्रूपियन्नुवरु. ' तथाच वदनारविंदं श्रियः हरिस्वरूपभूत शोभानिकेतमाश्रय इति मूल्योज्यं इति भावः ' यादुपस्य ' प्रकृतक्के परमात्मन वदनारविंददल्लिद्द श्रीयु अवन स्वरूपभूतवाददेंदु अर्थवु ॥ २९ ॥ आमेले परमात्मन कृपाकटाक्षवु ध्यानमाडबेकु आ कृपाकटाक्षवु यंथादेंदरे—एरडनेयवरिंद माडुवदक्के अशक्यवाद कार्यसाधनमाडुवदक्के अत्यंत समर्थवाद करुणादिंद, अतिघोरतरवाद अध्यात्म अधिभूत अधिदैवगळेंब तापत्रयगळन्नु नाशमाडुवदक्के अत्यंतवागि उत्तमवाद, मत्तू मनोहरवाद मंदहासदिंद युक्तवाद, मत्तू भक्तरमेले पुष्कलवाद परमप्रसादवन्नु माडतक्क, हृदयगुहादल्लि वासमाडि श्रीहरिय इंथ कृपाकटाक्षवन्नु पूर्णवाद भक्तियिंद बहुवेळेयवरेगे ध्यानमाडबेकु. ॥ ३० ॥

हरेर्हासं मंदस्मितं ध्यायेदित्यन्वयः कीदृशमवनतस्याखिलस्य लोकस्य यस्तीव्रोत्युल्बणः शोकस्तापत्रयोद्भूतस्तन्निमित्तान्यश्रूणि यानि तेषां सागरः समुद्रस्तं विशेषेण शोषयतीत्यवनताखिललोकतीव्रशोकाश्रुसागरविशोषणस्तं अत्युदारमनुग्रहाभिप्रायं किंच हे मनुसुते निजमायया स्वेच्छया मकरध्वजस्य कामस्य संमोहनाय रचितं अस्य हरेर्भ्रूमंडलं चिंतयेदित्यन्वयः ॥ ३१ ॥ एवमेकैकावयवध्यानानायासाचित्तस्य समग्रावयवविशिष्टवपुर्ध्यानं निर्दिशति ध्यानायनमिति रहस्येकांते स्थित्वा स्वहृत्कुहरके निजहृदयगुहायामवसितस्य निश्चितावस्थानस्य विष्णोस्तत्ध्यानायनमेकैकावयवध्यानास्पदं वपुर्ध्यायेदित्यन्वयः किंविशिष्टं बहुलया सांद्रयाधरोष्ठभासाऽरुणायिता रक्तवद्वर्तमानाश्च ते तनवः सूक्ष्माग्राश्च ते द्विजा दंता एव कुंदकुड्मला तेषां पंक्तिर्यस्मिन् तत्तथोक्तं ध्यातुरिति कर्तव्यतामाह भक्त्येति आर्द्रया स्नेहलक्षणजलक्लिन्नया भक्त्या यस्मिन्नेवार्पितमनाः स्थिरीकृतचित्त एवं ध्यायंस्तदेव दिदृक्षेत् द्रष्टुमिच्छेत् पृथक् तदितरन्मुक्तिदातृत्वेन न चिंतयेदित्यन्वयः ॥ ३२ ॥ एवं ध्यानारूढस्य तत्फलं वक्ति एवं हराविति एवमुक्तप्रकारेण हरौ भगवति प्रतिलब्धो भावो मनो यस्य त तथा द्रवद्धृदयस्तस्मिन्नेकस्मिन्नेवार्द्रीयमान-हृदय उत्कृष्टौ पुलकप्रमोदौ रोमांचहर्षौ यस्य स तथा औत्कंठ्येनाविर्भूतया बाष्पकलयाश्रुधारया मुहुरर्द्यमानआर्द्रीक्रियमाणः पुमान् यश्चित्तबडिशं लक्ष्यं प्रति प्रायुंक्त तच्चित्तबडिशमपि शनकैर्वियुंक्ते चित्तपरिचयात्स्ववशत्वेन विशिष्टं योजयति अप्रयत्नेन ध्यानानंतरं समाधिं करोति ॥ ३३ ॥ ॥ ॥

हासं हरेरवनताखिललोकतीव्रशोकाश्रुसागरविशोषणमत्युदारं ॥ संमोहनाय रचितं निजमाययास्य भ्रूमंडलं मनुसुते मकरध्वजस्य ॥ ३१ ॥ ध्यानायनं रहसि तद्बहुलाधरोष्ठभासारुणायिततनुद्विजकुंदपंक्ति ॥ ध्यायेत्स्वहृत्कुहरके वसितस्यविष्णोर्भक्त्यार्द्रयार्पितमना न पृथक् दिदृक्षेत् ॥ ३२ ॥ एवं हरौ भगवति प्रतिलब्धभावो भक्त्या द्रवद्धृदय उत्पुलकप्रमोदः॥ औत्कंठ्यबाष्पकलया मुहुरर्द्यमानस्तच्चापि चित्तबडिशं शनकैर्वियुंक्ते ॥ ३३ ॥ ॥ ॥ ॥

१ चित्तबडिशं— दुर्ग्रहस्य भगवतो ग्रहणे मत्स्यबंधनवदुपायभूतं ॥ वियुंक्ते— अत्रवियुक्तंकरोतीत्यन्यथाप्रतीतिवारणस्य वियोगशब्दार्थमाह— चित्तेति ॥ चित्तबडिशावियोगो ध्यानानंतर-समाधिः ॥ इतितात्पर्यं ॥ वियोगः विशेषेण योगः प्रयत्नाभावेपि योग इतियावत् सच समाधिरूपएवेति भावः । तथाच चित्ताख्यबडिशं हरौ शनकैरभ्यासपाटवानुसारेण वियुंक्ते विशेषेण योजयति अप्रयत्नेन स्थापयतीत्यर्थः समाधिमान् भवतीतियावत्. ॥ या ॥

हे मनुसुते, स्वायंभुवमनुविन पुत्रियाद देवहूतियॆ; परमात्मन मंदहासवन्नु ध्यानमाडबेकु. आ मंदहासवु यंथादॆंदरे–याव श्रीहरिगॆ नीनेगतियॆंदु नमस्कारमाडिद भक्तजनर तापत्रयदिंद उत्पन्नवाद दुःखद कण्णीरिन समुद्रवन्नु अत्यंतवागि वणिगिसतक्क अत्युदारवाद श्रीहरिय मंदहासवन्नु ध्यानमाडबेकु. मत्तू तन्निच्छेयिंदले मन्मथनन्नु मोहबडिसुवदक्के रचिसिद (अंदरे अतिसुंदरवाद) श्रीहरिय भूमंडलवन्नु अंदरे एरडु हुब्बुगळन्नु सरियागि चिंतिसबेकु. ॥ ३१ ॥ ई प्रकार हिंदॆहेळिदंते श्रीहरिय ऒंदॊंदे अवयवगळन्नु ध्यानमाडिद रूढियिंद अदक्कू हॆच्चागि ध्यानमाडुवदक्के चित्तद आयासविल्लदवनिगॆ, सर्वावयवयुक्तवाद श्रीहरिय संपूर्णदेहवन्नु ध्यानमाडतक्क संगतियन्नु हेळुवनु— उपासनामाडतक्क योगियु एकांतदल्लि कुळितु, तन्न हृदयगुहादल्लियॆ याव श्रीहरियु वासमाडिरुवनॆंदु निश्चयवागि तिळकॊंडिरुवनो अदूवरेगॆ याव श्रीहरिय ऒंदॊंदे अवयवगळन्नु ध्यानदल्लि जयिसिरुवनो आ श्रीहरिय सर्वावयवयुक्तवाद पादमोदलुगॊंडु शिरःपर्यंतवाद संपूर्ण देहवन्नु ऒम्मॆले ध्यानमाडबेकु. अदु यावप्रकारवॆंदरे–अत्यंत कॆंपागिद्द कॆळदुटिय कांतियिंद रक्तदंते तोरतक्क मत्तू तुदिगॆ हदनागिद्द दंतगळ कुंदपुष्पगळ अरळमॊग्गॆगळ पंक्तिगळुळ्ळंते तोरतक्क मुखमंडलउळ्ळ विशिष्टवाद श्रीविष्णुविन देहवन्नु, स्नेह (अंतःकरण) वॆंब नीरिनल्लि तोयिदिरुव भक्तियिंद या श्रीहरियल्लियॆ मनःसन्नु अर्पणेमाडि (अवनल्लियॆ स्थिरपडिसिद मनःसु उळ्ळवनागि) हीगॆ ध्यानमाडुत्त आ श्रीहरियन्ने नोडलिच्छिसबेकु. 'नप्टथक्रादिदृक्षेत्' ई श्रीहरियहोरतु मत्तॊब्बनु मोक्षकॊडतक्कवनु इल्लवॆंदु ध्यानमाडबेकु. ॥ ३२ ॥ ई हिंदॆहेळिदंते भगवत्ध्यानारूढनादवनिगॆ (ध्यानमाडलिक्के हत्तिदवनिगॆ) आ ध्यानदफलवन्नु हेळुवनु— ई हिंदॆहेळिदंते अव्याहतषड्गुणैश्वर्यसंपन्ननाद श्रीहरियल्लियॆ मनःसन्नु हॊंदिदवनागि 'द्रवद्धृदयः' आ श्रीहरियल्लियॆ मनःसु करिगि, मैमेलिन रोमांचगळु उब्बि हर्षोद्रेकदिंद कुत्तिगॆय शिरउब्बि कण्णोळगॆ बरतक्क आनंदाश्रुगळ धारागळिंद पुनःपुनवागि तोयिसिगॊंडपुरुषनु, श्रीहरियन्नु वशमाडिकॊळ्ळुवदक्के 'यत्चित्तवडिशं' तन्न चित्तवॆंब याव गंटलगाणवन्नु ध्यानके लक्षनाद परमात्मनल्लि प्रयोगिसुवनो आ चित्तवॆंब वडिश (गंटलगाण) वादरू बहुध्यानदिंद अति परिचयवुळ्ळद्दरिंद परमात्मनन्नु वशमाडिकॊळ्ळुवदु. अंदरे ध्यानानंतर भगवत्समाधियुळ्ळवनागुवनु. (बडिशवॆंदरे मीनवन्नु हिडियुवदक्के उपायवाद गंटलगाणवु.) आ गंटलगाणदिंद हिडियलशक्यवाद मीनवन्नु हागॆ हिडियुवरो आ प्रकार एरडने उपायदिंद हिडियलशक्यनाद श्रीहरियन्नु वशमाडिकॊळ्ळुवदक्के चित्तवॆंबदॊंदु उपायवु ऎंदु तोरिसुवदक्के चित्तवॆंब बडिशवॆंददिरुवरु. इल्लि 'वियुंक्ते' ऎंब पददिंद वियोगमाडुवदु ऎंब अर्थवु भासमानवागुवदु हागॆ अर्थमाडबारदॆंदु तिळिसुवदक्के 'चित्तबडिशवियोगवॆंदरे ध्यानानंतरसमाधि,' ऎंदु श्रीमदाचार्यरु अर्थमाडिरुवरु. आदकारण वियोगवॆंदरे विशेषाकारवागि प्रयत्नविल्लदिद्दरू परमात्मनल्लि सहजवागि मनोयोजने माडोणवु. अदक्के समाधियन्नुवरु. वट्टिगॆ 'चित्तबडिशं शनकैर्वियुंक्ते' अंदरे योगियु सहजवागि समाधिग्रस्तनागुवनॆंदु फलितार्थवु. ऎंदु यादवाचार्यर अर्थवु॥ ३३॥

प्राकृतातःकरणे नष्टे भगवदितरस्मरणत्यागेन निरायाससमाधिक्के फलमप्रयत्नेन यद्धरिध्यानं तत्फलं ब्रूते मुक्ताश्रयमिति यथार्चिर्दीपस्तैलवर्त्यभावे सहसा नश्यति तथा यर्हि यदा स्वचित्तं निर्वाणं स्वरूपमृच्छति तदा स्वरूपचित्त जीवचैतन्येतत्तन्मयमित्यर्थः मनो निर्विषयं शब्दादिविषयेभ्यो निर्गत्य मुक्ताश्रयं नित्यमुक्तमगवद्विषयं भवति तदा निर्वाणमृच्छति स्वचिदमिमानेन स्थूलसूक्ष्मशरीरामिमानं जहाति अत्रास्यामवस्थायां पुरुष उपासको जीव आत्मानं परमात्मानमेकं सर्वोत्तमं अव्यवधानं स्वस्यच तस्यच मायालक्षण भित्तिराहित्येन अनुवीक्षतेति करतलामलकवदपरोक्षी करोति यद्बिंबादिद्रष्टव्यं सर्वं तत्पश्यतीत्यर्थः अतोपरोक्षज्ञानं



तत्फलमिति प्रतिबंधकसंसारसद्भावे कथं स्वबिंबादिदर्शनमत्राह प्रतिनिवृत्तो प्रतिनिवृत्तो गुणप्रवाहः संसारधर्मो यस्मात्स तथोक्तः यदा बाह्यमनो निर्वाणं विनाशमृच्छति यथार्चिर्दीपज्वालातैलाद्यभावे तदा स्वचित्तं स्वरूपचैतन्यं स्वरूपांतःकरणं निर्वाणं परमानंदमाप्नोति यथा स्तिमिततैलपात्रे स्थितो मनुष्याद्यभावे दीपो ज्वलनाख्यानंदमाप्नोति ततः किमत्राह आत्मानमिति अत्र ज्वलनदीपवदंतःकरणे विजृंभमाणे सति घटादिपदार्थमिव एकं प्रधानमव्यवधानस्वरूपाच्छादकमायाव्यवधानरहितमात्मनः स्वरूपं स्वस्य प्रियतमं परमात्मानं चानुसृष्ट्यादिलक्षणवत्तया ईक्षते इति वा योजनाभेदः ॥ ३४ ॥ ॥ ॥ ॥

## मुक्ताश्रयं यर्हि निर्विषयं स्वचित्तं निर्वाणमृच्छति मनः सहसा यथार्चिः ॥ आत्मानमत्र पुरुषो व्यवधानमेकमन्वीक्षते प्रतिनिवृत्तगुणप्रवाहः ॥ ३४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

प्राकृतांतःकरणवु नष्टवादमेले श्रीहरियहोरतु मिक्कादस्मरणेयु बिडुतिरलु आयासविल्लदे समाधियॆंब सहजवाद हरिध्यानवु दॊरॆदद्दक्के फलवन्नु हेळुवरु—एण्णियिंद तोयिद बत्तियु इल्लदंतागलु दीपवु हागॆ तत्कालक्के नष्टवागुवदो, अदरंतेयॆ यावाग्गॆ जीवन चित्तवु 'निर्वाणस्वरूपमृच्छति'' स्थूलसूक्ष्मशरीरगळ अभिमानवन्नु बिडुवदो आग्गॆ स्वरूपचित्तवॆंब जीवचैतन्यदल्लि तन्मयवागुवदॆंदर्थवु. (ईपंक्तियविस्तारार्थवॆ मुंदिनदु) मन.सु शब्दमोदलाद सकल विषयगळन्नु बिट्टु— होरटु 'मुक्ताश्रय' नित्यमुक्तनाद श्रीहरियन्नु यावाग्गॆ आश्रयिसुवदो आग्गॆ 'निर्वाणमृच्छति' तन्न चित्स्वरूपद अभिमानदिंद स्थूल सूक्ष्मशरीरगळ अभिमानवन्नु परित्यजिसुवदु. ई अवस्थॆयल्लि 'पुरुषः' उपासनामाडतक्क जीवनु सर्वोत्तमनाद श्रीहरियन्ने 'अव्यवधानं' तनगू परमात्मनिगू मध्यदल्लि गोडॆयंतिरतक्क मायासंबंधवाद स्वगुणाच्छादिका परमाच्छादिकागळन्नु कळकॊंडु अंगैयोळगिन नेल्लिकायियंते प्रत्यक्षवागि नोडुवनु अंदरे तनगॆ साक्षात् बिंबराद ब्रह्मरुद्रादिगळन्नेल्लरन्नू काणुवनॆंदर्थवु. आदकारण आ हिंदॆहेळिद अनायासदिंद हरिध्यानमाडिदक्के अपरोक्षज्ञानवॆ फलवॆंदु हेळिदंतायितु. इंथ कार्यक्के प्रतिबंधकवाद संसारवु जीवनिगॆ इरुत्तिरलु बिंबापरोक्षवु ह्यागायितॆंदर हेळुवरु— 'प्रतिनिवृत्तगुणप्रवाहः' याव जीवनिगॆ गुणप्रवाहरूपवाद संसारवु तिरिगि बिट्टु होगिरुवदो अवनिगॆ इंथ अपरोक्षज्ञानवागुवदु. । (ई श्लोकक्के एरडने अर्थवु) एण्णि बत्ति मोदलादद्दु इल्लदिद्दरे दीपवु ह्यागॆ संपूर्ण नाशवागुवदो अदरंते यावाग्गॆ जीवन बाह्य मनःसु 'निर्वाणमृच्छति' विनाशवन्नु हॊंदुवदो, आग्गॆ 'स्वचित्तं' जीवन स्वरूपांतःकरणवु 'निर्वाणं' परमानंदवन्नु हॊंदुवदु. चंचलवागदे पूर्णवाद तैलपात्रेयल्लिद्द, दीपवु मनुष्यसंचार मोदलाद याव बाधॆयू इल्लदाग्गॆ स्वेच्छॆयिंद उरियोणवॆंब आनंदवन्नु ह्यागॆ हॊंदुवदो, आ प्रकटवाद दीपदंते जीवन अंतःकरणवु प्रकटवागलु बॆळकिनल्लि घटपट मोदलाद पदार्थगळु कंडंते स्वरूपाच्छादकवाद मायापटलरहितवाद तन्न (जीवन) स्वरूपवन्नू तनगॆ अत्यंत प्रीत्यास्पदनाद मत्तू मुख्यनाद सृष्ट्याद्यष्टकर्तृवाद परमात्मनस्वरूपवन्नू सह नोडुवनु ॥ ३४ ॥

जीवन्मुक्त्यवस्थामाह सोपीति श्लोकद्वयेन स जीवन्मुक्तोपि भगवंतमपरोक्षं पश्यन्नेतया मनसो निवृत्त्या बाह्यांतःकरणविनाशलक्षणया पुरा योऽज्ञानेनावृतः पश्चाद्ब्रह्मज्ञानेन प्रकाशितस्तस्मिन्महिम्नि स्वरूपज्ञानानंदलक्षणेऽवसितोहं निर्दोषज्ञानानंदादिरूपो भगवदधीनोस्मीति निश्चितः स्वात्मन् स्वात्मनि दुःखयोर्दुर्नाम्नो दुःखस्य

ख नाम्नः सुखस्य हेतुत्वं न विधत्तेऽभिमानं न करोति दुर्दुःखमिति विज्ञेयं खं सुखं च तयोर्यतः प्रदाता परमो विष्णुस्तस्माद्दुःखदनामवानितिवचनात्सुखदुःखयोर्वा कर्तरि बाह्यांतःकरणेऽसति नाशं गते ननु मनसो निवृत्तेः सुषुप्तावपि संभवाद्दुःखाभिमानाभाव विशेषवचनं कथमित्यतउक्तं चरमयेति चरमया संसारावसानजातया ॥ ३५ ॥ एवमपरोक्षज्ञानिनो देहपोषणादौ प्रयत्नोपि नास्ति सच्चिदानंदात्मकनारायणसंदर्शनसुधासमुद्रमग्नत्वादित्याह देहंत्विति येन देहेन स्वयं सिद्धोभूत्तासिद्धस्तं चरमं देहं न विपश्यति मदीयोयमिति नाभिमन्यते किंतु कपालमुक्तनारिकेलफलवद्देहात्मनो विविक्तत्वाद्धरिमेव पश्यति अनेन यतोध्यगमत्स्वरूपमिति विवृतं अनभिमानप्रकारमाह स्थितमिति स्वप्रेरणालक्षणगुरुत्वात् स्थितं तदभावादुझ्झितं पतितमिति तत्रोदाहरणमाह यथामदिरापानेनोत्पन्नमदेनांधः पुमान् दैवादुपेतं दैववशादपेतं परिकृतं परिवृतं वासो न जानाति तथेत्यर्थः ॥ ३६ ॥ ॥ ॥ ॥ ॥ ॥ ॥

**तस्मिन्महिम्न्यवसितः सुखदुःखदश्च हेतुत्वमप्यसति कर्तरि दुःखयोर्न ॥ स्वात्मन्विधत्त उपलब्धपरात्मकाष्ठः सोप्येतया चरमया मनसो निवृत्त्या ॥३५॥ देहंतु तं न चरम स्थितमुझ्झितंवा सिद्धो विपश्यति यतोध्यगमत्स्वरूपं॥दैवादुपेतमथ दैववशादपेतं वासो यथा परिकृतं मदिरामदांधः ॥ ३६ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥**

इन्नु जीवन्मुक्तनु ( अपरोक्षज्ञानियु ) इरतक्कस्थितियन्नु ई एरडुश्लोकगळिंद हेळुवरु— आ जीवन्मुक्तनादरू श्रीहरियन्नु प्रत्यक्षवागि नोडुत्त ' एतया मनसोनिवृत्या ' बाह्यांतःकरण विनाशवेंब मनोनिवृत्तियिंद अंदरे मनःसिनिंद होरगिन विषयेंद्रियेंद्रियव्यापार माडुवदन्नु बिडुवदरिंद पूर्वदल्लि अज्ञानदिंद मुत्तुगट्टिगोंडवनागिद्दु आ मेले ब्रह्मज्ञानदिंद प्रकाशवुळ्ळवनागि तन्न स्वरूपज्ञानानंदलक्षणवाद महिमेयल्लिद्दु नानु निर्दोषज्ञानानंदादिस्वरूपनु. मत्तु श्रीहरिय अधीननु. इरुवेनु एंदु निश्चयवुळ्ळवनागि तन्नल्लि सुखदुःखगळिगे कर्तृत्ववु इल्लवेंदु तिळिदु आ विषयक्के अभिमानवन्नु माडुवदिल्लवु. ( ई श्लोकदल्लि दुःखयोः एंब दुःखशब्दद द्विवचन मात्रविरुवदु अष्टरिंदले सुखदुःख विषयदल्लि एंब एरडू अर्थवु ह्यागायितेंदरे ) " दुःखयोः " एंबल्लि ' दुः ' एंबुवदरिंदले दुःखवेंदु तिळियतक्कद्दु ' ख ' एंबुवदरिंदले सुखवेंदु तिळियतक्कद्दु. यावकारण सुखदुःखगळेंब एरडरन्नू श्रीविष्णुवे कोडतक्कवनादरिंद आ श्रीविष्णुवु ' दुःखद ' नेनिसुवनु " एंब हरिवंशद प्रमाणानुसारवागि सुखदुःखगळिगे ताने ( जीवने ) कर्तृवेंब बाह्यांतःकरणवु नाशवागुत्तिरलु ' उपलब्धपरात्मकाष्ठः ' तन्न बिंबमूर्तियाद श्रीहरिय अपरोक्षज्ञानवन्नु होंदिदवनागि आ सुखदुःखगळिगे कर्तृत्ववु तन्नल्लि लेशमात्रवू इल्लवेंदु तिळकोळ्ळुवनु— सुखदुःखगळ अभिमानविल्लदे इरोणवेंब मनोव्यापार परित्यागवु सुषुप्तावस्थे ( गाढनिद्रावस्थे ) यल्लि सर्वरिगू

१ येन देहेन अपरोक्षज्ञानं जातं तं देहं चरमं पश्चात्सिद्धो अपरोक्षज्ञानी स्थितं स्वप्रेरणया एकस्थितं उझ्झितं स्थानरहितं वा नो पश्यति किंतु प्रारब्धात्प्रेरकेश्वरात् तत्प्रेरणयैवेति तत्तद्देह यावत । उपेतं कुत्र प्राप्तं अपेतं तस्मादपगतंच पश्यति । कुतः । यतोऽध्यगमत्स्वरूपं ॥ चैतन्यात्मकाभिमानवान्यतइत्यर्थः ॥ या ॥

इरुवदु. अथ सुखदुःखाभिमानवु योगिगे इल्लवेंदु हेळुवदु एनु विशेषवायितु, एंदरे— संसारवु असारवेंदु तिळिदु अदरल्लि वैराग्यवुत्पन्नवागि आ संसारवु मुगियुवकालक्के उत्पन्नवाद चरममनः परित्यागदिंद जागृदवस्थेये मोदलाद सर्वावस्थेगळल्लियू योगिगळिगे सुखदुःखाभिमानपरित्यागविरुवदु एंदु अभिप्रायवु ॥ ३५ ॥ ई प्रकार अपरोक्षज्ञानियादवनिगे तन्न संरक्षणे मोदलादवुगळल्लि प्रयत्नवु सहवागि इल्लादिल्लवु यार्केंदरे— सच्चिदानंदात्मकनाद नारायणन संदर्शनवेंब सुधा ( अमृत ) समुद्रदल्लि मग्ननादकारण एंब अभिप्रायदिंद हेळुवरु— योगीश्वरनिगे याव देहदिंद श्रीहरिय अपरोक्षज्ञानवु उत्पन्नवायितो, अदे देहवे चरम ( कडी ) देहवु. आ मेले सिद्धनाद अपरोक्षज्ञानियु आ तन्न भौतिक चरम देहवन्नु इदु नन्नदु एंदु तिळियदे ' स्थितं ' तन्न प्रेरणेयिंद ओंदे कडेगे कुळितद्दन्नू ' उझ्झितंवा ' कुळितस्थान बिट्टु ओडाडुवदन्नू नोडुवदिल्लवु. यार्केंदरे ' कपालमुक्तनारिकेलफलवत् ' ओणगिद टेंगिन कायोळगिन गिटकु मेलिन परटि ( चिप्पु ) यिंद बिच्चि ओळगिद्दरू बेरेयागि आ चिप्पिगेसंबंधविदे ह्यागे इरुवदो, आप्रकार मेलिद्द स्थूलदेहक्कू वळगिन तन्न जीवनस्वरूपक्कू एनू संबंधविल्लवेंदु तिळिदु, प्रारब्ध अदृष्टके प्रेरकनाद श्रीहरिय प्रेरणेयिंदले ई देहवु व्यापार माडुवदेंदु तिळिदु आ देहवु ओंदेकडेगे कुळितद्दन्नू ओडाडुवदन्नू तानु नोडुवदे इल्लवु. यार्केंदरे ' यतोऽध्यगमत्स्वरूपं ' तन्न चिदानंदात्मकवाद जीव चैतन्य स्वरूपदेहदल्लिये मात्र तन्नदेंब अभिमान उळ्ळवनागिद्दरिंद बाह्यदेहाभिमानविरुवदिल्लवु. आ अभिमानवु ह्यागे परित्यागमाडल्पट्टिरुवदेंदरे दृष्टांत हेळुवरु— मद्यप्राशन माडुवदरिंद मदांधनाद पुरुषनु दैवेच्छयिंद यारादरू तन्न मैमेले वस्त्रवन्नु होदिसिदाग्यू, अथवा ' परिकृतं '= कटितटे परिवेष्टितं– उट्टुगोंड वस्त्रवन्नु यारादरू यळकोंडु होदाग्यू ह्यागे अवुगळन्नु लक्षिसे तरुवदिल्लवो अदरंतेये अपरोक्षज्ञानियु श्रीहरिय ध्यानद गुंगिनल्लिद्दरिंद ई मेलिन देहद परिवेयन्नु बिट्टिरुवनेंदर्थवु. ॥ ३६ ॥

एवंविधस्य ज्ञानिनो देहस्तु ज्ञानोदयसमयएव पतत्युतकिंचित्कालं प्रतीक्षत इतिसंशये प्रारब्धकर्मक्षयएव देहपातसमये इत्याशयेनाह देहोपीति यावत् स्वारंभकं कर्म तावद्देहोपि सासुःसेंद्रियः प्रतीक्षते तस्मिन्स्वारंभके क्षीणेऽधिरूढसमाधियोगः प्राप्तसमाधियोगफलः सप्रपंचमिंद्रियादिप्रपंचसहितं देहं पुनर्न भजते तद्रक्षणादौ न प्रयतते इत्यर्थः कथमिव प्रतिबुद्धवत् यथा स्वप्नादुत्थितः स्वाप्नं स्वप्नदृष्टं देहं न पुनर्भजते तथेति ॥ ३७ ॥ देहएव सर्वेषामहंगच्छामीत्यात्मत्वेनाभिमतो यतस्तस्मात्तदभजनं मरणएव वेत्तीतिदेहात्मत्वमतनिरासायाह यथेति यथा पुत्रादेरात्मत्वेनाभिमतान्मर्त्यो मरणशीलो देहः पृथक् प्रतीयते तथा पुरुषो जीव आत्मत्वे नाभिमताद्देहाद्भिन्न इत्यन्वयः अपिपदेन देहात्मवादस्य निंदितत्वं सूचयति रेतोधातुर्वटकणिकेत्यादिवाक्यात् ॥ ३८ ॥ ॥ ॥ ॥

**देहोपि दैववशगः खलु कर्म यावत् स्वारंभकं प्रतिसमीक्षत एव सासुः ॥ तं सप्रपंचमधिरूढसमाधियोगः स्वाप्नं पुनर्न भजते प्रतिबुद्धवस्तुः ॥ ३७ ॥ यथा पुत्राच्च वित्ताच्च पृथङ्मर्त्यः प्रतीयते ॥ अप्यात्मत्वेनाभिमताद्देहादेः पुरुषस्तथा ॥ ३८ ॥**

१ तदवसानेत्याह ततमिति सप्रपंचं पुत्रादिसहितं तं देहं तज्जातीयदेहांतरं वा अधिरूढसमाधियोगः प्राप्तसमाधियोगफलः स अपरोक्षज्ञानी पुनर्न भजते न प्राप्नोति बीजाभावादितिभावः या

ई प्रकार ज्ञानिय देहवु भगवदपरोक्ष ज्ञानवादकूडले बिद्दु ( मृतवागि ) होगुवदो, अथवा अपरोक्षज्ञान उंटादमेले आ देहवु केलवु काल निरीक्षणे माडुत्त इरुवदो, एंदु संशयबंदरे योगीश्वररिगे अपरोक्षज्ञानवादनंतर मोक्षक्के होगुवदक्के प्रारब्धकर्मवेंबदोंदु प्रतिबंधकविरुवदु. आ प्रारब्धकर्मवु क्षीणवाद कूडले आ चरमदेहवु पतनवागुवदु एंब अभिप्रायदिंद हेळुवरु–अपरोक्षज्ञानानंतर योगिय देहवु एल्लियवरेगू प्रारब्धकर्मविरुवदो अल्लियवरेगे मार्गनिरीक्षणेमाडुत्त ' साधुः ' प्राणेंद्रियगळिंद सहितवागि इरुवदु आ प्रारब्धवु क्षीणवाद मेले ' अधिरूढसमाधियोगः ' समाधियोगदफलवन्नु होंदिद अपरोक्ष ज्ञानियु ' सप्रपंचं ' पुत्रमित्रादिगळिंद सहितवाद मत्तू प्राणेंद्रियादिगळिंद सहितवाद आ देहवन्नु अदक्के समानवाद मत्तोंदु देहवन्नादरू पुनःहोंदुवदिल्लवु. मत्तू इरुववरेगे आ देहरक्षणद प्रयत्नवन्नु माडुवदिल्लवु ( प्रारब्धक्षीणवादकूडले अपरोक्षज्ञानिय इद्ददेहवू नष्टवागि पुनःयाव देहगळू बरुवदिल्लवेंदर्थवु ) अदु ह्यागेंदरे दृष्टांतवन्नु हेळुवनु— स्वप्नदिंद एच्चत्तमेले पुरुषनु स्वप्नदल्लि कंडदेहवन्नु अदक्के सदृशवाद मत्तोंदु देहवन्नूसह ह्यागे होंदुवदिल्लवो अदरंते ॥ ३७ ॥ नानु होगुवेनु नानु निल्लुवेनु इवे मोदलाद व्यवहारदल्लि देहवे आत्मवागि सर्वरिगू संमतवागिरुवदु. इंथ देहवे आत्मवेंब अभिमानत्यागवे मरणवेनिसुवदु ( अंदरे सत्तमेले अभिमान बिडुवदे होरतु अदक्कू पूर्वदल्लि अभिमानत्यागवु एल्लि कंडिल्लवु. ) एंब देहात्मवादवन्नु खंडन माडुवदक्के दृष्टांतपूर्वकवागि हेळुवनु— तत्रदेव अभिमानावुळ्ळ हेंडतियदेहदिंदलू मगन देहदिंदलू तत्र द्रव्यदिंदलू तानु बेरे एंबदु तानुसह मृतनागतक्क मनुष्यनिगे ह्यागे अनुभवसिद्धवागिरुवदो, अदरंतेये अभिमानवुळ्ळ तन्न देह इंद्रियगळिंदादरू तानु भिन्ननागिरुवनु. ई श्लोकदल्लिय ' अपि ' एंब पददिंद देहात्मवादवु ' रेतो धातुर्वटकणिका घृतधूमाधिवासनं ' एंब इवेमोदलाद युक्तिबोधकवाक्यगळिंद ब्रह्मसूत्र भाष्यदल्लि आचार्यरिंद खंडन माडल्पट्टदे एंदु सूचिसल्पट्टितु. ॥ ३८ ॥

इदानीं जीवपरमात्मनोरपि भेदएवेत्याह यथोल्मुकादिति यथात्मत्वेनाभिमतादुल्मुकादेस्तद्दाहकोग्निः पृथङ्मतः ॥ ३९ ॥ तथा भूतेंद्रियांतःकरणात्पंचभूतदशेंद्रियमनोभ्यः प्रधानात्प्रकृतेः जीवसंज्ञितात्संसारिणश्च द्रष्टा सर्वज्ञो ब्रह्मसंज्ञित आत्मा परमात्मा भगवान् पृथगेवेत्यन्वयः ॥ ४० ॥ ॥ ॥

**यथोल्मुकादिस्फुलिंगाद्धूमाद्वापि स्वसंभवात् ॥ अप्यात्मत्वेनाभिमताद्दाहकोग्निः पृथङ्मतः ॥ ३९ ॥ भूतेंद्रियांतःकरणात्प्रधानाज्जीवसंज्ञितात् ॥ आत्मा तथा पृथक् द्रष्टा भगवान् ब्रह्मसंज्ञितः ॥४० ॥ ॥ ॥ ॥ ॥**

इन्नु जीवनिगू परमात्मनिगू भेदवे इरुवदेंबसंगतियन्नु हेळुवनु— अग्नियिंद उत्पन्नवाद किडिगळिंद सहितवाद कोळ्ळिये, अग्नियंतलू अग्नियिंद उत्पन्नवाद धूमवे ( होगेये ) अग्नियंतलू अज्ञानिगळिंद सम्मतवागिरुवदु. आदरू सुडतक्क अग्नियु कोळ्ळियिंद बेरे एंतलू धूमदिंद बेरेयंतलू ज्ञानिगळिगे ह्यागे संमतवागिरुवदो; ॥ ३९ ॥ अदरंते ' भूतेंद्रियांतःकरणात् '= पंचमहाभूतगळू दशेंद्रियगळू मनःसू इवुगळिंदलू, प्रकृतियिंदलू, जीवनेंबसंज्ञावुळ्ळ संसारियिंदलू; ईश्वरनेंबरिगू प्रेरकनाद सर्वज्ञनाद परब्रह्मनेंबसंज्ञावुळ्ळ अप्राहतषड्गुणैश्वर्य संपन्ननाद श्रीहरियु प्रत्येकवागिये इरुवनु. ॥ ' अत्र प्रमाण कथनाय दृष्ट सर्वज्ञ इत्यादिकमुक्तं । वेदे श्रूयमाणं सर्वज्ञ इत्यादि पदजातं जीवादिष्वसंभाव्यमानार्थकं तदरिक्तमीश्वरं गमयतीतिभावः ' जीवेश्वररल्लि भेदविषयक्के प्रमाणतोरिसुवदक्के दृष्ट सर्वज्ञ मोदलाद विशेषणगळु ईश्वरनिगे हेळल्पट्टवे. मत्तू वेददल्लि हेळतक्क सर्वज्ञ दृष्ट मोदलाद पदसमूहद अर्थवु जीवनल्लि संभविसुवदिल्लवु. आद्दरिंद आ पदगळल्लि हेळतक्क गुणवुळ्ळवनु जीवनिंद भिन्ननाद ईश्वरनु इरुवनेंदु सिद्धवागुवदु. एंदु यादवाचार्यर अभिप्रायवु. ॥ ४० ॥

भिन्नेषु जीवेषु स्थितस्य परमात्मन उपास्तिप्रकारं कथयति सर्वभूतेष्विति सर्वभूतेष्वंतर्यामित्वेनात्मानं हरिमीक्षेत सर्वभूतान्यात्मनि हरावाधारत्वेनेक्षेत किंचानन्यभावेन सर्वांतर्यामिरूपाण्यभेदेनेक्षेत अभेदेनेत्युक्तिं विहायानन्यभावेनेतिवचनमनर्थहेतुत्वात्तद्रूपाणामन्यत्वभावना सर्वथा न कार्येति द्योतनाय किंच भूतेष्वपि जीवेष्वपि तदात्मतां तस्य हरेरादानादिकर्तृतां चेक्षेत अनेनानुग्राह्यानुग्राहकत्वद्योतनेन जीवपरमात्मनोर्भेदः पारमार्थिकइत्युक्तं भवति आदानकर्तृत्वं भूतविषयेन स्वविषये नित्यतृप्तत्वात् ॥ ४१ ॥ अधिष्ठानवैलक्षण्याद्धिष्ठातृरूपाणां वैलक्षण्यं न शंकनीयमिति इममर्थं सदृष्टांतं समर्थयते स्वयोनिष्विति यथैकं ज्योतिरग्न्याख्यं स्वयोनिषु कारणेषु काष्ठेषु योनीनां दारूणां गुणवैषम्यादार्द्रशुष्कत्वादिवैलक्षण्यात् नानाविधलक्षणमिव प्रतीयते तथाप्रकृतौ प्रकृतिकार्ये जगति स्थितो आत्मा हरिः विलक्षणइव प्रतीयते क्वचिद्बहुसामर्थ्याभिव्यक्तिमान् क्वापि अल्पसामर्थ्याभिव्यक्तिमानित्यादिरूपेण ॥ ४२ ॥ ॥ ॥ ॥ ॥ ॥ ॥

**सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ॥ ईक्षेतानन्यभावेन भूतेषुच तदात्मतां ॥ ४१ ॥ स्वयोनिषु यथाज्योतिरेकं नाना प्रतीयते॥ योनीनां गुणवैषम्यात्तथात्मा प्रकृतौ स्थितः ॥ ४२ ॥ ॥ ॥ ॥ ॥ ॥**

भिन्नराद अनेक जीवरल्लिद्द परमात्मन उपासना प्रकारवन्नु हेळुवनु— सर्व वस्तुगळल्लि अंतर्यामियागि श्रीहरियु इरुवनु एंदु चिंतिसबेकु. मत्तू आ सर्ववस्तुगळू श्रीहरियल्लि अवनन्ने आश्रयसिगोंडिरुववु एंदु चिंतिसबेकु. मत्तू सर्ववस्तुगळल्लि अंतर्यामियागिद्द परमात्मन अनेकरूपगळिगे परस्पर भेदविल्लवेंदु तिळकोळ्ळबेकु. आदरे मूलश्लोकदल्लि ' अभेदेन ' एंब पदप्रयोग माडुवदन्नु बिट्टु ' अनन्यभावेन ' एंब पदप्रयोगवु बेरे अर्थक्के कारणवागुवदु हीगे याके प्रयोगिसिदरेंदरे— सर्वत्रव्याप्तवाद अंतर्यामि भगवद्रूपगळु परमात्मनिंद अन्यवादद्देंदु भावना सर्वथा माडगूडदेंदु तिळिसुवदक्के हीगे प्रयोगिसिरुवरु. ' भूतेषुचतदात्मतां ' मत्तू सर्वप्राणिगळल्लि कोडुव तोगोळ्ळुव मोदलादव्यवहारगळन्नु आ अंतर्यामियाद श्रीहरिये माडुवनु एंदु चिंतिसबेकु. ईप्रकार जीवनु श्रीहरिय अनुग्रहवन्नु पडेयतक्कवनु. श्रीहरियु जीवनिगे अनुग्रह माडतक्कवनु एंदु हेळुवदरिंद जीवनिगू परमात्मनिगू इरतक्क भेदवु अद्वैतरु हेळुवंते व्यावहारिकवल्लवु. केवल पारमार्थिकवे. अंदरे कडेतनक सत्यवाद भेदवे इरुवदु एंदु तिळिसल्पडुवदु. मत्तू सर्वजीवरल्लिद्दु श्रीहरियु माडुव, कोडुव तेगेदुकोळ्ळुव मोदलाद व्यवहारवादरू तानु नित्यतृप्तनादद्दरिंद आया जीवरसलुवागिये होरतु तन्न सलुवागियल्लवु. ॥४१ ॥ ' अधिष्ठान ' परमात्मनु इरुवदक्के स्थळगळु ओंदरिंदोंदु विलक्षणवागि अनेक प्रकारवागिद्दरू ' अधिष्ठातृ आया स्थळगळल्लिरतक्क परमात्मन

रूपगळल्लि वैलक्षण्यवु ( अनेक प्रकारवु ) इरुवदेंदु संदेहपडगूडदेंब ई अर्थवन्नु दृष्टांतसहितवागि सिद्ध पडिसुवनु— ' ज्योतिः ' तेजोमयवाद अग्नियु तन्न उत्पत्तिगे कारणवाद कट्टिगेगळु केलवु हसियागियू केलवु वोणगिदवू इरुववु.आदरे, हसीकट्टिगेयल्लि अग्नियु मंदज्वालावुळ्ळद्दागियू वणकट्टिगेयल्लि प्रखरज्वालावुळ्ळद्दागियू विलक्षणवागि तोरुवदो; अदरंतेये प्रकृतिय अनेक विकारदिंद उत्पन्नवाद अनेक विधवाद जगत्तिनल्लिद्दु श्रीहरियादरू विलक्षणनागि तोरुवनु. ब्रह्मादिगळंदरे- केलवु जनरल्लिद्दु बहुसामर्थ्यवन्नु प्रकटमाडुत्तलू केलवरल्लि अल्प सामर्थ्य प्रकट माडुत्तलू, इवे मोदलाद स्वरूपगळिंद विलक्षणनागि तोरुवनु. ( आदरू अग्नियु काष्टगळ गुणानुसारवागि विलक्षणनागि तोरिदाग्यू आ वैलक्षण्यवु काष्टद गुणवे होरतु अग्निय गुणवल्ल. अग्नियु सर्वत्र एकप्रकारवे इद्दागो अदरंते परमात्मनादरू एक प्रकारनेंदु तिळियतक्कद्दु. ) ॥ ४२ ॥

मथितार्थमाह तस्मादिति यस्मात्सर्वस्मादन्यः श्रीनारायणः तस्मात्स्वां स्वाधीनां जडप्रकृतिं देवीं कार्यरूपेण द्योतमानां तदभिमानिनीं देवीं चित्प्रकृतिं च सदसदात्मिकां कार्यकारणव्यापिनीं दुर्विभाव्यां ब्रह्मादिभिरपि निरूपयितुमशक्यां पराभाव्यातिक्रम्य तदुत्तमत्वेनैव स्थित्वा निरस्तसाम्यातिशयेन सर्वदोषविवर्जितेन सर्वगुणपूर्णेन त्रिकालेप्येकप्रकारेण स्वरूपेणावतिष्ठत इत्यन्वयः तदुक्तं सर्वभूतस्थमीशेशं जेतारं प्रकृतेरपि आविशेषं सदैवैकं चिंतयन्प्रविमुच्यतइति ॥ ४३ ॥ सिंहावलोकन्यायेनोपासकस्येत्थं भावांतरं वक्ति अन्वयेति अन्यदेशेन्यरहितदेशेन्यकालेन्यरहिते कालेच सत्वलक्षणादन्वयव्यतिरेकात्सिद्धो यश्च साक्षादीक्षत इति साक्षी " नहिद्रष्टुर्दृष्टेर्विपरिलोपोविद्यतइतिश्रुतेः " आत्मा यश्चाप्नोति यदा दत्तइत्यादेः सर्वव्यापी परमात्मेति यल्लक्षणं तल्लक्षणं व्यभिचारिणः अनित्यस्यास्य प्रपंचस्य वैतथ्यं निष्प्रयोजनत्वं व्यभिचारमनित्यत्वंच निद्रांते ब्राह्मे मुहूर्तउत्थाय चिंतयेदेतद्धरिप्रसादजनकमिति शेषइत्यर्थः ॥ ४४ ॥ इति श्रीभा० म० तृ० विजय० टीकायां एकोनत्रिंशोध्यायः ॥ २९ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

**तस्मादिमां स्वां प्रकृतिं देवीं सदसदात्मिकां॥ दुर्विभाव्यां पराभाव्यस्वरूपेणावतिष्ठते॥४३॥ अन्वयव्यतिरेकाच्च साक्ष्यात्मा व्यभिचारिणः ॥ वैतथ्यं व्यभिचारंच निद्रांतेस्यानुचिंतयेत् ॥४४॥ इतिश्रीभा० महापु० तृ० एकोनत्रिंशोध्यायः॥२९॥**

फलितार्थवन्नु हेळुवनु— याव कारण श्रीनारायणनु सर्ववस्तुगळिंद भिन्ननागिरुवनो, आद्दरिंद— तन्न ( परमात्मन ) अधीनळागिद्द, कळ्ळु मण्णुगळे मोदलाद अनेकवस्तुगळ विकारदिंद उत्पन्नवागतक्क कार्यरूपदिंद तोरतक्क जड प्रकृतियन्नू; मत्तू आ जडप्रकृतिगे अभिमानियाद, कार्य कारणगळल्लि व्याप्तळाद, ब्रह्मने मोदलादवरिंद हीगे एंदु हेळलशक्यस्वरूपळाद, चित्प्रकृतियन्नु मीरि, अंदरे अवळिगिंत उत्तमस्वरूपदिंद इद्दु, मत्तू यावगिंत उत्तमरू यावन समरादवरू इल्लवो अंथ सर्वदोषदूरनागि सर्व गुणपूर्णनागि त्रिकालदल्लियू ओंदे स्वरूपदिंद श्रीहरियु इरुवनु. ' सर्व प्राणिगळल्लिरतक्क रुद्रादिदेवतिगळिगे स्वामियाद, मत्तू प्रकृतियन्नादरू जयिसतक्क सर्वदा एनू हेच्चु कडिमे इल्लदे एकप्रकारनागिद्द श्रीहरियन्नु चिंतन माडतक्कवनु संसारदिंद मुक्तनागुवनु ' एंब तात्पर्यवाक्यवु मेले हेळिद अर्थक्के प्रमाणवागिरुवदु. ॥ ४३ ॥ सिंहावलोकनन्यायवेंदरे— सिंहवु ओंदु केलसवन्नु पूर्णमाडि, मुंदक्के होगुवदक्के हादी हिडिद मेले, पुनः हिंदिन केलसवु मत्तेनादरू उळिदिरुवदो एनो एंदु हिंदक्के तिरुगिनोडुवदु. इदक्के सिंहावलोकनन्यायवेन्नुवरु. अदरंते हिंदे उपासना क्रमवन्नु हेळि मुगिसिदाग्यू मत्ते एनु उळिदिरुवदो एंबंते भगवदुपासना माडतक्कवनिगे ई मत्तोंदु प्रकारद उपासनेयन्नु हेळुवनु— ' अन्वयव्यतिरेकात् ' एल्ल देशकालगळल्लि परमात्मनु व्याप्तनागिरुवनु. इदु अन्वयव्याप्तियु. अन्यरु इल्लदेइद्द देशदल्लियू यारू इल्लदकालदल्लियू परमात्मनु इरुवनु. इदेव्यतिरेकव्याप्तियु. इंथ अन्वयव्यतिरेकव्याप्तिगळिंद यावपरमात्मनु सिद्धनागिरुवनो, यावनु प्रतियोंदु वस्तुवन्नु प्रत्यक्षवागि नोडुवदरिंद साक्षी एनिसिकोळ्ळुवनो ' परमात्मन दृष्टिगे प्रतिबंधकवु एनू इल्लवु ' एंदु श्रुतियु हेळुवदु. ' आत्मा ' यावनु सर्ववन्नू होंदुवनु मत्तू एल्लरिगू एल्लवन्नू तंदुकोडुवनु. सर्वव्यापियागि यावनु इरुवनु. एंब परमात्मन लक्षणवन्नू ' व्यभिचारिणः ' अनित्यवाद प्रपंचवु एनू प्रयोजनविल्लदेंतलू अनित्यवादद्देंतलू, उपासना माडतक्क योगियु दिनालू निद्रेयु मुगिदकूडले अंदरे ब्राह्म मुहूर्तदल्लि नाल्कु घळिगिरात्रियु उळिदिरुव बेळगुमुंजाविनल्लि एद्दु चिंतिसबेकु. ई प्रकार चिंतिसुवदरिंद श्रीहरिय अनुग्रहक्कुंटागुवदु. एंदु अर्थवु. ॥ ४४ ॥ हीगे ' सुखार्थबोधनी ' एंब प्राकृतटिप्पणेय २९ ने अध्यायवु मुगिदितु—

एवं तावज्ज्ञानान्मोक्षोज्ञानं चाष्टांगयोगेन प्रचितया भगवदुपासनया जायतइत्यभिहितं अधुना भक्तियोगस्य तारतम्यमभिधीयतेस्मिन्नध्याये तत्प्रसंजयितुं सामान्यतोज्ञातमपि विविच्य ज्ञातुं महदादिलक्षणं पृच्छति देवहूतिर्लक्षणमित्यादिना येन लक्षणेनामीषां महदादीनां पारमार्थिकं स्वरूपं लक्ष्यते ज्ञायते ॥ १ ॥ वक्तव्यार्थे नियममाह यथेति यथासांख्येषूक्तं तथाकथितं महदादिलक्षणज्ञानं पुरुषार्थोपयोगि स्यादितिशेषः अन्यशास्त्रोक्तं किंनस्यादिति तत्राह यन्मूलमिति यत्सांख्यमूलं तल्लक्षणं प्रचक्षते प्राज्ञा इतिशेषः तल्लक्षणं मम ब्रूहीत्यन्वयः यद्वा यथा यथावत्सांख्येषूक्तं तथाकथितं मे ब्रूहीत्यन्वयः सांख्यमूलत्वाल्लक्षणस्येत्यर्थ इति- उक्तमपीममर्थं विस्तरेण ब्रूहीत्याह भक्तियोगस्येति मार्गे प्रकारं ॥ २ ॥ नकेवलं भक्तियोगमार्गेणालं वैराग्याभावे तस्य चंचलत्वसंभवादतो विरक्तिमताभाव्यम- तस्तत्प्रकारोपि वक्तव्यइत्याह विरागइति पुरुषः सर्वतो विरागो विगतरागो भवेदिति येनातो जीवलोकस्य गर्भवासादिलक्षणाः विविधाः कर्मसंसृतीर्ममाचक्ष्वेत्यन्वयः यद्वायेन संसृतीनां ज्ञानेन विरागो भवेत्तादृग्ज्ञानोत्पत्तिं आचक्ष्वेति ॥ ३ ॥ ॥ ॥ ॥ ॥ ॥ ॥

**देवहूतिरुवाच ॥ लक्षणं महदादीनां प्रकृतेः पुरुषस्यच ॥ स्वरूपं लक्ष्यतेऽमीषां येन तत्पारमार्थिकं ॥ १ ॥ यथासांख्येषु कथितं यन्मूलं तत्प्रचक्षते ॥ भक्तियोगस्य मे मार्गं ब्रूहि विस्तरशः प्रभो॥२॥विरागो येन पुरुषो भगवन्सर्वतोभवेत् ॥ आचक्ष्व जीवलोकस्य विविधाः कर्मसंसृतीः ॥ ३ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥**

ई प्रकारवागि मोक्षवु ज्ञानदिंद दोरेयुवदु. आ ज्ञानवु अष्टांग योगाभ्यासदिंद प्रबलवाद श्रीहरिय उपासनादिंद उंटागुवदेंदु हिंदे हेळल्पट्टितु. ई अध्यायदल्लि भक्तियोगद तारतम्यवु हेळल्पडुवदु. आ प्रसक्तियल्लि होरडिसुवदक्के मोदलु तनगे साधारणवागि महत्तत्वमोदलादवुगळ लक्षणवु तिळिदिद्दाग्यू अदन्ने विस्तारवागि तिळकोळ्ळुवदक्के देवहूतियु महत्तत्ववे मोदलादवुगळ लक्षणवन्नु पश्नमाडुवळु— हे कपिलरूपियाद परमात्मने प्रकृतियु परमात्मनु महत्तत्व मोदलाद तत्वगळु इवुगळ पारमार्थिक स्वरूपवु ( निजस्वरूपवु ) याव लक्षणदिंद तिळियुवदो आ लक्षणवन्नु हेळु— ॥ १ ॥ मुंदे हेळतक्क अर्थवन्नु याव प्रकारवागि हेळबेकेंदरे आ नियमवन्नु हेळुवळु— मोक्षवेंब पुरुषार्थक्के उपयोगागुवंते सांख्यशास्त्रदल्लि यावप्रकार महदादि तत्वगळ लक्षणज्ञानवु हेळल्पट्टदेयो अदरंतेये निश्चिद ननगे हेळल्पट्टितु. आ हिंदे हेळिदलक्षणवु मत्तोंदुशास्त्रदल्लि हेळिद्देदु याके आगबारदु ? एंदरे ' यन्मूलं तत्प्रचक्षते ' आ महदादि तत्वगळ लक्षणवु सांख्यशास्त्र मूलकवादद्दे एंदु बल्लवरु हेळुवरु— अथवा सांख्यशास्त्रदल्लि यावप्रकार सरियागि महदादितत्वगळलक्षणवु हेळल्पट्टदेयो आ प्रकारवे नीनु इदुवरेगू हेळिरुवि. अदे प्रकारवागिये इन्नादरू आ महदादि तत्वगळ लक्षणवन्नु भक्तियोगदमार्गवन्नू विस्तारवागि हेळु ॥ २ ॥ मोक्षप्राप्तिगे केवल भक्तियोगमार्गदिंदले साकागुवदिल्लवु. यार्केंदरे वैराग्यविल्लदिद्दरे आ भक्तियु चंचलवागुवदु. आदकारण विरक्तियुळ्ळवनिगे भक्तियिंद मोक्षवादीतु. आद्दरिंद आ विरक्तियु हागे हुट्टुवदो आ संगतियन्नादरू हेळबेकु एंदु केळुवळु— ' हे भगवन् ' अव्याहतषड्गुणैश्वर्यसंपन्ननाद परमात्मने पुरुषनु याव अनुभवदिंद संसारदल्लि नानु नन्नदेंब ममतेयन्नु बिडुवनो अंथ जीवर गर्भवासदुःखमोदलाद अनेक प्रकारवाद कर्मदिंदबरुव संसारवन्नु, ननगे हेळु. अथवा— याव संसारद ज्ञानदिंद पुरुषनिगे वैराग्यवु उत्पन्नवागुवदो आ ज्ञानवन्नु ननगे हेळु. ॥ ३ ॥

कालस्वरूपज्ञानमपि पुरुषार्थोपयोगीति तद्विषयप्रश्नं करोति कालस्येति जनाः यद्धेतोर्यस्य कालनाम्नस्तव भयनिमित्तात्कुशलं कुर्वंति परेषामुत्तमानां सकाशादपि परस्योत्तमस्यच ते तव ईश्वररूपस्यैश्वर्यमूर्तेः कालस्य स्वरूपमाचक्ष्वेत्यन्वयः बताद्भुतं स्त्रीत्वादिदं बोद्धुमशक्यं तथापि त्वत्प्रसादाच्छक्तास्यामित्यामंत्रयामि ' बतत्वामंत्रणेद्भुत ' इतियादवः ॥ ४ ॥ ऋषिदेवादिष्वेकं प्रत्ययं प्रश्नः किंनस्यात्किमिति मां प्रतीत्याशंक्य तस्य तादृशप्रश्नवचनप्रभुत्वाभावादिह लोके तव ज्ञानप्रवर्तनायावतीर्णत्वाच्च त्वमेव समर्थइतिभावेनाह लोकस्येति लुक्प्रकाशइतिधातोः प्रकाशो ज्ञानं लोकस्य परमात्मज्ञानप्राप्तियोग्यस्य जनस्य संसारान्मुमुक्षोरित्यर्थः हिताय योगभास्करः ज्ञानयोगादित्यतस्त्वमाविरासीः किललोकवेदादिवार्ता अन्यस्यैतत्कसामर्थ्याभावादिदं संभावितंच वार्तासंभावयोःकिलेतिच अवतारसाफल्यमेवोपपादयति अचक्षुषइत्यादिना प्रत्यक्षतो दृश्यमानत्वाच्चक्षुर्हीनत्ववचनं व्याहतमित्यतउक्तं चिरं प्रसुप्तस्येति अनाश्रयेऽपारेतमस्यविद्यालक्षणेऽनादितएव प्रसुप्तस्य शयानस्य तत्फलमाह मिथ्याभिमतेरिति बोधकाभावादन्यथाज्ञानिनो देहाद्यभिमानित्वादेतत्फलमाह श्रांतस्येति कर्मसु पुण्यपापलक्षणेष्वनुविद्धयानुरक्तया धिया श्रांतस्यानवस्थितेरिति ॥ ५ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥



**कालस्येश्वररूपस्य परेषांच परस्य ते ॥ स्वरूपं बत कुर्वंति यद्धेतोः कुशलं जनाः ॥ ४ ॥ ॥ ॥ ॥**

**लोकस्य मिथ्याभिमतेरचक्षुषश्चिरं प्रसुप्तस्य तमस्यनाश्रये ॥ श्रांतस्य कर्मण्यनुविद्धया धिया त्वमाविरासीः किल योगभास्करः ॥५॥**

कालस्वरूपज्ञानवादरू मोक्षक्के उपयुक्तवादद्दरिंद आ कालसंबंधवाद प्रश्नमाडुवळु— ( देवहूतियु )— हे परमात्मने— जनरु याव कालस्वरूपियाद निन्न भयदिंद पुण्यकार्यगळन्नु माडुवरो, उत्तमरकिंतलू अत्युत्तमनाद ऐश्वर्यमूर्तियाद आ निन्न कालस्वरूपवन्नु ननगे हेळु ' बत ' इदु अद्भुतवु नानु स्त्रीयळाद्दरिंद ई विषयवु ननगे तिळियलशक्यवादाग्यू निन्न परमप्रसाददिंद तिळकोळ्ळुवदक्के शक्तळागबहुदेंदु बेडिकोळ्ळुवेनु. ' बत ' एंब शब्दवु बेडिकोळ्ळुवदरल्लियू अद्भुतदल्लियू प्रयोगिसल्पडुवदेंदु कोशोक्तियिद्दरिंद इष्टु अर्थवु हेळल्पट्टितु. ॥ ४ ॥ ई ( मेलेहेळिद ) प्रश्नेयन्नु ऋषिगळन्नागली देवतिगळन्नागली यारादरोब्बरन्नु कुरितु माडबहुदागित्तु. नन्नन्ने ( कपिलनन्ने ) केळबेकेंबदेनु अवश्यकतेयु एंदरे आ ऋषिगळू देवतिगळू ई प्रश्नक्के उत्तरहेळुवदक्के समर्थरल्लवाद्दरिंदले ईलोकदल्लि ज्ञानोपदेशमाडुवदक्कागिये नीनु अवतारमाडिद्दरिंद ई प्रश्नक्के उत्तरहेळुवदक्के नीने ( कपिलने ) समर्थनु एब अभिप्रायदिंद हेळुवळु— ' लोकस्य ' लुक् एंब धातुवु प्रकाशार्थवन्नु हेळुवदरिंद प्रकाशवेंदरे प्रकृतक्के ज्ञानवेंदर्थमाडि, परमात्मन ज्ञान प्राप्तियोग्यवाद मत्तू संसारदिंद मोक्षवन्नु अपक्षमाडतक्क जनक्के हितवागुवदक्के ' योगभास्करः ' ज्ञानयोगप्रकाश माडुवदक्के सूर्यसदृशनाद नीनु ( कपिलनु ) नन्नल्लि ( देवहूतियल्लि ) प्रादुर्भूतनागिरुवि · किल ' एंदु लोकदल्लियू वेदगळल्लियू वार्तेइरुवदु. निन्न होरतु मत्तोब्बरिगे ज्ञान प्रकाशमाडतक्क इंथ सामर्थ्यविल्लद्दरिंद ई वार्तेयु उचितवादद्देसरि. ' किल ' एंब शब्दवु वार्तेयल्लियू संभावनादल्लियू उपयोगिसल्पडुवदेंदु प्रयोगविद्दरिंद हीगे अर्थ माडल्पट्टितु. इन्नु निन्न ( कपिलन ) अवतारवु सफलवाददे एंदु हेळुवळु—( ओं ज्ञानप्राप्तियोग्यवाद मोक्षापेक्षि जनवु ह्यागागिरुवदेंदरे ) ' अचक्षुषः ' कण्णु इल्लदेंदर्थवु. प्रत्यक्षवागि एल्लरिगू कण्णुगळिद्दाग्यू हीगे हेळुवदु तप्पुवदेंदरे— ' चिरंप्रसुप्तस्य ' आश्रयविल्लद अपारवाद अविद्या एंब कत्तलेयल्लि अनादिकालदिंद कण्णुमुच्चिकोंडु अंदरे ज्ञानविल्लदे मलिगिरुवदु. आ अज्ञानदल्लि मलिगिद्दके एनु आगिदे एंदरे ' मिथ्याभिमतेः ' यथार्थज्ञानवन्नु उपदेशमाडतक्क गुरुगळिल्लद्दरिंद देहवे नानेंब अन्यथा अभिमानवुळ्ळदागिरुवदु. ' श्रांतस्य ' मत्तू पुण्यपापगळेंब कर्मगळल्लि आसक्त बुद्धियिंद अनवस्थेयन्नु होंदिद; इंथ अवस्थेयन्नु होंदिद मोक्षयोग्यजनक्के ज्ञानयोगोपदेशमाडि उद्धार माडुवदक्के नीनु अवतरिसिरुवि एंब अभिप्रायवु— ॥ ५ ॥

मातुर्वचः श्रुत्वा कपिलेन भगवता किमुत्तरं प्रत्यूचे इतीतरच्चोद्यं परिहरति मैत्रेयइति अर्दगताविति धातोः करुणामर्दितोगतः अनेन करुणैव वक्तव्यत्वे कारणमित्यसूचि ॥ ६ ॥ पुरुषार्थसाधनेषु भक्तियोगस्य प्राधान्यादत्र प्रथमतस्तत्प्रकारं निरूपयति भक्तियोगइति भामिनि सौंदर्यादिगुणपूर्णे मन्मातः शास्त्रमार्गैर्भाव्यते निरूप्यते बाहुविध्ये निमित्तमाह स्वभावेति तामसादिस्वभावोद्बोधकसत्वादिगुणभेदेन भावो भक्तिर्विभिद्यते तामसादिभेदेन नाना भवतीत्यर्थः ॥ ७ ॥

**मैत्रेयउवाच ॥ इतिमातुर्वचः श्लक्ष्णं प्रतिनंद्य महामुनिः ॥ आबभाषे कुरुश्रेष्ठ प्रीतस्तां करुणार्दितः ॥ ६ ॥ श्रीभगवानुवाच ॥ भक्तियोगो बहुविधो मार्गैर्भामिनि भाव्यते ॥ स्वभावगुणमार्गेण पुंसां भावो विभिद्यते ॥ ७ ॥ ॥**

ई प्रकारवागि तायिय वाक्यवन्नु केळि कपिलरूपियाद परमात्मनिंद एनेंदु उत्तरवु हेळल्पट्टितु, एंब इतर जनर संदेहवन्नु मैत्रेयरु परिहरिसुत्त विदुरनिगे हेळुवरु– मैत्रेयरु अंदरु— एलै कौरवर कुलदल्लि श्रेष्ठनेनिसिगोंडविदुरने— ई प्रकारवागि कपिलरूपियाद श्रीहरियु, तायिय मनोहरवाद वाक्यवन्नु केळि तायिय मेले करुणावन्नु होंदि प्रीतनागि आ देवहूतियन्नु कुरितु उत्तरस्वरूपवाद मातुगळाडलारंभिसिदनु. 'करुणार्दितः' एंबल्लि अर्द एंब धातुवु. होंदि, एंब अर्थवन्नु, हेळुवदरिंद करुणावन्नु होंदिदवनागि एंदु अर्थवु. ई शब्दप्रयोगदिंद कपिलनु देवहूतिगे हेळुवदक्के केवल अवन करुणेये कारणवेंदु सूचितवागुवदु. ॥ ६ ॥ कपिलरूपियाद परमात्मनु हेळुवनु— मोक्षक्के उपयुक्तवाद साधनगळल्लि भक्तियोगवु मुख्यवादकारण इल्लि मोदलु भक्तियोगद संगतियन्नु हेळुवनु— हेभामिनि— सौंदर्य मोदलाद सद्गुण युक्तळाद तायिये, भक्तियोगवु अनेक मार्गगळिंद अनेकप्रकारवागिरुवदेंदु शास्त्रमार्गगळिंद हेळल्पडुवदु. आ भक्तियोगवु अनेक प्रकारवागिरुवदक्के कारणवन्नु हेळुवनु— सात्विक जीवरु, राजस जीवरु– तामस जीवरु एंब त्रिविध जीवराशिगळिगे ई त्रिविध स्वभाववु अनादियिंद सिद्धवागिरुवदु. आया जीवर स्वभावक्के तक्कंते आया कालक्के प्रकटवागतक्क सत्वरजस्तमोगुणगळ भेददिंद भक्तियादरू भेदवागुवदेंदर्थवु. ॥ ७ ॥

बाहुविध्यं दर्शयति अभिसंधायेति यो हिंसां परोपद्रवं दंभं धर्मध्वजवृत्तिं मात्सर्यं चाभिसंधाय मनसिकृत्वा हरिभक्तेषु संरंभी गूढद्वेषोभिन्नदृक् वस्त्वयथार्थदर्शी मयि भावं कुर्यात्स तामसभक्त इत्युच्यत इत्यन्वयः ॥८॥ शब्दादिविषयान् दिक्षु व्याप्तं यशःछत्रचामराद्यैश्वर्यं वा मनसाभिधाय संकल्प्य योर्चादौ प्रतिमादौ मामर्चयेत् स पृथक्भावस्तद्रूपाणां भेददर्शी अर्चादिस्थितानां तेषां रूपाणां भेदं पश्यन् राजसो भक्तः॥९॥ यः कर्मनिर्हारं पापक्षयमुद्दिश्य मां यजेत् परस्मिन्सर्वोत्तमे मयि तदर्पणं कर्मार्पणं चोद्दिश्य यजेत् यष्टव्यं विहितत्वान्ममेदं कर्तव्यमितिवा मांयजेदपृथग्भावः मद्रूपाणामभेददर्शी स सात्विको भक्तः राजससात्विकयोर्भेदं पृथगपृथग्भावावेव निमित्तं नत्वर्चादावर्चनं अज्ञस्य विहितत्वात्तज्ज्ञस्य गुणहेतुत्वात् तदुक्तं अज्ञोर्चयेदेवार्चायामन्यथादोषवान् भवेत् ज्ञस्त्वर्चयन् सुगुणवानन्यथादोषवान्नत्विति ॥ १० ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

**अभिसंधाय यो हिंसां दंभं मात्सर्यमेवच ॥ संरंभी भिन्नदृग्भावं मयि कुर्यात्स तामसः ॥ ८ ॥ विषयानभिसंधाय यश ऐश्वर्यमेवच ॥ अर्चादावर्चयेद्योमां पृथग्भावः स राजसः ॥ ९ ॥ कर्मनिर्हारमुद्दिश्य परस्मिन्वातदर्पणं ॥ यजेद्यष्टव्यमितिवा पृथग्भावः स सात्विकः ॥ १० ॥ ॥ ॥ ॥ ॥ ॥ ॥**

भक्तियोगवु अनेक प्रकारवागिरुवदन्नु तोरिसुवनु— यावनु एरडने जनरिगे उपद्रवबाडिसबेकेंदु मनसिनल्लि योचिसिगोंडागली अथवा ताने धर्मिष्ठनेंदु मेले तोरिसुवदंभकागली अथवा ओब्बर मेले मात्सर्यवन्नागली मनःसिनल्लि अनुसंधान माडिकोंडु हरिभक्तरल्लि 'संरंभी' गूढद्वेषवुळ्ळवनागि 'भिन्नदृक्' वस्तुगळ सरियाद ज्ञानविल्लदे नन्नल्लि (श्रीहरियल्लि.) भक्तियन्नु



माडुवनो अवनु तामस भक्तनेनिसुवनु. ॥ ८ ॥ मनोहरवाद गायन, स्त्रीभोग मोदलाद विषयभोगगळन्नु मनसिनल्लि अनुसंधान माडिकोंडागली सकल दिक्प्रांतगळल्लि तन्न कीर्तियु हब्बुवदकागली छत्रचामर मोदलाद ऐश्वर्य प्राप्तियागबेकेंदागली मनःसिनल्लि योचिसिगोंडु श्रीहरिय प्रतिमे मोदलादवुगळल्लि यावनु नन्नन्नु (श्रीहरियन्नु) पूजिसुवनो, आ 'पृथग्भावः' प्रतिमेगळल्लिद्द भगवद्रूपगळिगू मच्छकूर्मादिरूपगळिगू भेदवुंटेंदु तिळियतक्कवनु राजस भक्तनु. ॥ ९ ॥ यावनु तन्न पापकर्मगळन्नु कळकोळ्ळुवदक्के नन्नन्नु पूजिसुवनो; अथवा सर्वोत्तमनाद नन्नल्लि, सकल सत्कर्मगळन्नु माडि अर्पिसबेकेंबुवदर, सलुवागि पूजिसुवनो; अथवा विहितकर्मगळन्नु माडबेकेंदु श्रुतिस्मृतिरूपवाद श्रीहरिय आज्ञेयिरुवदु. आदरिंद अदन्नु मीरबारदेंबदरसलुवागि नन्नन्नु पूजिसुव 'अपृथग्भावः' मच्छकूर्मादिरूपगळिगू प्रतिगळल्लि सन्निहितवाद भगवद्रूपगळिगू भेदविल्लवु एंब ज्ञानवुळ्ळवनु सात्विक भक्तनु. राजस भक्तरिगू सात्विक भक्तरिगू एनु भेदवेंदरे– प्रतिमेयल्लिद्द भगवद्रूपक्क मच्छादिरूपगळिगू भेदतिळकोळ्ळुववनु राजसनु. अवुगळिगे अभेदतिळकोळ्ळुववनु सात्विकनु— इष्टे भेदवु होरतु प्रतिमेयल्लि पूजिसुववनु राजसनु, पूजिसदवनु सात्विकनेंदल्लवु. याकेंदरे तिळवळिके इल्लदवनु आ परमात्मन ज्ञानसाधनक्के प्रतिमेयल्लि पूजेयन्नु माडलेबेकेंदु विधियुंटु. ज्ञानियादवनु प्रतिमेयल्लि श्रीहरियन्नु पूजिसिदरे विशेषगुणवुंटु. पूजिसदिद्दरे अवनिगे बाधक विल्लवु. 'अज्ञानियु प्रतिमेयल्लि पूजिसलेबेकु इल्लदिद्दरे दोषियागुवनु. ज्ञानियादवनु प्रतिमेयल्लि पूजिसिदरे अत्यंत गुणवुळ्ळवनागुवनु. इल्लदिद्दरे अज्ञानियंते इवनु दोषियागुवदिल्लवु.' एंदु कापिलेय ग्रंथदल्लि हेळिदे. ॥ १० ॥

निर्गुणभक्तिलक्षणं वक्ति मद्गुणेति यथांबुधौ गंगांभसोगतिरविच्छिन्ना तथा मद्गुणश्रवणमात्रेण यस्य सर्वगुणाश्रये सर्वगुणानामाश्रयो निषेवणं यस्मिन्स तथा सर्वगुणमूर्तिरित्यर्थः तस्मिन्मयि मनोगतिरविच्छिन्ना निरंतरा ॥ ११ ॥ तेन क्रियमाणस्य निर्गुणस्य भक्तियोगस्य लक्षणमुदाहृतं हीत्यन्वयः आत्यंतिकभक्तिलक्षणं ब्रूते अहैतुकीति ॥ १२ ॥ सार्ष्टि समानैश्वर्यं ॥ १३ ॥ तद्भक्तिफलमाह येनेति येनात्यंतिकभक्तियोगेन त्रिगुणान् त्रिलिंगशरीरेंद्रियाणि अतिव्रज्यातिक्रम्य संत्यज्येत्यर्थः मद्भावाय चिदानंददेहेन मयि सत्तायै औन्नत्यस्थित्यै उपपद्यते योग्यो भवतीत्यर्थः ॥ १४ ॥ ॥ ॥ ॥

**मद्गुणश्रुतमात्रेण मयि सर्वगुणाश्रये ॥ मनोगतिरविच्छिन्ना यथा गंगाभसोंबुधौ ॥११॥ लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतं ॥ अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे ॥१२॥ सालोक्य सार्ष्टिसामीप्य सारूप्यैकत्वमित्युत ॥ दीयमानं न गृह्णंति विना मत्सेवनं जनाः॥१३॥स एव भक्तियोगाख्य आत्यंतिक उदाहृतः॥येनातिव्रज्य त्रिगुणान मद्भावायोपपद्यते१४**

१ एकत्वं– मायुज्यं– उतशब्दो अप्यर्थः । इतिप्रसिद्धान् मोक्षादीनपि दीयमानान् फलत्वेन न गृह्णंति ॥ तदा तेषा इतरपुरुषार्थकामना नास्तीति कि वाच्यं–इत्याशयः–तर्हि किमिच्छं तस्तेभक्तिं कुर्वंति इत्यत आह– ॥ विनेति– ॥ मत्सेवामेवेच्छंतीत्याशयः ॥ ननु इदमात्यंतिकभक्तियोगलक्षणत्वेन शास्त्रेषूच्यते ऽतःकथं स्वाभाविकभक्तियोगलक्षणत्वेनोक्तमित्यतआह ॥ सएवेति ॥ यः उक्तरीत्या स्वाभाविको भक्तियोगः सएवेत्यर्थः या.—

ई प्रकार आया जनर सत्वरजस्तमोगुणानुसारवाद भक्तियोगवन्नु हेळि; इन्नु आ गुणसंबंधविल्लद उत्तमभक्तर स्वाभाविक भक्तियन्नु हेळुवनु— हागे समुद्रवन्नु कुरितु गंगानदिय नीरिन प्रवाहवु मध्यदल्लि यल्लियू याव कारणदिंदलू तडेदु निल्लदे एकप्रकारवागि धाविसि सेरुवदो, अदरंतेये– नन्न (परमात्मन) गुणगळन्नु केळुव मात्रदिंदले सर्वगुणपूर्णनाद नन्नल्लिये (श्रीहरियल्लिये) तप्पदे संततवागि धाविसतक्क मनसिनिंद माडतक्क 'मनोगतिः' मनःपक्षतास्वरूपवाद भक्तिये निर्गुणभक्तियेनिसुवदु. इन्नु अत्युत्कृष्टभक्तिय लक्षणवन्नु हेळुवनु— क्षराक्षर पुरुषनाळि उत्तमनाद श्रीहरियल्लि फलापेक्षेयिल्लदे माडतक्क भक्तियु अत्युत्तमवाददु. ॥ १२ ॥ सालोक्य–श्रीहरियु वासमाडतक्क वैकुंठलोकदल्लि वासमाडुवदु— सार्ष्टि= अवनसमानवाद ऐश्वर्यवु— 'सामीप्य' आ वैकुंठदल्लियू श्रीहरिय समीपदल्लिये वासमाडुवदु—सारूप्य= श्रीवत्स कौस्तुभगळ होरतु श्रीहरिय समानरूपप्राप्तियु– एकत्वं= सायुज्यवु– श्रीहरियशरीरदल्लि प्रवेशमाडि अवनिंद सहवागि लक्ष्मीभोगादिगळ होरतु मिक्काद भोगानुभववु ई प्रकार प्रसिद्धवाद मोक्षगळन्नादरू श्रीहरियु कोडलुबंदरे आ उत्तमभक्तरु तावु माडिद सत्कर्मानुष्ठानमळ फलरूपवागि अवुगळन्नु स्वीकरिसुवदिल्लवु. अंदमेले अवरिगे मिक्काद पुरुषार्थ कामनागळिल्लिदेनु हेळतक्कद्दु. हागादरे याव इच्छेयिंद अवरु भक्तियन्नु माडुवरु एंदरे— श्रीहरिय सेवामाडवइच्छेयहोरतु मिक्काद याव इच्छेयूइल्लदे भक्तियन्नु माडुवरु– अंदरे मेलेहेळिद सालोक्यादिमोक्षगळन्नु आ भक्तरु स्वीकरिसुवदे इल्लवेदल्लवु. श्रीहरिय आज्ञेयिंद अवन सेवन सेवारूपवागि आ मोक्षगळन्नु स्वीकरिसुवरेंदर्थवु. ओळ्ळेदु ई हेळिद्दु आत्यंतिक भक्तियोगलक्षणवेंदु शास्त्रदल्लि हेळल्पडुवदु. अंदमेले इदु स्वाभाविक भक्तियोगवेंदु हागे अनिसुवदु ? एंदरे स्वाभाविक (एनू निमित्तविल्लद) भक्तियोगवे आत्यंतिक (अतिश्रेष्ठवाद) भक्तियोगवेनिसुवदु. आ आत्यंतिक भक्तियोगदिंदेनागुवदेंदरे अदर फलवन्नु हेळुवनु— आ आत्यंतिक भक्तियोगदिंद सत्वरजस्तमोगुणगळन्नू अवुगळसंबंधवाद लिंगशरीरवन्नू स्थूल इंद्रियगळन्नू परित्यागमाडि 'मद्भावाय' आ भक्तनु चिदानंदात्मकवादशरीरदिंद युक्तनागि नन्न (श्रीहरिय) शरीरदल्लि सायुज्यदिंद इद्दु उत्तमस्थितियिंद भोगपडुवदक्के योग्यनागुवनु. एंदु फलितार्थवु. ॥ १४ ॥

**एतादृशभक्त्युत्पत्तौ किंसाधनमत्याह निषेवितेनेति निषेवितेनानिमित्तेन निष्कामेन नितरां सेवितेन अनिमित्तं इतिपाठे यथाफलाभिसंधिरहितो भवति तथा निषेवितेनेत्यर्थः अष्टवर्षं ब्राह्मणमुपनयीतेत्यादिवेदविहितेन स्वधर्मेण क्रियायोगेन भगवत्पूजालक्षणयोगेन कर्मयोगेन वा नातिहिंस्रेण प्राण्युपद्रवरहितेन ॥१५॥**

## निषेवितेनानिमित्तेन स्वधर्मेण महीयसा ॥ क्रियायोगेन शक्तेन नातिहिंस्रेण नित्यशः ॥ १५ ॥ ॥ ॥

इंथ भक्तियु हुट्टुवदक्के एनु साधनवेंदरे हेळुवनु— निष्कामनादिंद अत्यंतवागि भगवत्सेवेयन्नु माडुवदरिंदलू 'अनिमित्तं' एंब पाठविद्दरे हागे फलानुसंधानविल्लदंते आगुवदो हागे भगवत्सेवा माडुवदरिंदलू. 'स्वधर्मेण' एंटु वरुषक्के ब्राह्मणनन्नु उपनयन माडबेकेंब वेददल्लि हेळिदंते धर्मानुष्ठान माडुवदरिंद 'क्रियायोगेन' अतिश्रेष्ठवाद तंत्रसारदल्लि हेळिदंते तन्न शक्त्यनुसारवागि भगवत्पूजा माडोणवेंब क्रियायोगदिंदलू मत्तू प्राणिगळिगे उपद्रव माडदे इरोणवेंब नित्यधर्मानुष्ठानदिंदलू. ॥ १९ ॥

**मद्धिष्ण्यानां केशवादिप्रतिमानां दर्शनादिभिर्भूतेषु जीवेष्वंतर्यामित्वेन मद्भावनया मम स्मरणलक्षणोपासनया सत्येन भूतहितेन वचसाऽसंगमेन दुर्जनसंगराहित्येन ॥ १६ ॥ महतां स्वोत्तमानां बहुमानेनार्चनेन हीनानां स्वाधमानामनुकंपया तुल्येषु स्वसमेषु मैत्र्या मित्रभावेन ज्ञात्वा तद्रक्षणभावेनेत्यर्थः ॥१७॥ आध्यात्मिकानुश्रवणाद्वेदांतशास्त्रश्रवणात् आर्जवेनाऽवक्रबुद्धित्वेनार्याणां पंडितानां संगमेन निरहंक्रियया देहादावहंममतावर्जनेन ॥ १८ ॥ ॥ ॥**

## मद्धिष्ण्यदर्शनस्पर्शपूजास्तुत्यभिवंदनैः ॥ भूतेषु मद्भावनया सत्येनासंगमेनच ॥ १६ ॥ महतां बहुमानेन हीनानामनुकंपया ॥ मैत्र्या वा चात्मतुल्येषु यमेन नियमेनच ॥१७॥ आध्यात्मिकानुश्रवणान्नामसंकीर्तनाच्च मे ॥ आर्जवेनार्यसंगेन निरहंक्रियया तथा ॥ १८ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

देवालय मोदलाद स्थळगळल्लिद्द स्थिरचरात्मकवाद केशव नारायण कृष्ण मोदलाद श्रीहरिय प्रतिमेगळ दर्शनदिंदलू स्पर्शदिंदलू पूजेयन्नु माडुवदरिंदलू आ भगवत्प्रतिमेगळ एदुरिगे निंतु श्रीहरिय महिमेगळन्नु स्तोत्र माडुवदरिंदलू आ प्रतिमेगळिगे साष्टांग नमस्कार माडुवदरिंदलू सकल जीवराशिगळल्लियू श्रीहरियु अंतर्यामियागि इरुवनेंदु सर्ववस्तुगळन्नु कंडु नन्न (श्रीहरिय) स्मरण माडोणवेंब उपासने इंदलू 'सत्येन' सज्जनरिगे हितकरवाद मातुगळाडोणदरिंदलू, 'असंगमेन' दुर्जनर सहवासपरित्यागमाडुवदरिंदलू. ॥ १६ ॥ 'महतां बहुमानेन' तन्नकिंत उत्तमरन्नु बहुमानपूर्वकवागि पूजिसुवदरिंदलू, तनगिंत कडिमेजनरल्लि अंतःकरुण माडुवदरिंदलू, तन्न समानराल्लि मित्र भाववन्नु तिळिदु अवर रक्षणमाडुवदरिंदलू यम नियमगळिंदलू ॥ १७ ॥ 'आध्यात्मिकानुश्रवणात्' निरंतरदल्लियू वेदांतशास्त्र श्रवणमाडुवदरिंदलू नन्न (श्रीहरिय) नारायण कृष्णमोदलाद नामगळन्नु बायिंद वर्णनेमाडुवदरिंदलू, 'आर्जवेन' कुटिलबुद्धिपरित्यागदिंदलू, अथवा– 'विष्णुवैष्णवेषु मनोवाक्कायवृत्तीनां अवैपरीत्येन धर्मेण' श्रीविष्णुविनल्लियू विष्णुभक्तरल्लियू मनःसिनिंदलू मातुगळिंदलू शरीरव्यापारदिंदलू विरुद्धवागि नडियदे इरुवदरिंदलू, 'आर्यसंगेन' पंडितजनर सहवासदिंदलू, 'निरहंक्रियया' देहमोदलादवुगळल्लि नानु नन्नदेंब अभिमान परित्यागदिंदलू. ॥ १८ ॥

**मद्धर्मेणोर्ध्वपुंड्रादिधारणादिना स्वधर्माद्यनुष्ठानफलमाह यर्हीति पुरुषस्योपासकस्य यर्हि यदा कथितैरेनैः धर्मादिभिरनुष्ठितैः अंतःकरणमाशयः परितःशुद्धः स्यात्तदांजसाकालक्षेपमंतरेण श्रुतमात्रगुणं केवलं गुणाएव श्रुता न दोषा यस्येति स श्रुतमात्रगुणस्तमंजसा तत्त्वं मामभ्येतीत्यन्वयः गुणाःश्रुताः सुविरुद्धाश्च देवइत्यादिवाक्यं हिशब्दगृहीतं ॥ १९ ॥ परिशुद्धाशयस्य हरौ मनःप्रसादप्रकारं वक्ति यथेति यथाऽऽशयात्पुष्पादागत्य वातरथः वातएव रथोयस्य सतथा गंधो घ्राणमावृंक्ते आवृणोति वशीकरोति एवमुक्तसाधनाख्ययोगेन हरौ रतं यदविकारि विषयविकाररहितं तच्चेत आत्मानं हरिप्रसादाभिमुखं करोतीत्यन्वयः अनेन निर्गुणभक्तियोगधामा**

त्यंतिकभक्तियोगवान् भूत्वा परमात्मापरोक्षवान् भवतीत्युक्तं ॥२०॥ एवंविधैर्योगिभिः कुत्रध्येयइति तत्राह अहं सर्वेष्विति भूतानां जीवानामादानादिकर्तृत्वाद्भूतात्मांतर्यामित्वेन ध्येय इतिभावः तामसराजसभक्तयोरधमत्वे कारणमेकोक्त्याह तमिति सर्वेष्वेतदित्यनुवर्तते योहं सर्वभूतेष्ववस्थितस्तं मामवज्ञाय मर्त्यस्तामसोराजसश्चार्चायामर्चया विडंबनं कुरुतइति यस्मादतस्तामसोराजसश्चायमित्यर्थः ॥ २१ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

**मद्धर्मेणापि यद्भैतैः परिसंशुद्धआशयः ॥ पुरुषस्यांजसाभ्येति श्रुतमात्रगुणं हि मां ॥ १९ ॥ यथा वातरथो घ्राणमावृंक्ते गंधआशयात् ॥ एवं योगरतं चेत आत्मानमविकारि यत् ॥२०॥ अहं सर्वेषु भूतेषु भूतात्मावस्थितः सदा ॥ तमवज्ञाय मां मर्त्यः कुरुतेर्चाविडंबनं ॥२१॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥**

द्वादश ऊर्ध्वपुंड्र पंचमुद्राधारण, विष्णुपंचक एकादशी मोदलाद व्रतगळ माडोण, इवे मोदलाद नन्न ( श्रीहरिय ) प्रीतिकरवाद धर्मगळन्नु आचरिसुवदरिंद, यावाग्ये 'पुरुषस्य' मुक्तिय अपेक्ष माडतक्क अधिकारिय अंतःकरणवु अत्यंतनिर्मलवागुवदो आग्ये लेशमात्रवू काल्क्षेपविल्लदे 'श्रुतमात्रगुणंहिमां' लेशमात्रवू दोषविल्लदे केवल ज्ञानानंदादि सद्गुणगळे यावनल्लि इरुववेंदु सरियागि केळल्पट्ट नन्न गुणगळुळ्ळ परतत्वस्वरूपियाद नन्नन्नु कुरितु धाविसुवदु. 'श्रीहरियल्लि लोकविरुद्धवाद सद्गुणगळु तुंबिरुववु' एंब इवे मोदलाद वाक्यगळु ई श्लोकद 'हि' शब्ददिंद ग्रहिसल्पडुववु. ॥ १९ ॥ ई प्रकारवागि परिशुद्धवाद अंतःकरणवुळ्ळ अधिकारिगे श्रीहरियल्लि मनःप्रसन्नते युंटागुव प्रकारवन्नु हेळुवनु— पुष्पसमूहगळल्लि वासमाडिद सुगंधवु वायुवेंब रथवुळ्ळदागि ( गाळियद्वारदिंद बंदु ) नाशिकाद्वारदल्लि तुंबि घ्राणेंद्रियवन्नु हागे वशमाडिकोळ्ळुवदो, अदरंते हिंदे हेळिद साधनगळेंब उपायदिंद श्रीहरियल्लि आसक्तवागि विषयविकार विल्लद याव चित्तवु श्रीहरियन्नु प्रसादक्के एदुरागि माडिकोळ्ळुवदु. हीगे हेळुवदरिंद ऐहिक विषयापेक्षारहितवानविल्लद आत्यंतिक भक्तनागि श्रीहरिय अपरोक्ष ज्ञानवुळ्ळवनागुवनु. एंदु हेळल्पडुवदु. ॥ २० ॥ इंथा योगिगळिंद श्रीहरियु एल्लि इरुवनेंदु ध्यान माडल्पडतक्कद्दु ? एंदरे हेळुवनु— नानु ( श्रीहरियु ) यावत्तु भौतिक देहगळल्लिरतक्क यावत्तु जीवरल्लि कोडुव तेगेदुकोळ्ळुव मुंताद व्यवहारगळिगे कर्तृवागि सर्वांतर्यामियागि इरुवनेंदु योगिगळु ध्यान माडतक्कद्दु. एंदु अभिप्रायवु. राजस तामस भक्तरु ई योगिगळिगिंत कडिमेयवरागिरुवदक्के कारणवन्नु ओंदेमातिनिंद हेळुवनु— याव नानु सर्वप्राणिगळल्लि अंतर्यामियागिरुवेनो आ नन्नन्नु अवमानमाडि याव राजस मत्तु तामस मनुष्यनु प्रतिमेयल्लु मांडिसि अदरल्लि पूजामाडोणवेंब आटवन्नु माडुवनु. आदकारण इंथ मनुष्यनु राजसनू मत्तू तामसनू एंदु निश्चितवागुवदु. ॥ २१ ॥

एतदेव विवृणोति योमामिति भस्मनीत्युक्त्या तामसार्तिकिंचिदुत्तमत्वमवबोद्धव्यं मंत्रावृत्त्या फलसंभवात ॥ २२ ॥ तामसस्य न किंचित्फलमित्याह द्विषत इति परकाये मां द्विषत इत्यस्य विवरणं भिन्नदर्शिन इति शान्तिर्मनिष्ठा भूतेषु वैष्णवेषु बद्धवैरस्य ॥ २३ ॥ ॥ ॥ ॥ ॥

**यो मां सर्वेषु भूतेषु संतमात्मानमीश्वरं ॥ हित्वार्चां भजते मौढ्याद्भस्मन्येव जुहोति सः ॥ २२ ॥ द्विषतः परकाये मां मानिनो भिन्नदर्शिनः ॥ भूतेषु बद्धवैरस्य न मनः शांतिमृच्छति ॥२३॥ ॥ ॥ ॥ ॥**

ई मेले हेळिद संगतियन्ने विवरिसुवनु— यावनु सर्व प्राणिगळल्लियू कोडुव तेगेदुकोळ्ळुव मोदलाद सकल व्यवहारमाडुत्त स्वामियागिद्द नन्नन्नु ( श्रीहरियन्नु ) पूजिसुवदन्नु बिट्टु, मूढतनदिंद प्रतिमेय भजिसुवनो अवनु बूदियल्लि होम माडिदंतेये सरि. बूदियल्लि होममाडिदंते यन्नुवदरिंद इवनु तामसनकिंतलू स्वल्पु उत्तमनु एंदु तिळियतक्कद्दु. याकेंदरे बूदियल्लि होममाडुवाग्ये आ होमद मंत्रगळन्नु अन्नुवदरिंद स्वल्पादरू फलवु बरुवदु. इवनु राजसनेंदर्थवु. ॥ २२ ॥ तामसनिगे एनू फलविल्लवेंदु हेळुवनु— यावनु नन्न होरतु एरडनेदवर शरीरदल्लि द्वेषमाडुत्त अंदरे वैष्णवद्वेषमाडुत्त तान दोड्डवनेंदु दुरभिमानियागि सर्वांतर्यामियाद ( एरडनेदवरल्लिद्द ) परमात्मनिगू तन्नल्लिद्द परमात्मनिगू भेदवुंटेंदु तिळियुवनो अवन मनःसु नन्नल्लि निष्ठावुळ्ळदागुवदिल्लवु. ( अंदरे अवनिगे सद्गतियागुवदिल्लवु ) ॥ २३ ॥

मत्प्रीत्यभावादर्चाविडंबनत्वं स्पष्टमाह अहमिति भूतग्रामे भूतसमूहे स्थितं मामवमंतुं शीलमस्यास्तीति भूतग्रामावमानी तस्य ॥ २४ ॥ तर्ह्यर्चादिपूजाविधायकशास्त्रं व्यर्थमिति तत्राह अर्चादाविति आदिशब्दात्स्थंडिले स्वकर्मकृद्विहितं कुर्वन्निषिद्धं परित्यजन्स्वहृदि स्थितं देवदत्तादिसर्वभूतेष्ववस्थितं मामभेदतो नवेद सर्वभूतांतर्यामिरूपेषु भेददर्शनस्यानर्थफलत्वमितिच ॥२५॥ अंतर्यामिरूपाणि भिन्नानि पश्यतीति भिन्नदृक् तमाह आत्मनश्चेति य आत्मनः स्वस्य हृदिस्थितं परस्य देवदत्तादेर्हृदिगतमंतरेण भेदेन युक्तमुदरं ब्रह्मकरोति स्वतस्त्वभिन्नं ब्रह्म भिन्नं पश्यतीत्यन्वयः उदरं ब्रह्मेतिश्रुतेः उदरमंतरं कुरुत इतिअंतर्यामिरूपाणि भिन्नानि पश्यतीति भिन्नदृक्तस्य मृत्युः संसाराख्यदुर्जनमारयिता श्रीनृसिंहःस्वरूपमुल्बणं भयं नित्यदुःखलक्षणमंधंतमो विधत्त इत्यन्वयः ॥ २६ ॥ ॥

**अंहमुच्चावचैर्द्रव्यैः क्रिययोत्पन्नयानघे ॥ नैवतुष्येऽर्चितोर्चायां भूतग्रामावमानिनः ॥ २४ ॥ अर्चादावर्चयेत्तावदीश्वरं मां स्वकर्मकृत् ॥ यावन्नवेद स्वहृदि सर्वभूतेष्ववस्थितं ॥ २५ ॥ आत्मनश्च परस्यापि यः करोत्यंतरोदरं ॥ तस्य भिन्नदृशो मृत्युर्विधत्ते भयमुल्बणं ॥ २६ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥**

१ अर्चायां शालिग्रामादिरूपायां विद्यमानत्वेनाहमर्चितोपि उच्चावचैर्द्रव्यैरुत्पन्नया कयंवा अवदानादिरूपया भूतग्रामावमानिनः भगवत्प्रतिमात्वेन भूतमहापूजकस्य नैव तुष्ये या.—

नन्न ( श्रीहरिय ) प्रीतियु इल्लदरिंद प्रतिमेय पूजेयु ' विडंबनं ' आदेंबदन्नु स्पष्टवागि कपिलरूपियाद परमात्मनु हेळुवनु— ' हे अनघे ' हे दोषरहितळाद देवहूतिये ' भूतग्रामावमानिनः ' पंचमहाभूतगळ समूहदल्लि अंदरे अणुरेणुतृणकाष्ठमोदलाद सर्ववस्तुगळल्लि अंतर्यामियागि इद्द श्रीहरियन्नु अवमानमाडतक्क स्वभाववुळ्ळवन, पूजेयिंद शालिग्रामगळल्लियू प्रतिमेगळल्लियू इद्द, नानु ( श्रीहरियु ) पूजेयन्नु माडिसिकोडाग्यू, बहळद्रव्यदिंदलू स्वल्पद्रव्यदिंदलू मध्यवागतक्क, अन्नदानमोदल्याद कार्यदिंद ' भूतग्रामावमानिन. ' सकलप्राणिगळु श्रीहरियु सन्निहितनागिरुवदक्के प्रतिमेयंदु तिळिदु पूजिसदवगे नानु तुष्टनागुवदिल्लवु.॥२४॥हागादरे प्रतिमेगळल्लु शालिग्रामगळल्लु पूजिसबेकेंदु अप्पणेमाडतक्क शास्त्रवु व्यर्थवो ? एंदरे हेळुवनु–'स्वकर्मकृत्' विहितवाद कालकालक्के संध्यावंदन अग्निहोत्रहोमादिगळन्नु, माडुत्त मत्तु निषिद्धवाद पलांडुभक्षणमोदलादवुगळन्नु परित्यजिसुत्त कर्मानुष्ठानमाडतक्क अधिकारियु एल्लियवरेगे 'स्वहृदिस्थितं' तन्न हृदयदल्लिद्द नन्नन्नु ( परमात्मनन्नु ) मत्तु देवदत्तनेंब हेसरुळ्ळ ओब्ब मनुष्यने मोदलाद सकलरल्लियू इद्द परमात्मनन्नु अभेदस्वरूपवागि तिळियल्लवो, ( अंदरे सर्व भगवद्रूपगळू ओंदे एंदु तिळियदिल्लवो ) अथवा— सर्व प्राणिगळल्लि अंतर्यामियागिद्द भगवद्रूपगळल्लि भेद तिळियुवदरिंद अनर्थ उंटेंदु तिळियदिल्लवो, अल्लियवरेगे सर्वेश्वरनाद नन्नन्नु ( श्रीहरियन्नु ) प्रतिमेगळल्लियू सालिग्राम मोदलादवुगळल्लियू पूजिसबेकु. ॥ २५ ॥ सर्व वस्तुगळल्लि अंतर्यामियागिद्द भगवद्रूपगळन्नु बेरेबेरे एंदु तिळियुवनन्नु ' भिन्नदृक् ' एनिसुवनु. अवन संगतियन्नु हेळुवनु— यावनु तन्न हृदयदल्लि अंतर्यामियादवनू मत्तु देवदत्तनेंब एरडने मनुष्यन हृदयदल्लिद्दवनू बेरेयाद उदरनेंदुकरिसिगोळ्ळुव ब्रह्मनु ' उदरं ब्रह्मेतिश्रुते. ' उद्गताः अराः यस्मात्तत् उदरं— अंदरे ब्रह्मवस्तुवु दोषदूरवादद्दरिंद उदरवेंदेनिसुवदु एंदु श्रुतियु हेळुवदु. सर्वत्र अंतर्यामियागिद्द भगवद्रूपगळिगे वस्तुगत्या भेदविल्लदिद्दरू अवुगळिगे भेद उंटेंदु यावनु तिळियुवनो अवनु भिन्नदृक्क एनिसुवनु. अवनिगे ' मृत्युः ' संसारस्वरूपराद दुर्जनग्गु कोल्लतक्क श्रीनृसिंहरूपियाद परमात्मनु, ' उल्बणं भयं ' नियदुःखस्वरूपवाद अंधतमःपन्नु कोडुवनु. ॥ २६ ॥

उक्तार्थोपसंहारमुखेन सर्वांतर्याभिपूजाप्रकारं वक्ति अथेति अंतर्यामिरूपाणां भिन्नत्वज्ञानमनर्थकमिति यस्मादथ तस्मात्सर्वेषु भूतेषु कृतालयं हरेरंतर्यामिरूपं भूतात्मानं मां द्रव्यादिदानमानाभ्यां मैत्र्या स्वस्मादयमेव ममार्हःसुहृदितिभावेन निमित्तेनाभिन्नेन चक्षुषा अभेददर्शनेनार्हयेदर्चयेदित्यर्थः ॥२७॥ हरेरंतर्यामिरूपाणां तत्रतत्र सन्निधानविशेषात्क्लृप्तत्वाच्च चेतनानां तारतम्यं तज्ज्ञानंच पुरुषार्थसाधनमितिद्योतयंस्तत्तारतम्यं वक्ति जीवाइत्यादिना संसारावस्थायां व्यत्ययेपि पशुवृक्षादिभेदेन स्थितानां जीवानां मुक्तौ निजमेव रूपमपेक्ष्यतारतम्यमत्रोच्यते तदुक्तं पशुवृक्षादिभेदेन जीवाएव स्वतःस्थिताः॥ संसृतौ व्यत्ययस्तेषां मुक्तौ तत्तत्स्वरूपता ॥ तत्र स्थावरमुक्तेभ्यो वरा जंगममुक्तकाः ॥ तेभ्यो मानुषमुक्ताश्च विप्रा मुक्तास्ततोधिकाः ॥ तत्रोपदेशमात्रेण मुक्तेभ्यो वेदवादिनः ॥ अर्थज्ञा ऋषयस्तेभ्यो देवता संशयच्छिदः ॥ पूर्णधर्मास्ततस्त्विंद्रो निःसंगो गरुडस्ततः ॥ भक्तिपूर्णोहरेर्ब्रह्मा तस्मान्नान्योधिकस्ततः ॥ मुक्तौवा संसृतौवापि सम्यगेषु हि ते गुणाइति ॥ अजीवाश्चलनरहिताः स्थावरमुक्तास्तेषां सकाशाज्जीवाः जंगममुक्ताः श्रेष्ठाः अत्रापि विशेषद्योतनार्थइष्ठन्प्रत्ययः हिशब्देनेश्वरशक्तेरचिंत्यत्वं सूचयति प्राणं प्रकृष्टचेष्टां बिभ्रतीतिप्राणभृतः श्रेष्ठाइत्यनुवर्तते सचित्ता मनोव्यापारयुक्ता इंद्रियवृत्तयश्चक्षुरादींद्रियैःप्रवर्तमानाः ॥२८॥ अत्रापींद्रियवृत्तिष्वपि स्पर्शज्ञाः प्रवरास्तेभ्यो माधुर्यादिरसज्ञाः गंधविदः गंधगुणज्ञाः शब्दविदः शब्दज्ञाः ॥ २९ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥



अथ मां सर्वभूतेषु भूतात्मानं कृतालयं ॥ अर्हयेद्दानमानाभ्यां मैत्र्याऽभिन्नेन चक्षुषा ॥ २७ ॥ जीवाः श्रेष्ठा ह्यजीवानां ततः प्राणभृतःशुभे ॥ ततःसचित्ताः प्रवरास्ततश्चेंद्रियवृत्तयः ॥ २८ ॥ अत्रापि स्पर्शवेदिभ्यः प्रवरारसवेदिनः ॥ तेभ्यो गंधविदः श्रेष्ठास्ततःशब्दविदोवराः २९ ॥ ॥ ॥ ॥ ॥ ॥ ॥

हिंदे हेळिद अर्थवन्नु मुगिसुवदक्के सर्वांतर्यामियाद परमात्मन पूजाप्रकारवन्नु हेळुवनु— यावकारण सर्वांतर्यामियाद भगवद्रूपगळिगे भेदउंटेंदु तिळकोळ्ळुवदु अनर्थक्के कारणवागुवदो ' अथ ' आदकारण एल्ल प्राणिगळल्लि मनिमाडिकोंडिद्द अंतर्यामियागि सर्वेश्वरनाद नन्नन्नु ( श्रीहरियन्नु ) द्रव्य मोदलादवुगळन्नु कोडुवदरिंदलू मानमाडुवदरिंदलू ' मैत्र्या ' तन्नकिंत इवने ननगे अंतःकरणियु, एंब अभिप्रायदिंद सर्व भगवद्रूपगळन्नू अभेदज्ञानदिंद पूजिसबेकु. ॥ २७ ॥ श्रीहरिय अंतर्यामिरूपगळिगे अल्लल्लि सन्निधानविशेषदिंद क्लृप्तवादद्दरिंद आयाचेतनगळ तारतम्यवू आ तारतम्यज्ञानवू मोक्षक्के साधनवादद्देंदु तोरिसुत्त आ चेतनर तारतम्यवन्नु हेळुवनु– संसारावस्थेयल्लि जीवन मूलस्वरूपक्के व्यत्यासवागि मनुष्यने मोदलाद देहदल्लिद्दाग्यू. मुक्तियल्लि पशु वृक्षमोदलाद भेदगळिंद इद्द जीवर निजरूपवन्नुसरिसि तारतम्यवु इल्लि हेळल्पडुवदु. ई मुंदे हेळुव अर्थवु श्रीमदाचार्यरिंद तात्पर्यदल्लि हेळल्पट्टदु– मुक्तियल्लि जीवरु, पशु, वृक्ष मोदलाद अनेक भेददिंद अनेक प्रकारवागि तम्मतम्म मूलस्वरूपदिंदले इरुवरु आदरे अवरिगे संसारावस्थेयल्लि आ मूलरूपवु पशु, वृक्षादिगळिद्दाग्यू व्यत्यासवागि मनुष्यदेहमोदलादवु बरुवदुंटु. आदरे आ मुक्तियल्लि स्थावर वृक्ष मोदलाद स्वरूपदिंद मुक्तरादवरकिंत जंगम पशुपक्षिमोदलाद स्वरूपदिंद मुक्तरादवरु उत्तमरु. अवरिगिंत मनुष्यस्वरूपदिंद मुक्तरादवरु उत्तमरु आ मनुष्यमुक्तरल्लियू ब्राह्मणस्वरूपदिंद मुक्तरादवरु उत्तमरु. आ ब्राह्मणरागि मुक्तरादवरल्लियू उपदेशमात्रदिंद मुक्तरादवरकिंत वेदानुवादमाडतक्कवरु उत्तमरु. अवरिगिंतलू वेदार्थवन्नु बल्लऋषिगळ स्वरूपदिंद मुक्तरादवरु उत्तमरु– अवरकिंत संशयपराभव माडतक्क देवतेगळु उत्तमरु अवरकिंत पूर्णधर्मउळ्ळ उत्तम इंद्रनु उत्तमनु. अवनकिंत निःसंगनाद गरुडनु उत्तमनु अवनकिंत भक्तिपूर्णनाद ब्रह्मदेवनु उत्तमनु आ ब्रह्मनकिंत मुक्तराल्लियागली संसारगळल्लि आगली श्रेष्ठरु यारू इल्लवु ई मेले हेळिद जनरल्लि मुक्तियल्लियू संसारावस्थेयल्लियू सह आ गुणगळु इरुववु.

' जीवाः ' एंदरे ओडाडलिक्के बारदंथ गिडगळेमोदलाद स्थावर मुक्तरिगिंतलू अवरिगिंत जीवाः ' जंगम ओडाडतक्क प्राणिगळागि मुक्तरादवरु श्रेष्ठरु. अवरिगिंत इवरु श्रेष्ठरेंदु तिळिसुवदक्के ' श्रेष्ठाः ' एंबल्लिय इष्टन् प्रत्ययवु इरुवदु. ई श्लोकदोळगिन ' हि ' शब्ददिंद ईश्वरशक्तियु अचिंत्य = नम्म बुद्धिगे निलुकतक्कदल्लवेंदु सूचिसुवदु ' प्राणभृतः ' अत्यंत चेष्टावन्नु माडतक्क जीवरु श्रेष्ठरेंब पदवु हिंदे अदे ' सचित्ताः ' मनोव्यापारसहितवागि चक्षुरादि इंद्रियगळिंद एल्ल व्यापार माडतक्कवरु एंदु अर्थवु ॥ २८ ॥ ' अत्रापि ' इंद्रियव्यापारगळन्नु माडतक्क वस्तुगळल्लियादरू यावदादरू मैगे तगलोणदरिंद इदु इंथावस्तुवेंदु तिळकोळ्ळतक्क प्राणिगळु श्रेष्ठवादद्दवु. अवुगळकिंतलू माधुर्य मुंताद रसज्ञानदिंद वस्तुवन्नु निळकोळ्ळतक्क श्रेष्ठ एनिसुवरु– अवुगळकिंत गंधगुणवन्नु तिळकोळ्ळतक्कवु श्रेष्ठवेनिसुववु. अवुगळकिंत शब्दज्ञानवुळ्ळवु श्रेष्ठवेनिसुववु– ॥ २९ ॥ अवुगळल्लियू इदु शुक्ल वर्णवु इदु कृष्ण

रूपभेदविदः शुक्लादिरूपविशेषज्ञाः उभयतोदतः उत्तराधरदंतयुक्ताः बहुपदो शरभादयः चतुष्पादो गवादयः द्विपान्मनुष्यो वर्णहीनः ॥ ३० ॥ ब्राह्मणादि लक्षणाश्चत्वारोवर्णाः ब्राह्मणो वेदसंबंधयोग्यः तत्र ब्राह्मणेष्वप्युपदेशमात्रानुष्ठानेन जातापरोक्षज्ञानेन वेदज्ञो विप्रउच्यते ॥ अर्थज्ञो वेदार्थज्ञःऋषिरुक्तः ॥ ३१॥

**रूपभेदविदस्तत्र ततश्चोभयतोदतः ॥ तेषां बहुपदः श्रेष्ठाश्चतुष्पादस्ततोद्विपात् ॥ ३० ॥ ततोवर्णाश्च चत्वारस्तेषां ब्राह्मणउत्तमः ॥ब्राह्मणेष्वपि वेदज्ञो ह्यर्थज्ञोभ्यधिकस्ततः ॥ ३१ ॥ ॥ ॥ ॥ ॥**

वर्णवु एंब रूपगळ भेदवन्नु तिळियतक्कवु श्रेष्ठवेनिसुववु.अवुगळकिंत बायोळगे मेलू केळगू एरडूदवडिगळुळ्ळ हल्लुवुळ्ळवु श्रेष्ठवेनिसुववु अवुगळकिंत बहुपादगळुळ्ळ शरभ भ्रमरमोदलादवुगळु श्रेष्ठवेनिसुववु अवुगळकिंत नाल्कुपादगळुळ्ळ गोवुगळे मोदलादवु श्रेष्ठवेनिसुववु अवुगळकिंत एरडुकालुगळुळ्ळवन अंदरे-- ब्राह्मणमोदलाद नाल्कुजातियिंद होरगादवन श्रेष्ठनु ॥३०॥ आ नाल्कुजातिय होरगिनवरकिंत ब्राह्मण, क्षत्रिय, वैश्य, शूद्रेंब नाल्कुजातिगळल्लि हुट्टिदवरु श्रेष्ठरु-- आ नाल्कुजातियवरल्लियू वेदसंबंध संस्कार अध्ययन अध्यापन मोदलादवुगळिगे योग्यनाद ब्राह्मणनु उत्तमनु. आ ब्राह्मणरल्लियू गुरूपदेशमात्रदिंदले अनुष्ठान माडुवदरिंद अपरोक्षज्ञान उत्पन्नवागि वेदगळ अर्थ बल्लवनु विप्रनेनिसुवनु. अवरल्लियू सकल वेदार्थ बल्लवनु ऋषियनिसुवनु ॥ ३१ ॥

वेदार्थसंशयच्छेत्ता देवः जातावेकवचनं स्वस्य स्वतंत्रस्य हरेर्धर्मं करोतीतिस्वधर्मकृत् त्रैलोक्यरक्षणलक्षणपूर्णधर्मकर्तृत्वादिंद्रः मुक्तसंगो गरुडः अस्य विवरणं नदोग्धेति आत्मनः स्वस्य धर्मं न दोग्धा भगवत्प्रसादमंतरेण कर्मफलमनाकाक्षमाणोभूयानुत्तरः ॥३२॥ तस्मात् गरुडान्मय्यर्पिताशेषक्रियार्थश्च मय्यर्पितसमस्तक्रियाफलश्चात्मरतिश्च मय्येव मनोरतिश्च स मय्यर्पिताशेषक्रियार्थात्मरतिः भक्त्या न रीयते न क्षीयतइतिनरः पूर्णभक्तिः ब्रह्मा श्रेष्ठः पूर्वोक्तेभ्यइव चतुर्मुखब्रह्मणोप्युत्तमोस्ति किंनेत्याह मयीति ॥ ३३ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

**अर्थज्ञात्संशयच्छेत्ता ततः श्रेयान्स्वधर्मकृत् ॥ मुक्तसंगस्ततो भूयानदोग्धा धर्ममात्मनः ॥ ३२ ॥ तस्मान्मय्यर्पिताशेषक्रियार्थात्मरतिर्नरः ॥ मय्यर्पितात्मनः पुंसो मयि संन्यस्तकर्मणः ॥ ३३ ॥ ॥ ॥ ॥ ॥**

आ वेदार्थवन्नु बल्ल ऋषिगळकिंत वेदार्थगळल्लिय संशयपरिहार माडतक्कवनु देवतेगळु श्रेष्ठरु आ संशय परिहार माडतक्क देवतेगळकिंत ' स्वधर्मकृत् ' स्वःस्वतंत्रनाद श्रीहरिय आज्ञेयिंद मूरुलोक पालनमाडतक्क धर्मवन्नु संपूर्णवागि नडिसुवदरिंद स्वधर्मकृत् एंदरे--देवेंद्रन श्रेष्ठनु. आ स्वधर्मकृत् यनिसिकोड देवेंद्रनकिंत संगपरित्यागमाडिद गरुडनु श्रेष्ठनु. आ गरुडनु

मुक्तसंगनु हागेंदरे-- ' नदोग्धाधर्ममात्मनः ' तानु माडतक्क धर्मगळन्नु एनू लोपविल्लदंते माडि अवुगळन्नु श्रीहरिगे अर्पिसि आ तानु माडिद धर्मगळिंद एनू फलवन्नु इच्छिसदे केवल श्रीहरिय परमप्रसादवन्न अपेक्षिसुववनु आद्दरिंद उत्तमनु ॥ ३२ ॥ आ गरुडनकिंतलू ' मय्यर्पिताशेषक्रियार्थात्मरतिः ' नन्नल्लिये ( श्रीहरियल्लिये ) सकल कर्मगळ फलवन्नु अर्पण माडि नन्नल्लिये ( श्रीहरियल्लिये ) मनसिनिंद आनंदबडतक्क, ' नरः ' श्रीहरिभक्तियिंद एंदू कोरते इल्लद पूर्णभक्तियुळ्ळ चतुर्मुखब्रह्मनु श्रेष्ठनु. हिंदे ओब्बरागिंतओब्बरु श्रेष्ठरु एंदु हेळिदंते ई चतुर्मुख ब्रह्मनकिंत जीवराशिगळल्लि श्रेष्ठनादवनु यावनादरू इरुवनो? एंदरे हेळुवनु सकलकर्मगळन्नु ननगे अर्पिसि नन्नल्लिये मनःसिट्ट आ चतुर्मुख ब्रह्मनकिंत उत्तमनन्नु नानु काणेनु ॥ ३३ ॥

परमुत्तमं अःहरिः कर्ता स्रष्टा जनको यस्य सो कर्ता तस्मात्समदर्शनान्निर्दोषब्रह्मज्ञानवतः यद्वापरमुक्तौ संसारावस्थायां भूतमुत्पन्नं पुरुषं ब्रह्मणः समं अधिकंवा न पश्यामीति समदर्शनाच्छास्त्रेषु सम्यग्दर्शिनः एवं तारतम्यज्ञानवता किंकर्तव्यमित्याह मनसेति अत्र जीवकलयेति द्विगवृत्त्या व्याख्येयं जीवकलया स हैतानि स्थावरादिब्रह्मांतानि भूतानि मनसा बहुमानयन्नीश्वरो भगवान् जीवकलयाऽनिरुद्धाख्यांशेनैषु प्रविष्टस्तदालयत्वेन स्थितइति तमीश्वरं प्रणमेदियमुपास्तियोंग्यस्येति शास्त्रांतरसिद्धमिति ज्ञातव्यं ॥ ३४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

**न पश्यामि परंभूतमकर्तुः समदर्शनात् ॥ मनसैतानि भूतानि प्रणमेद्बहुमानयन् ॥ ईश्वरो जीवकलया प्रविष्टो भगवानिति ३४**

( हे देवहूतिये , ' अकर्तुः ' अकारशब्दवाच्यनाद श्रीहरिये तंदेयागि उळ्ळंथ ' समदर्शनात् ' निर्दोषवाद ब्रह्मज्ञानउळ्ळंथ चतुर्मुखब्रह्मनिगे अथवा - मुक्तियल्लियू संसारावस्थेयल्लियू चतुर्मुख ब्रह्मदेवनिगे समनादवनन्नू अवनगिंत अधिकनादवनन्नू यावनन्नू काणेनु.'समदर्शनात्'= शास्त्रगळल्लि मरियादज्ञानवुळ्ळ ब्रह्मदेवनकिंत एंदु एरडने अर्थवु. ईप्रकार तारतम्यज्ञानवुळ्ळवनु एनु माडतक्कद्दु, एंदरे हेळुवनु--इल्लि जीवकलया एंबदन्नु एरडावर्ति योजनमाडतक्कद्दु. श्रीहरियभिन्नांशराद जीवरिंद सहवागिद्द ई स्थावर मोदलुगोंडु ब्रह्मदेवनपर्यंतवाद भौतिकवस्तुगळन्नु मनसिनिंद बहुमानमाडुत्त, सर्वेश्वरनाद श्रीहरियु ' जीवकलया ' अनिरुद्धनेंब तन्न स्वरूपांशदिंद ई भिन्नांशराद जीवरल्लि मनिमाडिकोंडिरुवनु एंदु सर्वत्रदल्लि आ श्रीहरियन्ने नमस्कारिसबेकु. ईप्रकारवाद व्याप्तोपासनेयु अदक्के योग्यराद देवतेगळे मोदलादवरिगे एंदु एरडने शास्त्रदिंद सिद्धवागिदे एंदु तिळियबेकु. ॥ ३४ ॥

उक्तार्थमुपसंहरति भक्तियोगश्चेति हे मानवि मया तव भक्तियोगश्च ज्ञानयोगश्च चशब्दाद्यचोदावित्यादिना कथितकर्मयोगश्च गृह्यते सचकथितइत्यन्वयः एतद्वयमेव पुरुषार्थसाधनं नान्यदिति निर्धारयति ययोरिति ययोर्ज्ञानभक्त्योरेकतरेणैव ज्ञानयोगेनैव पुरुषः पुरुषं परमात्मानं व्रजेदित्यन्वयः एकतरोऽलंचेदितरविधानं व्यर्थं स्यात् एकतरभावेन्यतरस्य नियतत्वात् एकतरेणैवेत्युक्तं धूमाग्न्योरिवाविनाभावात् ॥ ३५ ॥ ॥ ॥ ॥

१ जीवास्यभिन्नांशेन सहेत्यर्थः ॥ या. ॥ २ तानि भूतानि आलयो यस्य सतथा तस्य भावः तत्व ॥ या ॥

भक्तियोगश्चयोगश्च मया मानव्युदीरितः ॥ ययोरेकतरेणैव पुरुषः पुरुषं व्रजेत् ॥ ३५ ॥

हिंदे हेळिद अर्थवन्नु पुष्टिसुवनु-' हेमानवि ' स्वायंभुवमनुपुत्रियाद देवहूतिये नन्निंद निनगे भक्तियोगवु मत्तु ज्ञानयोगवु ' च ' शब्ददिंद 'अर्चादावर्चयेत्'-एंब इवमोदलाद श्लोकगळिंद कर्मयोगवू महवागि हेळल्पट्टितु इवुगळल्लि भक्तियोग मत्तु ज्ञानयोगगळेंब ईएरडु मोक्षक्के साधकवादद्दु मत्ते बेरेयावू अल्लवेंदु निश्चयसुवनु ' ययोरेकतरेणैव ' ज्ञानयोग भक्तियोगगळेंब ईएरडरल्लि ज्ञानयोगदिंदले पुरुषनु ( जीवनु ) श्रीहरियन्नु होंदवनु. हागादरे ई एरडरल्लि ओंदरिंदे मोक्षवागुत्तिरलु एरडू माडबेकेंदु हिंदे विधान ( अप्पणे ) माडिद्दु व्यर्थवायितल्लवेंदरे— मोक्षक्के साधनमाडतक्क अधिकारियल्लि भक्तियोग ज्ञानयोगगळेंब एरडरल्लि ज्ञानयोगवेंबदोंदु इद्दरे आ एरडरल्लि ओंदाद भक्तियोगवु अवश्यवागि ( तानागिये ) इद्देइरुवदु. अग्नियन्नु बिट्टु धूमवु बेरे इरुवदे इल्लवो अदरंतेये भक्तियन्नु बिट्टु ज्ञानवु इरवदे इल्लवु आदरिंद ओंदु ज्ञानयोगदिंदले मोक्षवागुवदु एंदु हेळिदनु. ॥ ३५ ॥

भक्तियोगप्रश्नानंतरं पृष्टजीवसंसृतेर्वक्तव्यत्वेपि बाहुल्यात् तदुलंघ्य सूचीकटाहन्यायेन कालस्वरूपं वक्ति यत्तदित्यादिना ब्रह्मणः पूर्णस्य परमात्मनः सर्वांतर्यामिणो भगवतो भाग्यनिर्धेयत्प्रधानात्प्रकृतेः पुरुषाद्विरिंचात्परमुत्तमं दैवं सर्वदेवोत्तमं यच्च कर्मविचेष्टितं सर्वकर्माणि यस्य विशिष्टचेष्टानिमित्तानि तत्तथोक्तं॥ ३६॥ यच्चरूपभेदास्पदं शुक्लादिरूपभेदानां ब्रह्मांडादिपदार्थभेदाना चास्पदं दिव्यमप्राकृतं यतो यस्मात्कलाद्भिन्नदृशामल्पज्ञानिनां महदादिजीवानां भयं भवति तद्वस्तु-कालइत्यभिधीयते भिन्नमल्पं विजानियादभिन्नं पूर्णमिष्यतइतिवचनादीश्वरापेक्षयात्र भिन्नशब्दोल्पवाची ॥ ३७ ॥ ॥ ॥ ॥

यत्तद्भगवतोरूपं ब्रह्मणः परमात्मनः ॥ परंप्रधानात्पुरुषाद्दैवं कर्मविचेष्टितं ॥ ३६ ॥ रूपभेदास्पदं दिव्यं कालइत्यभिधीयते ॥ भूतानां महदादीनां यतोभिन्नदृशां भयं ॥ ३७ ॥ ॥ ॥ ॥ ॥ ॥

भक्तियोगद प्रश्नक्के उत्तर हेळिदमेले. देवहूतिय प्रश्नानुसारवागि जीवर संसारसंबंधवाद प्रश्नक्के उत्तर हेळतक्कद्दु आदरू आ संगतियु बहळे दोड्डदादकारण आ संगतियन्नु हेळुवदु बिट्टु सूचीकटाह ' न्यायदिंद ( सूचीकटाहन्यायवेंदरे = दोड्डदादकडायवन्नु माडाकेक्के हाकिद्दाग मध्ये सूजियन्नु माडुववर्दिद्दरे मोदलु सण्णदाद सूजियन्नु माडि आमेले मत्त कडायवन्नु माडुवनु इदक्के सूचीकटाहन्यायवेन्नुवरु ) मोदलु कालस्वरूपवन्नु हेळुवनु—सर्वसद्गुणपूर्णनाद सर्वांतर्यामियाद महदैश्वर्यपूर्णनाद परमात्मन प्रधानशब्दवाच्यळाद प्रकृतियर्किंतलू पुरुषशब्दवाच्यनाद 'चतुर्मुखब्रह्मनर्किंतलू ' परं ' उत्तमवाद ' दैवं ' एल्ल देवतिगळर्किंत उत्तमवाद ' यच्चकर्मविचेष्टितं ' ( मेले हेळिद महदैश्वर्यनिधियाद परमात्मन ) श्रेष्ठवाद चेष्टामाडोणदर निमित्तवाद कर्मदिंदले जगत्तिनाल्लि सकलकर्मगळू नडेयुववु , अंदरे परमात्मन कर्मद अधीनवागिये सकलकर्मगळू इरुववेंदर्थवु. ॥३६॥ इदु शुक्लरूपवु इदु कृष्णरूपवु एंदु रूपगळु भेदवागुवदक्के यावदु कारणवादद्दो, मत्तु ब्रह्मांडमोदलाद पदार्थगळ भेदक्के कारणवादद्दो. यावदु अप्राकृत वादद्दो, मत्तु याववस्तुविनिंद ' भिन्नदृशां ' अल्पज्ञानिगळाद महदादिजीवगळिगे भयवु उत्पन्नवागुवदु अदु कालवेंदनिसुवदु-

' भिन्नदृशां ' एंदरे अल्पज्ञानिगळेंदु हागे अर्थवायितेंदरे- ' भिन्नएंब पदद अर्थवु अल्पवेंदु तिळियतक्कद्दु. अभिन्नवेंदरे पूर्णवेनिसुवदु ' एंब प्रमाणदिंद इल्लि भिन्नशब्दवु ईश्वरनर्किंतलू अल्पवेंब अर्थ हेळुवदु. ॥ ३७ ॥

केचित्पूर्वापरकल्पाविकल्पः क्षणःकालइत्यादिलक्षणमाचक्षते तन्नेतिभावेनाह योंतरिति यो भूतानामंतःप्रविश्य भूतैर्भूतान्यत्ति संहरति यश्चाखिलानामाश्रयः यश्च कल्यतां संहर्त्तां रुद्रादीनां प्रभुः संहारसमर्थः सविष्णवाख्यः कालो धिया साक्षिज्ञानेन ज्ञेयइत्यन्वयः यमादिव्यवच्छेदार्थं विष्ण्वाख्यइति ॥ ३८ ॥

योंतः प्रविश्य भूतानि भूतैरत्यखिलाश्रयः ॥ सविष्णवाख्यो धिया ज्ञेयः कालः कलयतां प्रभुः ॥ ३८ ॥ ॥ ॥

केलवरु पूर्वापर कल्पविकल्पगळिगू क्षणमुंतादवुगळिगू कालवेन्नुवरु अदु अल्लवेंदु हेळुवनु—यावनु एल्ल वस्तुगळ वोळगे प्रवेशमाडि पंचभूतगळिंद भौतिकवस्तुगळन्नु महरिसुवनो मत्तु यावनु एल्लरिगू आश्रयनागिरुवनो, मत्तु यावनु ' कलयतां ' जगत्तन्नु संहारमाडतक्कवरेनिसिगोंड रुद्रनेमोदलादवरन्नु संहारमाडुवदक्के समर्थनो आ विष्णुनेंबवनु कालनेनिसिगोळ्ळुवनेंदु ' धिया ' साक्षि ( स्वरूपेंद्रिय ) ज्ञानदिंद तिळियतक्कवनो याग्यनादवरु विष्णुवेंदु हेळुवदरिंद यमने मोदलादवरु अल्लवेंदु हेळल्पट्टितु ॥ ३८ ॥

चेतनत्वाचेतनोक्तलक्षणः कालोत्रोच्यतइतिभावेनाह नचास्येति यथायोग्यातिरेकेण न द्वेष्यश्च प्रियोहरेरितिवचनात् योग्यतातिरेकेण दयितो द्वेष्यश्च नास्तीत्यर्थः अंतकृत् संहारकर्ता ॥ ३९ ॥ इतरेषां तदाज्ञा नियतकर्तृत्वाच्च विष्णुरेवायं कालइतिभावेनाह यद्भयादिति भगणो नक्षत्रगणः ॥४०॥ यदस्माद्भीताः ॥ ४१ ॥ स्रवंति स्यंदंते यतो यस्य भयान्नोत्सर्पंति वेलामतीत्य न गच्छति इंधे ज्वलति न मज्जति जलइतिशेषः ॥ ४२ ॥ ॥ ॥ ॥

नचास्य कश्चिद्दयितो न द्वेष्यो न च बांधवः ॥ आविशत्य प्रमत्तोसौ प्रमत्तं जनमंतकृत् ॥ ३९ ॥ यद्भयाद्वातिवातोयं सूर्यस्तपति यद्भयात् ॥ यद्भयाद्वर्षते देवो भगणो भाति यद्भयात् ॥ ४० ॥ यद्वनस्पतयो भीता लताश्चौषधिभिः सह ॥ स्वेस्वेकालेभिगृण्हंति पुष्पाणिच फलानिच ॥ ४१ ॥ स्रवंति सरितो भीता नोत्सर्पत्युदधिर्यतः ॥ अग्निरिंधे सगिरिभिर्भूर्नमज्जति यद्भयात् ॥ ४२ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

कालवेंबदु अचेतनवल्लवु चेतनलक्षणवुळ्ळद्दु इल्लि कालवेंदु हेळिसिगोळ्ळल्पडुवदु एंदु हेळुवनु—' श्रीहरिगे आ जनर योग्यतेयन्नु मीरि द्वेषिगळू प्रीत्यास्पदरू यारू इल्लवु' एंब प्रमाणदिंद यावनु हरिद्वेषमाडुवनो अवनु द्वेषक्कागि द्वेषियेंतेये इरुवनु. यावनु श्रीहरियल्लि भक्तियन्नु माडुवनो अवनतक्कंत अवनल्लि श्रीहरियु प्रीतियन्नु माडुवनु ई कारणगळल्लोरतु ई कालशब्दवाच्यनाद

श्रीहरिगे यारू द्वेषिगळू यारू प्रियरू इल्लवु. मत्तू भक्तर होरतु अवनिगे शरीरानुबंधि बांधवरु यारू इल्लवु. इंथ कालशब्दवाच्यनाद श्रीहरियु मदोन्मत्तराद जनरन्नु तानु उन्मत्तनागदे प्रवेशमाडि नाशमाडुवनु ॥ ३९ ॥ मिक्काद देवतिगळु आ विष्णुविन अप्पणेयिंद नियमिसल्पट्ट केलसगळन्नु माडतक्कवराद्दरिंद इवने कालनेंब हसरिनिंद करिसिगोळ्ळुतक्कवनु एंब अभिप्रायदिंद हेळुवनु–ई वायुदेवनु याव विष्णुविन भयदिंदले गाळी बीसुवनु. ई सूर्यनु याव विष्णुविन भयदिंदले ताप बडिसुवनु. याव विष्णुविन भयदिंदले देवेंद्रनु मळेगरेयुवनु. याव वि० भयदिंदले नक्षत्रगणवु प्रकाशवुळ्ळद्दागिरुवदु ॥४० ॥ याव विष्णुविनिंदले भीतवागि बळ्ळिगळु, गिडगळु, भत्त ( नेल्लु ) जोळमोदलादवैरुगळू मह आयाऋतुगळ अनुसारवागि तम्म तम्म कालदल्लिये फलपुष्पगळन्नु धरिसुववु ॥ ४१ ॥ याव श्रीहरिय भयदिंदले नदिगळु सरियागि हरियुववु, याव विष्णुविन भ० समुद्रनाथनु दंडेयन्नु मीरि मेलक्के बरुवदिल्लवु याव वि० भ० अग्नियु काष्टदल्लिये उरियुवनु, याव विष्णु० भ० पर्वतगळभारदिंद सहितळाद भूदेवियु निरिनाल्लि मुळुगुवदिल्लवु. ॥ ४२ ॥

अदो नभो यन्नियमात् श्वसतां प्राणिनां मार्गं ददाति सप्तभिस्तत्त्वादिभिरावृतो महान् ब्रह्मा लोकस्य जनस्य देहं तनुते सृजति ॥ ४३ ॥ गुणोभिमानिनो रुद्रादिदेवाः यद्भयादस्य जगतोनुयुगं सर्गादिषु वर्तते एतच्चराचरं येषां वशे तिष्ठति ॥ ४४ ॥ स कालः कालशब्दनिर्वचनभावेन कालं विशिनष्टि अनंतइत्यादिविशेषणैः कलज्ञानइतिधातोर्ज्ञानरूपत्वात् भौतिकवदंतवान्नभवतीत्यनंतः कलच्छेदनइत्यतः छेदनाख्यः सर्वेषाममंतं करोतीत्यंतकरः अंताभावादनादिः जातस्यहि ध्रुवो मृत्युरित्यादेः अंतकरत्वादादिकृत् कलकामधेनावित्यतोव्ययः अर्थिष्वासन्नेषु संवृतो निलीनो न भवतीति जन्म मरणे चाज्ञयैव राजवत्करोतीत्याह जनमिति स्वसन्निहितेन ब्रह्मादिजनेनात्मनोंशेन मृत्युना रुद्रदुर्गादिना अतएवंविधगुणविशिष्टः कालात्मा नारायणो मुमुक्षुभिरुपास्य इतिसिद्धं ॥ ४५ ॥ इति श्रीभागवते तृतीयस्कंधे वि० टीकायां त्रिंशोध्यायः ॥ ३० ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

**नभो ददाति श्वसतां मार्गं यन्नियमाददः ॥ लोकस्य देहं नतुते महान्सप्तभिरावृतः॥४३॥ गुणाभिमानिनो देवाः सर्गादिष्वस्य यद्भयात् ॥ वर्त्ततेनुयुगं येषां वशएतच्चराचरं ॥४४॥ सोनंतोंतकरः कालोनादिरादिकृदव्ययः॥ जनं जनेन जनयन्मारयन्मृत्युनात्मनः ॥ ४५ ॥ इति श्रीभा० तृ० स्कं० त्रिंशोध्यायः ॥ ३० ॥ ॥ ॥ ॥**

याव श्रीविष्णुविन नियमानुसारवागियेई आकाशवु श्वास बिडतक्क प्राणिगळिगे अवकाशरूपवाद मार्गवंनु कोडुवदु. याव श्रीविष्णुविन अप्पणेयिंदले चतुर्मुखब्रह्मदेवनु महत्तत्व अहंकारतत्व पंचभूत ईप्रकार एळुतत्वगळिंद सहितनागि जनसमूहक्के देहवंनु सृष्टिमाडुवनु. ॥ ४३ ॥ शब्दवेमोदलाद गुणगळिगे अभिमानिगळाद रुद्रनेमोदलाद यावतत्वेशरवशदल्लि ई चराचरात्मकवाद जगत्तु इरुवदो आ तत्वेशरु यावविष्णुविन भयदिंदले प्रतियोंदु युगदल्लि सृष्टिमोदलाद तम्मतम्म कार्यदल्लिये सिद्धरागिरुवरु. ॥ ४४ ॥ कालशब्ददोळगिन ' कल ' एंब

१ शब्दाद्यभिमानिनः

धातुविन अर्थभेददिंद आ कालशब्दवाच्यनाद परमात्मन गुणगळंनु केलवु विशेषणगळिंद वर्णिसुवनु– कल एंब धातुवु ज्ञानार्थकवाद्दरिंद कालनेंदरे ज्ञानस्वरूपियाद्दरिंद भौतिकवस्तुगळंते नाशवुळ्ळवनल्लवाद्दरिंद आ कालने अनंतनेनिसुवनु. मत्तू कल एंब धातुवु छेदनार्थदल्लिद्ददरिंद छेदनरूपवाद सर्वर नाशमाडतक्कवनाद्दरिंद आ कालने अंतकरनेनिसुवनु. अंतविल्लदिरिदले आदियू इल्लदवनु. ' हुट्टिदवंगे मरणवु निश्चयवु ' एंब गीताप्रमाणानुसारवागि नाशवंनु माडिदवनाद्दरिंद उत्पत्तियंनू माडिदवनु. कल एंब धातुवु अपेक्षितवंनु कोडुव अर्थदल्लिरुवदरिंद याचकरु हत्तर बंदु दैन्यदिंद केळलु इल्लवेंदु हेळलारदे अडगिकोळ्ळुववनल्लवेंदु ' अव्ययः ' निर्भयदिंद दान माडुववनु मत्तू लोकदल्लि जननमरणगळंनु राजनंते आज्ञामात्रदिंदले नडसुवनेंदु हेळुवरु. याव कालशब्दवाच्यनाद विष्णुवु तन्न विशेष सन्निधानवुळ्ळ चतुर्मुखब्रह्मनेमोदलादवरिंद सकल जनरंनु सृष्टिमाडिसुत्त मत्तू तन्न अधीनराद मत्युरूपराद दुर्गादेवि रुद्रनेमोदलादवरिंद जनरंनु कोल्लिसुत्त जगत्तिनाल्लि क्रीडा माडुवनु आदकारण इथ महामहिमेयुळ्ळ कालशब्दवाच्यनाद श्रीनारायणनु मोक्षापेक्षिगळाद भक्तरिंद उपासना माडिसिगोळ्ळुवदक्के योग्यनादवनु एंदु, सिद्धवागुवदु ॥ ४५ ॥ ईप्रकार तृतीयस्कंधद ' सुखार्थबोधिनी ' एंब प्राकृत टिप्पणिय ३० नेय अध्यायवु समाप्तवु ॥

॥ भक्तिसाधनवैराग्यजननाय विविधाः कर्मसंसृतीराचक्षेति देवहूत्याः प्रश्नः परिच्छियतेऽस्मिन्नध्याये ॥ तदर्थं जीवस्य संसारस्य मूलकारणं ब्रूते तस्यैतस्येति यो जगत्सृष्ट्यादिकं करोति तस्यैतस्य कालनाम्नो बलिना कालेन काल्यमानो द्राव्यमाणः कलद्रावणे वायोरिव घनावलिरित्येतत्तदभिमानिदेवतापेक्षयोक्तं विद्राव्यमाणत्वमात्रेण वायं दृष्टांतः अनेन जनस्य परमात्माज्ञानं संसारकारणमुक्तं भवति ॥ १ ॥ उरुविक्रममेव दर्शयति यं यमिति अर्थं सुखसाधनं धुनोति विनाशयति यत्कृते यस्यार्थस्यार्थे नष्टोभूदिति शोचति ॥ २ ॥ जनस्यायमप्यज्ञानातिरेक इत्याह यदध्रुवस्येति अध्रुवस्यानित्यस्य देवमानुषादिलक्षणस्य भोगसाधनानि गृहक्षेत्रधनानि मोहादज्ञानात् ध्रुवाण्यनश्वराणि पुरुषो मन्यतइति यस्मादतो दुर्मतिः दुष्टज्ञानवान् ॥ ३ ॥ गृहादीनामनित्यत्वं पश्यन् न ततो विरक्तिमानिति यस्मादतोऽज्ञानातिरेकोयमपीत्याह जंतुर्वाइति ॥ ४ ॥ ॥ ॥ ॥ ॥ ॥ ॥

**॥ श्रीभगवानुवाच ॥ तस्यैतस्य जनो नूनं नायं वेदोरुविक्रमः ॥ काल्यमानोपि बलिना वायोरिव घनावलिः ॥ १ ॥ यं यमर्थमुपादत्ते दुःखेन सुखहेतवे ॥ तं तं धुनोति भगवान् पुमांश्छोचति यत्कृते ॥ २ ॥ यदध्रुवस्य देहस्य सानुबंधस्य दुर्मतिः ॥ ध्रुवाणि मन्यते मोहाद्गृहक्षेत्रवसूनि च॥३॥ जंतुर्वैभवएतस्मिन् यां यां योनिमुपव्रजेत्॥तस्यां तस्यां स लभते निर्वृतिं न विरज्यते॥४॥**

१ निर्वृतिं विषयभोगजन्यसुखं– लभते पुरुषार्थतया अनुभवति. ॥ या ॥

श्राहारचरणारविंददल्लि भक्तियु हुट्टुवदक्के माधनवाद वैराग्यवन्नु हुट्टिसुवदक्के अनेकप्रकारवाद कर्मगळिंद बरतक्क संसारलक्षणगळन्नु हेळेंदु देवहूतियु हिंदके प्रश्नमाडिद्दक्के ई अध्यायदल्लि उत्तरवु हेळल्पडुवदु. अदर मलुवागिये संसारवु बरुवदक्के मूलकारणवन्नु हेळुवरु–पावश्रीहरियु जगत्तिन सृष्ट्यादिकर्तृनो आ बलिष्ठनाद कालशब्दवाच्यनाद परमात्मन बलदिंद वायुवेगदिंद मेघसमूहवु अचित्त ओडाडिदंते ' उरुविक्रमः ' बहळपराक्रमियाद ( बहुमाहसियाद ) ई जीवनु ' काल्यमानोपि ' ओडाडिसल्पट्टाग्यादरू आ परमात्मन महिमेयन्नु तिळियुवदिल्लवु ' वायोरिव' एंब उपमेयु अभिमानिदेवतिगळ संबंधदिंद हेळल्पट्टदे अथवा जीवनु पराधीननागि ओडाडुवनु एंबदक्के दृष्टांतवु हीगे हेळुवदरिंद परमात्मनन्नु तिळकोळ्ळदे इरुवदे जीवरिगे संसारप्राप्तियदु हेळल्पडुवदु. ॥ १ ॥ जीवन बहु साहसवन्न तोरिसुवनु– जीवनु दुःखदिंद तप्तनागि । आ दुःखवंनु कळकोंडु , सुखवंनु संपादिसबेकेंदु याव याव द्रव्यसंपादकवाद कार्यवंनु माडुवनो आया कार्यगळंनु श्रीहरियु केडिसिबिडुवनु. आया कार्यगळु केडुत्तिरलु अय्यो ई केलसक्के एष्टु साहस बट्टिनल्ल कोनेगे केट्टितु एंदु आ कार्यद मलुवागि बहु शोकपडुवनु. ॥ २ ॥ ईमुंदे हेळुवसंगतियादरू जनर होचिन अज्ञानवेंदु हेळुवनु– ईजीवनु यावकारण देवति मनुष्यमोदलाद अनित्यवाद तन्न देहक्कू तन्न अनुबंधक्कू महवागि भोगसाधनगळाद मने, भूमि, द्रव्य मोदलादवुगळु नाशवागदंते शाश्वतवागिरबेकेंदु अपेक्षिसुवनल्ल आदकारण ई जीवनु दुष्टज्ञानवुळ्ळवनु. ॥ ३ ॥ मने, द्रव्य मोदलादवु अनित्यवेंबदन्नु कंडाग्यादरू अवुगळिंद विरक्तनागुवदिल्लवादरिंद इदादरू जीवन होचिन अज्ञानवेंदु हेळुवनु. ई जीवनु कृमिकीटक मोदलाद यावयाव जन्मवंनु होंदिदाग्यू अल्लल्लि हेंडति, मक्कळु, मने मोदलाद वैभववन्नु होंदि आ विषयभोगदिंद आगतक्क सुखवंनु पुरुषार्थवेंदु अनुभोगमाडुवनु ॥ ४ ॥

अत्र कैमुत्यन्यायमाह नरकस्थः इति नरकस्थोपि पुमान् नारक्यां निर्वृतौ सत्यां तं नारकं देहं त्यक्तुं नेच्छति किमुत देवमानुषादिशरीरस्थइति तत्र हेतुर्देवमायेति ॥ ५ ॥ रागसागरमयत्वाच्च विरागानुदयइतिभावेनाह आत्मजायेति निरूढमूलं समुत्पन्नरागादिकं हृदयं यस्य स तथा ॥ ६ ॥ आत्मजायादिष्वहंममताज्ञानफलमाह संदह्यमानेति एषामात्मजायादीनां ॥ ७ ॥ ॥ ॥ ॥ ॥ ॥

**नरकस्थोपि देहं वै न पुमांस्त्यक्तुमिच्छति॥नारक्यां निर्वृतौ सत्यां देवमायाविमोहितः॥५॥आत्मजायासुतागारपशुद्रविणबंधुषु॥ निरूढमूलहृदय आत्मानं बहुमन्यते ॥६॥ संदह्यमानसर्वांग एषामुद्वहनादिना ॥ करोत्यविरतं मूढो दुरितानि दुराशयः ॥ ७ ॥**

ई हिंदेहेळिद विषयदल्लि ( हेंडरुमक्कळल्लि मग्ननागि इदे पुरुषार्थवेंदु तिळियुवनेंबविषयदल्लि ) कैमुत्यन्यायवन्नु हेळुवरु.( ई कैमुत्यन्यायद अर्थवु हिंदे बहळसारे नम्मिंद कन्नडदल्लि बरेयल्पट्टदे ) नरकदल्लिद्द पुरुषनादरू आ नरकसंबंधवाद दुष्ट अन्नादिगळ भोजनदिंद दुःखानुभवमाडिदाग्यादरू आ नरकसंबंधवाद देहवन्नु बिडुवदक्के इच्छिसुवदिल्लवु अंदमेले देवतिगळ शरीर मनुष्यशरीर मोदलाद उत्तम शरीरदल्लिद्द जीवनु आया शरीरगळन्नु बिडलिच्छिसुवदिल्लवेंदेनु हेळतक्कद्दु इदक्के कारणवेनेंदरे ' देवमायाविमोहितः ' देवमाया अंदरे परमात्मन बंधकशक्तिएंदर्थवु ' या. '



बलिष्ठवाद परमात्मन बंधकशक्तियिंद बद्धनागि जीवनु शरीरदल्लि इष्टु मोहित नागुवनु ॥ ५ ॥ नानु नन्नदेंब ममतासमुद्रदल्लि ई जीवनु मुळगिदकारण इवनिगे वैराग्यवु हुट्टुवदिल्ल एंब अभिप्रायदिंद हेळुवरु. तन्न देहवु तन्न हेंडतियु, मक्कळु मनेयु, मनेयल्लिद्द दनकरगळु संपादिसिद द्रव्यवु मत्तु बांधवरु इवुगळल्लि बहुकालवागि तन्नवेंदु व्यवहार माडि माडि स्नेहबद्धहृदयवुळ्ळवनागि इवरेल्लरू नन्निंदले रक्षितरागतक्कवरेंदु तन्न श्रेष्ठतनवन्नु तिळकोळ्ळुवनु ॥ ६ ॥ तन्न देहदल्लि मत्तु हेंडरुमक्कळगळल्लि नानु नन्नदेंब ( ममताज्ञान ) अभिमान तिळवळिकेय फलवन्नु हेळुवरु.... ' एषां, ई हेंडतिमक्कळु मोदलादवर भार वहिसोणमोदलादद्दरिंद आ संबंधवाद चिंतेयिंद मैयल्ल सुट्टरे एष्टु दुःखवागुवदो अष्टु दुःखवुळ्ळवनागि याव केलस माडुवदक्कू बुद्धिहरियदवनागि केट्ट अभिप्रायवुळ्ळवनागि तप्पदते पापगळन्नु माडुवनु ॥ ७ ॥

कश्चिद्व्यालाभादिना मनोदुःखाग्निना संदीप्तांगत्वादसारोयं संसारइति विरक्तो भविष्यति स्वयमेवेति तत्राह आक्षिप्तात्मेति मायया मोहकशक्त्या ॥ ८ ॥ कूटं वंचनमेव धर्मो यत्र तेषु वंचनधर्मयुक्तेषु वा दुःखानां तंत्रेषु साधनेषु दुःखानां प्रतीकारं सुखवन्मननाद्विरक्तो न स्यादित्यर्थः ॥ ९ ॥ ननु वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः॥अप्यकार्यशतं कृत्वा भर्त्तव्यामनुरब्रवीदिति यया कया विविधया कुटुंबभरणस्य विहितत्वाद्विरक्तया तत्त्यागे महान् दोषः स्यादतो न विरागो भूषणमित्याशंक्याशास्त्रविहितहिंसादिना प्राप्तमहापातकेनाधःपातएवेत्याह अर्थैरिति विप्रादेः सेवादिकमकार्यशतं महाविपदि विहितत्वात्तत्कृत्वा न दोषइत्यर्थपरं स्मार्तवचनं पोष्यजनभुक्तशेषस्य भोक्ता॥ १० ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

**आक्षिप्तात्मेंद्रियः स्त्रीणामसतीनां च मायया ॥ रहोरचितसल्लापैः शिशूनां कलभाषणैः ॥८॥ गृहेषु कूटधर्मेषु दुःखतंत्रेष्वतंद्रितः ॥ कुर्वन्दुःखप्रतीकारं सुखवन्मन्यते गृही ॥ ९ ॥ अर्थैरापादितैर्गुर्व्या हिंसयेतस्ततश्च तान् ॥ पुष्णाति येषां पोषेण शेषभुग्यात्यधः स्वयं ॥ १० ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥**

ओंदुसारे द्रव्यमोदलादद्दु दोरेयद मनोदुःखवेंब अग्नियिंद मंदबुमाननागि ( व्यासोत्तु ई संसारवु असारवेंदु तत्क्षक्के नाने अभावमूलक ) विरक्तनागुवनल्लवेंदरे हेळुवरु– पुंश्चलीस्त्रीयर मोहकशक्तियिंद यळेयल्पट्ट इंद्रियगळु मनःसूक्ष्मवनागि आ स्त्रीयर मंगड एकांतदल्लि परस्पर माताडुवदरिंदलु अवरल्लि उत्पन्नवाद कूसुगळ तोदलु मातु केळुवदरिंदलू बद्धनागि ॥८॥ ' गृही ' कुटुंब रक्षणमाडतक्क गृहस्थाश्रमियु ई यजमानन्नु वंचनेमाडुवदे सहजधर्मवागिवुळ्ळ ( इवन ) दुःखक्के माधनस्वरूपराद हेंडरुमक्कळल्लि आमक्तनागि मैमरेयदे बंद बंद दुःखप्रसंगगळिगे भंगणेलिसुत्त ( अंदरे दुःखप्रसंगवन्नु कळेदु सुखसाधन माडुव उद्योगमाडुववनागि ) अदे परमसुखवेंदु तिळियुवनादरिंद ( इवनु ) विरक्तनागुवदिल्लवेंदर्थवु ॥ ९ ॥ [ अर्थैरिति-गुर्व्या हिंसया प्रबलतम ... आपादितैः संपादितैरर्थैः तान् जायादीन् पुष्णाति या० ] ओळ्ळे-' तायितंदिगळ मदकरु हेंडतिय योग्यळ कस मंगद इथ कट्टबवन्न नाश अकार्यमाडि आदरू पोषण

माडलेबेकु' एंदु मनुवु हेळिरुववु. आदकारण यावरीतियिदादरू कुटुंबरक्षणमाडनक्कद्दु विहितवाद्दरिंद, ई गृहस्थाश्रमियु विरक्तनागि आ पोष्यवर्गवन्नु ( मनिय जनरन्नु ) परित्यागमाडिदरे महादोषक्के पात्रनागुववनु. आदकारण ई वैराग्यवु भूषणवल्लवेंदु मंशयवदरे आ कुटुंबभरणमाडुव प्रमगदल्लि शास्त्रक्के विरुद्धवाद परहिंसामोदलाद महापातकघटनेयागुवदरिद इवनिगे अधःपात अंदरे नरकप्राप्तियिये आगुवदु एंब अभिप्रायदिद हेळुवरु—भयंकरवाद अनेकप्रकार हिंसेगळन्नु माडि अत्तित्तलागिद तंद द्रव्यगळिद आ हेंडरु मक्कळुगळन्नु संरक्षिसुववनु. आ मनेय जनरु तिंदुउळिदद्दन्नु तिंदु ई दोषदिंद तानोब्बने नरकक्के गुरियागुववनु हागादरे मेले हेळिद ( वृद्धौचमातापितरौ अप्यकार्यशतंकृत्वा एंब मनुस्मृतियु व्यर्थवायितल्लवेंदरे अदर अर्थवु बेरे इरुवदु एनेंदरे—ब्राह्मणरु तम्मकेळगिन जातियवर सेवेयन्नु माडुवदे अकार्यशतवेनिसुवदु ब्राह्मणनु महाविपत्तु बंदागये ई अकार्यशतस्वरूपवाद पररसेवेयन्नु माडि कुटुंबरक्षणमाडिदरे दोषविल्लवेंब अर्थवादपरवु आ स्मृतिय अर्थवु. ॥ १० ॥

अतिवृष्ट्यनावृष्टिव्याधिगोजरनाशादिना कुंठितजीवनस्य वृत्तिं कथयति वार्तायामिति पुनःपुनरारब्धायामृणद्रव्यायानीतगोवृषादिनोपक्रांतायां वार्तायां कृषिगोरक्ष्यवाणिज्यादिलक्षणायां लुप्यमानाया विनाशं गच्छंत्यां लुभगाध्यइतिधातोर्लोभेन परद्रव्यादित्सालक्षणेनाभिभूतोऽतएव निःसत्वः सत्वगुणशून्यो बलरहितो वा परार्थे चौर्यादिना परद्रव्यादाने स्पृहां कुरुत इत्यन्वयः ॥११॥ परार्थप्राप्त्यशक्तत्वेन स्वकुटुंबभरणाकल्पस्य चरमावस्थामाह कुटुंबभरणाकल्पइति श्रिया संपदा शरीरकांत्या वा श्वसिति दीर्घश्वासं करोति मूढधीः कर्तव्यबुद्धिरहितः ॥ १२ ॥ कीनाशः कर्षकगोजरमुलेखनासमर्थं वृषभं ॥ १३ ॥ ॥ ॥

वार्तायां लुप्यमानायामारब्धायां पुनःपुनः ॥ लोभाभिभूतो निःसत्वः परार्थे कुरुते स्पृहां ॥ ११ ॥ कुटुंबभरणाकल्पो मंदभाग्यो वृथोद्यमः ॥ श्रिया विहीनः कृपणो ध्यायंच्छ्वसति मूढधीः ॥ १२ ॥ एवं स्वभरणाकल्पं तत्कलत्रादयस्तदा ॥ नाद्रियंते यथापूर्वं कीनाश इव गोजरं ॥ १३ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

अतिवृष्टियू अनावृष्टियू रोगाद्युपद्रवगळू ( गोजरमुदकयत्तु ) दनगळु मायोणवु इवेमोदलाद नष्टवागुवदरिंद; तन्न उपजीवनक्के कारणवाद कृषिमोदलाद व्यापारवु निंतु होदवन स्थितियन्नु हेळुवरु. मोदलु ओंदु मारे प्रारंभमाडिद कृषिमोदलाद व्यवहारवु नष्टवागि मेले हेळिदंते लुक्सानागलु ) मत्तोंदु मारे सालातंद द्रव्यदिद यत्तु दनकर ) मोदलाद साहित्यगळन्नु कूडिसि पुनः कृषिमोदलाद व्यवहारवन्नु प्रारंभिमलु अदादरू नष्टवागलु व्यासोत्तु तत्वल्लिद्द समाधानगुणवु हेगि अथवा सकलसामर्थ्यवू नष्टवागलु परद्रव्यवन्नु एत्ति हाकबेकेंब इच्छेयिंद पूर्णनागि चौर्यमोदलादवुगळिंद परद्रव्यदल्लि स्पर्धेयन्नु माडुववनु ॥ ११ ॥ परद्रव्यवन्नु दोरकिसुवदक्के अशक्तनादकारण तन्न कुटुंबवन्नु रक्षणमाडुवदक्के असमर्थनादवन कडि ( कोनेय ) अवस्थेयन्नु हेळुवरु—तन्न कुटुंबरक्षणमाडुवदक्के असमर्थनागि द्रव्यवू कडिमेयागि उद्योगगळू व्यर्थवागलु मुखतेजःसुहीननागि संपत्तु इल्लदरिंद मुंदे एनु माडबेकेंबदु बुद्धिगे तोरदे ( अय्यो उःश्श एंदु ) दीर्घश्वासबिडुववनु. ॥ १२ ॥ ई हिंदेहेळिदंते तन्न कुटुंबक्के माकष्टु द्रव्यपूरयिसुवदक्के असमर्थनाद ई यजमानन्नु ( जीवनवु ) अवनहेंडरू मक्कळू मोदलादवरु आ मुप्पिनकालदल्लि मोदलु द्रव्यसंपादिसुवागे इवनन्नु ह्यागे मन्निसुत्तिद्दरो, हागे मन्निसदे, हरगुवदक्के ( मडिकेडोंडियुवदक्के अनुपयुक्तवाद मुप्पिन यत्तन्नु कृषिकरु ( रैतरु ह्यागे अनादर माडुवरो अदरंते अनादर माडुवरु. ॥ १३ ॥

स्वकलत्राद्यनादरं दृष्ट्वा विरक्तो मोक्षाय यतिष्यत इतिचेत्तत्राह तत्रापीति तस्यामवस्थायामपि॥१४॥ अपत्याद्यैरवमत्या अवज्ञानेन दत्तान्नमाहरन् गृहपालः श्वेवगृहआस्तइत्यन्वयः संसारिण आसन्नमरणावस्थायामपि विरागो नोत्पद्यतइत्याशयेनाह आमयेनेत्यादिना ॥ १५ ॥ ॥ ॥ ॥ ॥

तत्राप्यजातनिर्वेदो भ्रियमाणः स्वयं भृतैः ॥ जरयोपात्तवैरूप्यो मरणाभिमुखो गृहे ॥ १४ ॥ आस्तेवमत्योऽपत्याद्यैर्गृहपाल इवाहरन् ॥ आमयेनाप्रदीप्ताग्निरल्पहारोल्पचेष्टितः ॥ १५ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तन्न हेंडति मक्कळु मोदलादवरु अनादर माडुवदन्नु कंडु अवर विषयक्के विरक्तनागि मोक्षदसलुवागि प्रयत्नमाडुववनु, एंदरे हेळुवरु —अंथ अंत्यावस्थ्ययल्लियादरू–अदुवेगे नन्निंद रक्षितराद जनरिंद कूडिकोंडु पुनः अवरन्ने रक्षण माडबेकेंब उद्योग उळ्ळवनागि तनगे मुप्पिनिद बंद कुरूप ( दुष्टरूप ) उळ्ळवनागि मरणक्के समीपस्थनागि मनेयल्लि कूळितु. ॥ १४ ॥ हेंडरुमक्कळु मोदलादवरिंद अवमानितनागि अवरु अवमानमाडिकोट्ट अन्नवन्नु मुंजिमुत्त मनेवागिलल्लि कुळित नायियु आ मनियवर अन्नवन्नु तिंदु मनेयु नन्नदेंब अभिमानदिंद होरगिन जनरन्नु ओळगे बिडद, मनेयन्नु कायुत्त ह्यागे कुळितिरुवदो हागेये कुळितुकोळ्ळुवनु—संसारदल्लिये अतिशय अभिमानवुळ्ळ जीवनिगे मरणवु समीपक्के बंदिदेंदु तिळिदाग्यू वैराग्यवु हुट्टुवदिल्लवेंब अभिप्रायदिंद हेळुवरु—आमेले शक्तियु कडिमेयागि जठराग्नियु मंदवागलु आहारवु कडिमेयागि ओड्याटवु कडिमेयागुवदु ॥ १५ ॥

यस्य कासश्वासाभ्यांकृतायासः पूर्णक्लेशः कंठो घुरुघुरायतेऽनुकारशब्दं करोति स आतुरः किमपि न ब्रूत इत्यन्वयः उत्क्रमता निर्गच्छता उत्तारं उद्गतं कफश्लेष्म तेन संरुद्धा नासिका यस्य स तथा अनेनासनशयनावुक्तयवस्थायामपि विरागो नाभूदहो हरेर्माहात्म्यमित्यदर्शि ॥ १६ ॥१७ ॥ तस्यांत्यामवस्थामाह एवमिति ॥ १८ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

वायुनोत्क्रमतोत्तारकफसंरुद्धनासिकः ॥ कासश्वासकृतायासः कंठो घुरुघुरायते ॥ १६ ॥ शयानः परिशोचाद्भिः परिवीतः स्वबंधुभिः ॥ वाच्यमानोपि न ब्रूते कालपाशवशं गतः ॥ १७ ॥ एवं कुटुंबभरणे व्यापृतात्माजितेंद्रियः ॥ भ्रियते रुदतां स्वानामरुवेदनयास्तधीः ॥ १८ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

एकप्रकारवागि अप्राकृतदेहवुळ्ळवेंदु मोक्षापेक्षियादवनिंद तिळियतक्कद्दु इदक्के विरुद्धवागि परब्रह्मन मूलरूपवु मात्र अप्राकृतवेंतलू अवताररूपगळु प्राकृतवेंतलू तिळिदरे अवरिगे अंधंतमःसे आगुवदु एंब अभिप्रायदिंद हेळुवरु— 'एकं' आ परब्रह्मवस्तुवु सर्वोत्तमवेनिसुवदु अथवा मूलरूपक्कू तन्न अवताररूपगळिगू भेदविल्लद्दु 'ज्ञानं' सच्चिदानंदात्मकवादद्दु. 'ब्रह्म' अनंत-संख्याविशेषविषयगळिंद पूर्णवादद्दु 'निर्गुणं' मत्स्यादिरूपगळादरू प्रकृतिनिर्मितदेहविल्लद्दु इंथ परब्रह्मवस्तुवु शब्दस्पर्शमोदलाद विषयधर्मउळ्ळ प्राकृतजनर होरगिन चक्षुःसे मोदलाद इंद्रियगळिगे अर्थरूपवागि (अवताररूपवु) प्राकृतशरीरवुळ्ळद्देंदु भ्रांतिइंद तोरुवदु 'मूलरूपवू पूर्णवादद्दु ई अवताररूपवादरू पूर्णवादद्दु' एंदु श्रुतियु हेळुवदु. आदकारण मूलरूपक्कू अवताररूपगळिगू भेद तिळदवनु अंधंतमःसिगे होगुवनु.॥ इदक्के प्रमाणवु 'श्रीविष्णुविन मत्स्यकूर्ममोदलादरूपगळु केवल ज्ञानस्वरूपवादद्दवु इवुगळन्नु यारु भौतिकवेंदु तिळियुवरो अवरु अंधंतमःसिगे होगुवरु ॥ २८ ॥

स्त्रीत्वादिमर्थं कथं जानामीत्यत उदाहरति यथामहानिति महान्महत्तत्वाभिमानी ब्रह्मा वैकारिकाद्यात्मना त्रिवृत् त्रिविधोहंकारोहंकाराभिमानी रुद्रः आकाशादिपंचभूताभिमानित्वेन पंचविधः मनआद्येकादशेंद्रियाभिमानित्वेनैकादशविधः स्वराडिंद्रश्चैते अज्ञानिनां भौतिकशरीरत्वेनापि यथाप्रतीयंते तथा मत्स्यादिरूपं परब्रह्मेत्यर्थः अभिमानित्वमात्रेणाभिमन्यमानदेहत्वं कथमित्येतत्स्पष्टयति तस्येति इदमंडं सर्वजगच्च तस्येंद्रस्य वपुरिति यतोतइति अनेन ब्रह्मरुद्रयोरपि भौतिकदेहत्वं स्पष्टमित्युक्तं भवति अत्र यथाप्रतीतार्थो दार्ष्टांतिकेनुपयुक्तः स्यादित्येवं व्याख्यातमिति ज्ञातव्यं एकादशेंद्रियात्मा च पंचभूतात्मकस्तथा सर्वाभिमानी भगवान् स्वराडिंद्रः पुरंदरः इदमंडं जगत्सर्वं शक्रदेहं विदुर्बुधाः तत्पतिस्त्रिगुणो रुद्रस्तस्य ब्रह्मा ततो हरिरिति वचनात् ॥ २९ ॥ ॥ ॥

## यथामहानहंकारस्त्रिवृत्पंचविधः स्वराट् ॥ एकादशविधस्तस्य वपुरंडं जगद्यतः ॥ २९ ॥ ॥ ॥

नानु (देवहूतियु) स्त्रीयळादकारण ई अर्थवन्नु ह्यागे, तिळिदेनु ? एंदरे उदाहरिसुवरु— महत्तत्वाभिमानियाद ब्रह्मनु, मत्तू वैकारिकं तैजस तामसगळेंब मूरु प्रकारवाद अहंकार तत्वाभिमानियाद रुद्रनु, मत्तू आकाशमोदलाद पंचभूतगळिगे अभिमानियाद्दरिंद ऐदु प्रकारनेनिसिद मत्तू मनःसेमोदलाद हन्नोंदु इंद्रियगळिगे अभिमानियाद्दरिंद हन्नोंदु प्रकारनेनिसिद स्वराजनाद इंद्रनु ई मूवरु भौतिकशरीरवुळ्ळवरेंतलू ह्यागे तोरुवरो अदेप्रकारवे मत्स्यादिरूपियाद परब्रह्मनादरू भौतिकदेहवुळ्ळवनेंदु अज्ञानिगळिंद तिळियल्पडुवनु महत्तत्वमोदलादवुगळिगे ब्रह्मादिगळु अभिमानिगळागुवदरिंद आ ब्रह्मादिगळ देहवु आया तत्वस्वरूपवेंबदेल्लि कंडदे एंदरे हेळुवरु— ई ब्रह्मांडवु सर्व जगत्तू इंद्रन शरीरवाद्दरिंद मेलेहेळिद अर्थवु सरियादद्दु. हीगे हेळुवदरिंद ब्रह्मरुद्ररिगादरू भौतिकदेहविरुवदेंदु स्पष्टवागि हेळल्पडुवदु. ई श्लोकदल्लि मेले तोरुव अर्थवु अंदरे इंद्रादिगळ शरीरवु ह्यागे भौतिकवो हागे एंदु दार्ष्टांतिकनाद परमात्मन अवताररूपदल्लि भौतिकत्ववु उपयुक्तवल्लवु एंदु तिळियतक्कद्दु. ई हेळिद अर्थक्के प्रमाणवु 'हन्नोंदु इंद्रियस्वरूपियू मत्तू पंचभूतात्मकनू मत्तू ई सर्वजगत् इंद्रन देहवेंदु ज्ञानिगळु तिळियुवरु- आ इंद्रनिगे पतियु रुद्रनु आ रुद्रनिगे पतियु चतुर्मुखब्रह्मनु' एंब प्रमाणदिंद मेलिन अर्थवु सरियादद्दु.॥ २९ ॥

तर्हि तद्ब्रह्म यथावज्ज्ञातुं कथं शक्यत इति तत्राह एतदिति एतैः साधनैः अधिकार्येतन्मत्स्याद्यवताररूपं ब्रह्म परिपश्यति प्राकृतदेहादिदोषपरित्यागेन ज्ञानानंदाद्यनंतगुणपूर्णत्वेनापरोक्षीकरोतीत्यन्वयः कैरित्यत उक्तं श्रद्धयेत्यादिभिरिति नित्यशोनुक्षणं यमादियोगाभ्यासेन कीदृशोधिकारी समाहितात्मा हरावेव सम्यगर्पितमनाः निःसंगो दुष्टसंगरहितः निर्णीतसज्जनसंगोवा निर्निर्णयनिषेधयोरिति यादवः विरक्तः सर्वमसारमनित्यंचेति ज्ञानवान्वा इत्यनेनैतैरेव साधनैर्नापरैरैक्य ज्ञानादिभिर्ब्रह्मदर्शनं स्यादिति सूचयति ज्ञानरूपमेकं निर्गुणं ब्रह्म भ्रांत्यार्थरूपेण पंचात्मनावभातीत्याद्यपव्याख्याननिरासाय च मत्स्यकूर्मादिरूपंच विष्णोर्ज्ञानैकमात्रकमित्याद्युदाहृतमाचार्यैरिति ज्ञातव्यं ॥ ३० ॥ ॥ ॥ ॥ ॥ ॥

## एतद्वै श्रद्धया भक्त्या योगाभ्यासेन नित्यशः ॥ समाहितात्मा निःसंगो विरक्तः परिपश्यति ॥ ३० ॥ ॥ ॥

हागादरे आ परब्रह्मवस्तुवु सरियागि (इद्दकिद्दंते) ह्यागे तिळियुवदक्के शक्यवु ? एंदरे हेळुवरु- ई श्लोकदल्लि हेळल्पडतक्क साधनगळिंद अधिकारियु ई मत्स्याद्यवताररूपियाद परब्रह्मनन्नु यथार्थवागि तिळियुवनु. आ मत्स्यकूर्ममोदलाद अवताररूपियन्नु प्राकृतदेहमोदलाद दोषरहितनेंतलू ज्ञानानंदाद्यनंतगुणपूर्णनेंतलू प्रत्यक्षीकरिसिकोळ्ळुवनु (इल्लि हेळल्पट्ट अधिकारियु) याव गुणयुक्तनाद अधिकारियु एंदरे हेळुवरु— यावनु श्रद्धा मत्तू भक्तियिंदयुक्तनागिरुवनो (श्रद्धा अंदरे सामान्यवाद श्रीहरियल्लि विश्वासवु. भक्तियंदरे माहात्म्यज्ञानपूर्वक सुदृढस्नेहवु) मत्तू क्षणशः यमनियममोदलाद योगाभ्यासयुक्तनागिरुवनो मत्तू श्रीहरियल्लिये मनःसिट्टवनो, मत्तू दुष्टसंगरहितनादवनो अथवा सज्जनसंगवु यावदेंदु निर्णयमाडि विरक्तनादवनो मत्तू सर्ववू असारवु अनित्यवेंदु ज्ञानवुळ्ळवनो अंथ अधिकारिये, मत्स्यकूर्माद्यवताररूपिय यथार्थ अपरोक्षवुळ्ळवनागुवनु. इल्लिय 'वा' एंबदु ई मेले हेळिद साधनसंपत्तियिल्लदे ऐक्यज्ञानवुळ्ळ अद्वैतिगळिंद ब्रह्मापरोक्षवु साध्यवल्लवेंदु हेळुवदु ज्ञानरूपवादद्दु ओंदे मूलपरब्रह्मवु निर्गुणवादद्दु अदे वस्तुवे अज्ञानिगळ भ्रांतियिंद अनेक प्रकारवागि सुळ्ळे भासवागुवदु एंब परकीयर अपव्याख्यानवन्नु खंडन माडुवदक्के 'मत्स्यकूर्मादिरूपंच विष्णोर्ज्ञानैकमात्रकं' एंब प्रमाणवु आचार्यरिंद हेळल्पट्टदे. ॥ ३० ॥

तत्त्वोपदेशमुपसंहरति इतीति ब्रह्मदर्शयतीति ब्रह्मदर्शनं तात्पर्यातिशयजननाय ज्ञानं विशिनष्टि येनेति प्रकृतिशब्दवाच्यस्य लक्ष्म्यादेः पुरुषशब्दवाच्यस्य विष्ण्वादेस्तत्त्वमनारोपितरूपं येन ज्ञानेनावबुध्यत इत्यन्वयः ॥ ३१ ॥ अवश्यज्ञानानुष्ठानार्थं येन विना मुक्तिमात्रं न स्यात्तत्साधनं निर्दिशति ज्ञानमिति यो नैर्गुण्यो भक्तिलक्षणो योगो यच्च ज्ञानं ज्ञानयोगस्तयोर्द्वयोरप्येक एवार्थो विषयः यस्य स क इति तत्राह भगवच्छब्देति भगवच्छब्दवाच्य इत्यर्थः भक्तिज्ञानयोगयोरैश्वर्याद्यनंतगुणपूर्णश्रीनारायणो विषय इति भक्तिज्ञाने मुक्तेरवश्यसाधने मयोपदिष्टे इति ज्ञानभक्ती विना नैव मुक्तिः कस्यापि विद्यते तयोरेकतरेणापि विष्णुमेनोभयं विना एवमप्येतयोरेकभावेन्यनियतेर्ध्रुवं एकेनापि भवेन्मुक्तिस्तदर्थं त्वन्यसाधनमिति वाक्यार्थज्ञानाय लक्षण इत्युक्तं लक्षदर्शनांकयोरिति धातोः सूचितोयमर्थ इति ॥ ३२॥ एकस्यानेकगुणविषयत्वं कुत्र दृष्टमिति तत्राह यथेति यथा बहूनां शब्दस्पर्शरूपरसगंधगुरुत्वादीनां गुणानामाश्रयो बहुगुणाश्रय एकोर्थः पदार्थो नानेयते

कः पृथक्कारैः पृथक् कारश्चरणं वर्तनं येषां तानि तैर्भिन्नमार्गैरिंद्रियैः श्रोत्रेण शब्दवान् त्वचा स्पर्शवांश्चक्षुषा शुक्लादिरूपवान् जिव्हया रसवान् घ्राणेन गंधवान्पाणिना गुरुरिति ज्ञायते एवं स भगवानेको ज्ञानानंदादिबहुगुणाश्रयः शास्त्रवर्त्मभिर्वेदांतादिसच्छास्त्रमार्गैरानंदवान् ज्ञानवानित्यादिबहुगुणविषयत्वेन ज्ञायत इत्यन्वयः ॥ ३३॥

इत्येतत्कथितं गुह्यं ज्ञानं तद्ब्रह्मदर्शनं ॥ येनैव बुध्यते तत्त्वं प्रकृतेः पुरुषस्य च ॥ ३१ ॥ ज्ञानं योगश्च मन्निष्ठो नैर्गुण्यो भक्तिलक्षणः ॥ द्वयोरप्येक एवार्थो भगवच्छब्दलक्षणः ॥ ३२ ॥ यथेंद्रियैः पृथक्कारैरर्थो बहुगुणाश्रयः ॥ एको नानेयते तद्वद्भगवांश्छास्त्रवर्त्मभिः ॥ ३३ ॥ ॥ ॥ ॥ ॥ ॥ ॥

कपिलरूपियाद परमात्मनु तायिगे तत्वोपदेशवन्नु मुगिसुवनु– हे देवहूतिये ई प्रकारवागि प्रकृतिशब्ददिंद करिसिगोळ्ळतक्क श्रीलक्ष्मीदेवियें मोदलादवरदू मत्तु पुरुषशब्ददिंद करिसिगोळ्ळतक्क श्रीविष्णुने मोदलादवरदू आरोपविल्लदंते यथार्थवाद तत्वज्ञानवु यावदरिंद आगुवदो अंथ श्रीहरियन्नु प्रत्यक्षतोरिसुवदक्के योग्यवाद गुह्यिसुवदक्के योग्यवाद ज्ञानवन्नु निनगे हेळिदेनेंदु अन्वयवु. ॥ ३१ ॥ अवश्य ज्ञानानुष्ठानमाडुवदक्के यावदु इल्लदहोर्तु केवलमुक्तियागुवदिल्लवो आ साधनवन्नु तोरिसुवनु–यावदु नैर्गुण्य ( विषयसंपर्करहितवाद ) भक्तिलक्षणवाद योगवो यावदु ज्ञानयोगवो आ एरडू ओब्बनविषयकवागिये इरुववु, अवनु यारेंदरे भगवंतनेंदु करिसिगोळ्ळुवनु भक्ति मत्तु ज्ञानयोग इवु एरडरिंदलू ऐश्वर्यमोदलाद अनंतगुणपूर्णनाद श्रीनारायणने विषयनु एंदु आ नारायणन विषयकवाद भक्तियू अवनविषयकवाद ज्ञानवू इवु यरडे मुक्तिगे अवश्यसाधनगळेंदु ननिंद ( कपिलनिंद ) उपदेशमाडल्पट्टितु. ' ज्ञान मत्तु भक्ति इवु एरडू इल्लदहोर्तु मोक्षवु यावनिगू आगुवदिल्लवु. ई ज्ञानभक्तिगळु विष्णुविषयकवागदिद्दरे एनू केलसक्के बारवु. अवु श्रीविष्णुविषयकवागिद्दरे एरडरल्लि ओंदादरू मोक्षक्के साकु. यांकेंदरे अवु ( ज्ञानभक्तिगळु ) ओंदन्नु बिट्टु मत्तोंदु इरुवदेइल्लवु. आद्दरिंद अवुगळल्लि ओंदादरू मोक्षक्के साकु. आ ज्ञानभक्तिगळु दोरेयुवदक्कागिये मिक्काद एल्ल साधनगळू बेकागुववु एंदु तिळिसुवदक्के लक्षणः एंब शब्दप्रयोगविरुवदु ॥ ३२ ॥ ओब्बनाद परमात्मनु अनेकगुणगळिगे विषय ( आश्रय ) नागिरुवनेंबुवदु एल्लि ह्यागे कंडदे एंदरे हेळुवरु—लोकदल्लि ह्यागे ओब्ब मनुष्यनु ( इंद्रियभेददिंद ) शब्द स्पर्श रूप रस गंध गुरुत्वमोदलाद अनेकगुणगळिगे आश्रयनागिरुवदु, अनेक इंद्रियमार्गदिंद कंडदेयो किवि इरुवदरिंद शब्दगुणवुळ्ळवनेंतलू कण्णु इरुवदरिंद शुक्लमोदलादरूपज्ञानवुळ्ळवनेंतलू नालिगे इरुवदरिंद रसवुळ्ळवनेंतलू घ्राणेंद्रियदिंद गंधवुळ्ळवनेंतलू कैयिंद भारमोदलाद स्पर्शवुळ्ळवनेंतलू ह्यागे अनेकगुणाश्रयनागि तोरुवनो अदरंतेये श्रीहरियोब्बने ज्ञान आनंदमोदलाद बहुगुणाश्रयनेंदु वेदांतमोदलाद सच्छास्त्रमार्गगळिंद आनंद वुळ्ळवनु ज्ञानवुळ्ळवनु इवेमोदलाद बहुगुणगळिगे आश्रयनेंदु तिळियुत्तदे ॥ ३३ ॥

भक्तिज्ञानविषयवत्साधनाक्रियादीनामपि भगवानेव विषय इत्याह क्रियेत्यादिश्लोकत्रयेण क्रियया संध्यावंदनादिलक्षणया भगवल्लिंगानां दर्शनेनात्मनो मनसश्चक्षुरादींद्रियाणां जयेन कर्मणामशास्त्रविहितानां संन्यासेन त्यागेन ॥ ३४ ॥ एकस्य धर्मस्योभयचिन्हत्वं कथमिति तत्राह यइति मतुप् प्रत्येकमभिसंबध्यते प्रवृत्तिमान्निवृत्तिमानिति भगवदुपासनादिप्रवृत्तिर्हिंसादिनिवृत्तिस्तद्वानित्यर्थः ॥ ३५ ॥ ३६ ॥ ॥ ॥ ॥



क्रियया क्रतुभिर्दानैस्तपःस्वाध्यायदर्शनैः ॥ आत्मेंद्रियजयनापि संन्यासेनच कर्मणां ॥ ३४ ॥ योगेन विविधांशेन भक्तियोगेन चैवहि ॥ धर्मेणोभयचिन्हेन यः प्रवृत्तिनिवृत्तिमान् ॥ ३५ ॥ आत्मतत्त्वावबोधेन वैराग्येण दृढेनच ॥ ईयते भगवानेभिः सगुणो निर्गुणः स्वदृक् ॥ ३६ ॥ ॥ ॥ ॥ ॥ ॥ ॥

भक्तिज्ञानगळिगे परमात्मने विषयनेंदु हिंदे ह्यागे हेळल्पट्टितो अदरंतेये साधनक्रिया ( कर्ममोदलादवु ) मोदलादवुगळिगादरू आ श्रीहरिये विषयनेंदु हेळुवरु— संध्यावंदनमोदलाद नित्य कर्मगळिंदलू सोमयागमोदलाद नैमित्तिक कर्मगळिंदलू सत्पात्ररल्लि दानमाडुवदरिंदलू योग्याराद शिष्यरिगे वेदांतादिसच्छास्त्र प्रवचन ( उपदेश ) माडुवदरिंदलू तीर्थयात्रागळल्लि श्रीविष्णु प्रतिमेगळ संदर्शनदिंदलू मनोनिग्रह मत्तु चक्षुरादिइंद्रियनिग्रहदिंदलू शास्त्रविरुद्धवाद कर्मगळन्नु माडुवदन्नु बिडुवदरिंदलू ॥ ३४ ॥ मत्तु अष्टांग योगानुष्ठानदिंदलू हागू भक्तियोगदिंदलू एरडु चिन्हवुळ्ळधर्मदिंदलू अंदरे ओंदे धर्मक्के एरडु चिन्हगळु ह्यागे एंदरे ' प्रवृत्तिनिवृत्तिमान् ' एंबल्लिय मान् एंब मतुप् प्रत्ययवु प्रवृत्तिमान् निवृत्तिमान् एंदु एरडू कडगू संबंधिसुववु. प्रवृत्तिमान् एंदरे भगवदुपासनामोदलादद्दन्नु माडतक्क धर्मवु. निवृत्तिमान् एंदरे ( यज्ञीयहिंसाहोर्तु मिक्काद ) यावहिंसावन्नू माडबारदेंबुदु निवृत्तिधर्मवु ( प्रवृत्तिमान् मोक्षमार्गे प्रवृत्तिजनकः निवृत्तिमान् संसारे वैराग्यजनकः ) या. ॥ ३५ ॥ [ आत्मतत्वं परमात्मनोयाथात्म्यं तदवबोधेन श्रवणमननरूपेण ईयते अपरोक्षेण ज्ञायते सगुणः अधिकार्यपेक्षित फलसंपादक गुणपूर्णः निर्गुणः सत्वादि गुणविकारशून्यः स्वं स्वीयं भक्तं कृपयापश्यतीति स्वदृक् ) या ॥ श्रीहरिय संबंधवाद यथार्थवाद तत्ववन्नु श्रवणमननादिगळिंद तिळकोळ्ळुवदरिंदलू दृढवाद वैराग्यदिंदलू ई उपासनामाडतक्क भक्तनु बेडतक्क फलवन्नु कोडुवदक्के समर्थनाद मत्तु सत्वादिगुणविकारशून्यनाद श्रीहरियु ' ईयते ' प्रत्यक्षवागि.तिळियुवनु ॥ ३६ ॥

इदानीमुक्तपरमप्रमेयमुपसंहरति प्रावोचमिति ॥ ३७ ॥ संसृतीर्गतीः यासु संसृतिषु प्रविशन्नयं जीव आत्मनः स्वस्य गतिं शरणमात्मानं न वेद ॥ ३८ ॥ उपदिष्टतत्त्वज्ञानानधिकारिण आह नैतदिति खल इंद्रियारामो दुर्जन इत्यर्थः स्तब्धो गुरुनियोगमकुर्वाणः भिन्नो वैष्णवममयेतरसमयनिष्ठः धर्मध्वजो दंभवान् ॥ ३९ ॥ लोलुपो विषयाभिलाषी खलत्वादिदोषरहितोपि ममाभक्तश्चेन्नैवोपदेशयोग्यः प्रसंगेनापीत्याशयेनोक्तं जात्विति नैतावता पूर्यत इत्याह न मद्भक्तद्विषामिति ॥ ४० ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

प्रावोचं भक्तियोगस्य स्वरूपं ते चतुर्विधं ॥ कालस्य चाव्यक्तगतेर्योंतर्धावति जंतुषु ॥ ३७ ॥ जीवस्य संसृतीर्बह्वीरविद्याकर्मनिर्मिताः ॥ याः स्वयं प्रविशन्नात्मा न वेद गतिमात्मनः ॥ ३८ ॥ नैतत्खलायोपदिशेन्नाविनीताय कर्हिचित् ॥ न स्तब्धाय न भिन्नाय नैव धर्मध्वजायच ॥ ३९ ॥ न लोलुपायोपदिशेन्न गृहारूढचेतसे ॥ नाभक्ताय च मे जातु न मद्भक्तद्विषामपि ॥ ४० ॥

इन्नु हिंदेहेळतक्कंद श्रेष्ठवाद प्रमेयवन्नु मुगिसुवरु— हे तायिये ( देवहूतिये ) इदुवरेगू निनगे नाल्कुप्रकारवाद भक्तियोगद स्वरूपवन्नु हेळिदेनु. मत्तू सकलप्राणिगळल्लि जननमरणादिगळिंद ओळगे ओव्वरिगू तोरदंते धाविसतक्क कालद स्वरूपवन्नादरू हेळिदेनु. ॥ ३७ ॥ मत्तू यावसृष्टिमोदलाद संसारगतिगळल्लि प्रवेशमाडि ई जीवनु तन्न स्वरूपगतियन्न तनगे रक्षकनाद श्रीहरियन्नु तिळियुवदिल्लवो अंथ अज्ञानकाम्यकर्मगळिंद निर्मितवाद अनेकप्रकारवाद सृष्टिमोदलाद संसारगळन्नू निनगे हेळिदेनु. ॥ ३८ ॥ इदुवरेगू उपदेशमाडिद तत्वज्ञानक्के यारु अनधिकारि-( अधिकारिगळल्ल ) गळेंदरे हेळुवनु– हे तायिये ई नानु उपदेश माडिद ई तत्ववन्नु ' खलाय ' एल्ल इंद्रियगळिगू एनेनु बेकागुववो अवुगळन्नेल्ल अनुभोगमाडुत्त आ इंद्रियगळन्नु हरिबिट्टिद्द दुर्जननिगे मत्तू विनयगुणइल्लदे शाठ्यउळ्ळवनिगे मत्तू ' न स्तब्धाय ' गुरुगळ अप्पणेयन्नु नडिसदवनिगे, मत्तू ' भिन्नाय ' वैष्णवसिद्धांतदहोरतु इतरसिद्धांतदल्लि आसक्तियुळ्ळवनिगे मत्तू दांभिकनिगे ॥ ३९ ॥ मत्तू विषयाभिलाषउळ्ळवनिगे मत्तू नीचत्वमोदलाद दोषइल्लदवनादाग्यू नन्न भक्तनागदे इद्दवनिगे एंदेंदिगू इदन्नु उपदेशमाडबेड. मत्तू नन्न भक्तरद्वेषिगळिगादरू हेळबेड एंदिगू हेळबेड एन्नुवदरिंद प्रसंगानुसारवागियादरू इंथवरिगे हेळबेड एंदु अभिप्रायवु. ॥ ४० ॥

तर्ह्यनधिकारित्वेनैतदुत्सादनं स्यादिति तत्राह श्रद्धानायेति अनसूयुर्गुणेषु दोषाविष्करणबुद्धिरहितः ॥४१॥ बहिः स्वर्गादौ प्रेयसां प्रियतमानां पुत्रादीनां सकाशात् तदेतत्प्रेय इति श्रुतेः॥४२॥अधिकारिणः फलज्ञानात् क्षिप्रप्रवृत्तिः स्यादित्यतस्तत्फलमाह य इदमिति अंब हिताहितवेदनइतिधातोस्तस्य टापि कृतेबेति तत्संबुद्धिरंब मातः अभिधत्ते वक्ति हिहेतावधारण इत्यभिधानादुभयमपि ग्राह्यं एत्येव मम पदवीमेति हि यस्मात्तस्मात् श्रवणादिकं कर्तव्यमिति ॥ ४३ ॥ इति श्रीभा० तृतीय० विजयध्वजकृतटी० त्रयस्त्रिंशोध्यायः ॥ ३३ ॥ ॥ ॥ ॥ ॥ ॥

**श्रद्धानाय भक्ताय विनीतायानसूयवे ॥ भूतेषु कृतमैत्राय शुश्रूषाभिरताय च ॥ ४१॥ बहिर्जातविरागाय शांतचित्ताय दीयते॥ निर्मत्सराय शुचये यस्याहं प्रेयसां प्रियः ॥ ४२ ॥ य इदं शृणुयादंब श्रद्धया पुरुषः सुकृत् ॥ योवाभिधत्ते मच्चित्तः सह्येति पदवीं च मे ॥ ४३ ॥ इति श्रीमद्भागवते तृतीयस्कंधे त्रयस्त्रिंशोध्यायः ॥ ३३ ॥ ॥ ॥ ॥**

ई प्रकार इंथिथवरिगे हेळबेडेंदु हेळुवदरिंद ई ज्ञानक्के योग्य अधिकारिगळे इल्लदरिंद ई तत्वोपदेशवु लोकदल्लि मुंदे प्रचुरवागदे मुळिगि होगुवदल्लवेंदरे इंथ अधिकारिगे उपदेशमाडेंदु ( तायिगे ) अधिकारिगळन्नु हेळुवनु— नन्नल्लि ( श्रीहरिगुरुगळल्लि ) विश्वासवुळ्ळवनिगे मत्तू माहात्म्यज्ञानलक्षण भक्तियुळ्ळवनिगे विनयगुणवुळ्ळवनिगे मत्तू गुणगळल्लियू दोषारोपमाडतक्क असूया एंब दोषइल्लदवनिगे एल्ल प्राणिगळल्लियू मित्रत्वउळ्ळवनिगे मत्तू भगवत्सेवादल्लि आसक्तनादवनिगे ॥ ४१ ॥ मत्तू ' बहिः स्वर्गमोदलाद ( कर्मप्राप्य ) लोकगळल्लि वैराग्य बुद्धियुळ्ळवनिगे शांतचित्तवुळ्ळवनिगे, मात्सर्य इल्लदवनिगे मत्तू अंतर्बहिः शुद्धनादवनिगे मत्तू यावनिगे नानु प्रीत्यास्पदवाद हेंडरु मक्कळु मोदलाद वस्तुगळकिंतलू नाने ( श्रीहरिये ) अत्यंत प्रीत्यास्पदनागि-रुवनो अवनिगे उपदेशमाडबेकु. ॥४२॥ ई हिंदे हेळिद अधिकारिगे ई तत्वज्ञानदिंद ( एनु फलवागुवदेंदु ) आ आगतक्क फलवु इंथादेंदु तिळिदरे आ तत्वज्ञानमाडिकोळ्ळुवदक्के बुद्धियुंटागुवदेंदु तिळिसुवदक्के आ तत्वज्ञानद फलवन्नु हेळुवनु— ' हे अंब ' हितवादद्दु यावदु अहितवादद्दु यावदु एंबुवदन्नु तिळकोळ्ळतक्क तायिये नानु, निनगे इदुवरेगे हेळिद ई तत्ववन्नु विश्वासदिंद यावनु केळुवनो यावनु हेळुवनो आ नन्नल्लि चित्तउळ्ळ सुकृतियाद पुरुषनु नन्न पदवियाद वैकुंठलोकक्के बरुवनादकारण तप्पदंते ई तत्ववन्नु अवश्यवागि श्रवणमननादिगळन्नु माडतक्कद्दु. एंदु अभिप्रायवु. ॥ ४३ ॥ हीगे श्रीमद्भागवत विजयध्वजव्याख्यानक्कू मूलक्कू सरियागि योजनमाडिद ' सुखार्थबोधिनी ' एंब प्राकृत व्याख्यानवु कूसनूर श्रीनिवासनिंद रचितवागि तृ. स्कं. ३३ ने अध्यायवु मुगिदितु—

कपिलावतारेणोपदिष्टं तत्त्वज्ञानं देवहूत्याः सिद्धमभूदिति तत्स्तुतिव्याजेन विज्ञायत इति तदेतत्प्रतिपाद्यतेऽस्मिन्नध्याये पूर्वं कर्दमस्य शुश्रूषया कर्शिता तत्प्रीतिकरत्वात्तस्य दयिता प्रेष्ठाभूत्सा देवहूतिरेवं तदुक्तं निशम्य तमभिप्रणम्य कपिलस्य विष्णुत्वं सूचयती तं तुष्टावेत्यन्वयः कीदृशी विस्रस्तमुन्मीलितं मोहपटलमज्ञानाख्यं तिमिरं यस्याः सा तथा कीदृशं तत्त्वं विष्णुस्तद्विषयाश्च ते अखिला अनल्पाश्च सिद्धाः ब्रह्मादयस्तेषां भूमिमाश्रयं यद्वा तत्त्वस्थितमज्ञानलक्षणं विषं यापयतीति तत्त्वविषया भगवत्तत्त्वाज्ञानरहितेत्यर्थः ॥ १ ॥ ॥ ॥ ॥ ॥ ॥

**॥ मैत्रेयउवाच ॥ एवं निशम्य कपिलस्य वचो जनित्री सा कर्दमस्य दयिता किल देवहूतिः ॥ विस्रस्तमोहपटला तमभिप्रणम्य तुष्टाव तत्त्वविषयांखिलसिद्धभूमिं ॥ १ ॥ ॥ ॥ ॥ ॥ ॥**

कपिलावतारदिंद उपदेश माडल्पट्ट तत्वज्ञानवु देवहूतिगे सिद्धवायितेंबदु आ देवहूतियु श्रीकपिलरूपि परमात्मनन्नु स्तोत्रमाडिद निमित्तदिंद तिळियल्पडुवदु एंदु आ स्तोत्र संगतियु ई अध्यायदल्लि हेळल्पडुवदु– ( मैत्रेयरु विदुरनन्नु कुरितु हेळुवरु ) हे विदुरने पूर्वदल्लि कर्दमऋषिय सेवियन्नुमाडि शरीरवन्नु सोरिगिसि आ कर्दमरिगे केवल प्रीत्यास्पदळागिद्दु कपिलन, तायियंदु जगत्प्रसिद्धळाद देवहूति देवियु, ई हिंदेहेळिद कपिलोक्त तत्वोपदेशवन्नु केळि ' विस्रस्तमोहपटला ' आ कपिलोपदेशदिंद, तत्वज्ञानवागुवदक्के प्रतिबंधकवाद नडुवे परदेंते इद्द अज्ञानवेंब अंधकारवन्नु कळकोंडवळागि ' तत्वविषयाखिलसिद्धभूमिं ' तत्व एंदरे श्रीविष्णुवु आ विष्णुविषयकवाद सकल सिद्धियन्नु होंदिद ब्रह्मने मोदलाद सिद्धरिगे मूलाधारनाद तन्न पुत्रनंदु अवन

रिसिद कपिलरूपियाद परमात्मनन्नु भक्तिपूर्वक नमस्कारमाडि स्तोत्रमाडिदळु हीगे हेळुवदरिंद कपिलनु श्रीविष्णुवेंदु सूचितवागुवदु. ' तत्वविषयाखिलसिद्धभूमिं ' एंबुवल्लि ' तत्वविषय ' एंदु भिन्नपदवन्नु माडि देवहूतिगे, विशेषणवन्नु माडिरुवरु अदर अर्थवु तत्वस्वरूपियाद परमात्मनविषयदल्लिद्द अज्ञानवेंब विषवन्नु कळकोंडवळु एंदर्थवु.॥ १ ॥

तत्वाज्ञानं नास्तीति ध्वनितं स्पष्टयति अथेति अथ मंगलमस्तु भगवंस्ते तव जठराब्जजातः उदरनाभिपद्मसंभूतो ब्रह्मा स्वयं यद्वपुर्दध्यौ किंक्रियाविशिष्टमत्राह अप्ययांत इति अप्ययांते सलिले प्रलयजलमध्ये शयानं प्रलयावसाने दध्याविति वा किंगुणविशिष्टमत्राह भूतेति आकाशादीनि भूतानि श्रोत्रादीनींद्रियाणि अर्थाः शब्दादयः आत्मा मनः एतेभ्यो मयं प्रधानं मयं प्रधानमुद्दिष्टमिति वचनात् अत्र प्रधानकार्यभूतादिभ्यः प्राधान्यकथनेन प्रधानादप्युत्तममिति ज्ञातव्यं त्वं प्रधानमयो देव प्रधानादधिको यत इति वचनात् अत्र प्रधानादिशब्देन तदभिमानिनो लक्ष्म्यादयो ग्राह्याः ततस्तदुत्तमस्तगुणविशिष्टमित्यर्थः स्वतंत्रमपीति भावेनाह गुणप्रवाहमिति सृष्ट्यादौ सत्वादिगुणान् प्रवाहयति प्रवर्तयतीति ज्ञानादिगुणा अस्य संतीति अतोवाह गुणप्रवाहमिति ज्ञानादिगुणानां प्रवाहो यस्मिंस्तत्तथा नन्विदं सगुणं किं न स्यादित्यत उक्तं सदिति सत्सत्यं सत्सत्येभ्यर्हिते श्रेष्ठे साधीयसि भवत्यपीति यादवः सदेव सौम्येदमग्र आसीदिति श्रुतेर्न शबलं किंतु निर्गुणं इदं निर्गुणं चेज्जगत्स्रष्टृ अन्यत्स्यादित्यत उक्तं अशेषबीजमिति जगद्व्यंजकं निर्गुणमेव स्रष्टृ इत्यर्थः ॥२॥ ॥ ॥ ॥

**देवहूतिरुवाच ॥ अथाप्ययांते सलिले शयानं भूतेंद्रियार्थात्ममयं वपुस्ते॥गुणप्रवाहं सदशेषबीजं दध्यौ स्वयं यज्जठराब्जजातः॥२॥**

देवहूतिगे भगवत्तत्वविषयके अज्ञानविल्लेंदु हिंदे हेळिदन्नु प्रकटिसुवरु- ( देवहूतियु अन्नुवळु ) हे भगवंतने निनगे मंगळविरलि, ( इल्लि अथ एंबुदु मंगलवाचकवु ) निन्न उदरदल्लि हुट्टिद कमलदल्लि जनिसिद चतुर्मुखनु याव निन्न शरीरवन्नु ध्यानमाडिदनो आ ध्यानास्पदवु याव केलस माडतक्कद्दागिर्देदरे प्रळयकालद उदकदल्लि शयनमाडिद्दन्नु अथवा प्रळयवु मुगिदमेले उदकदल्लि शयन माडिद रूपवन्नु एंत अर्थवु. आ स्वरूपवु याव गुणयुक्तवादद्देंदरे ' भूतेंद्रियार्थात्ममयं ' आकाशमोदलाद पंचभूतगळु श्रोत्रमोदलाद इंद्रियगळु शब्दमोदलाद अर्थगळु मनःसू इवुगाळिगे श्रेष्ठवाददन्नु इल्लि मय शब्दवु श्रेष्ठवेंदु अर्थहेळुवदु. मत्तू ' हेपरमात्मने नीनु प्रधानशब्दवाच्यळाद लक्ष्मीदेविय कित्तलू अधिकनाद्दरिंद प्रधानमयनेनिसुवि ' एंब प्रमाणदिंद इल्लि प्रधानदिंद उत्पन्नवाद पंचभूतगळिंद उत्तमनेंदु हेळुवदरिंद आ प्रधानकित्तलू उत्तमनेंदु तिळियतक्कदु. मत्तू इल्लि प्रधानमोदलाद शब्दगळिंद अवुगळ अभिमानिगळाद लक्ष्मीमोदलादवरन्ने तिळियतक्कदु वट्टिगे इवेल्लवुगळिंदलू श्रेष्ठनेंदर्थवु. मत्तू परमात्मनु स्वतंत्रनु एंब अभिप्रायदिंद हेळुवळु- ' गुणप्रवाहं ' सृष्टिमोदलादवुगळल्लि सत्वरजस्तमोगुणगळन्नु अर्पणेमाडतक्कवनेंदु अथवा- ज्ञानानंदादिगुणगळु इवनिगे तुंबिरुवदेंब अभिप्रायदिंदादरू हेळुवळु- ' गुणप्रवाहं ' ज्ञानानंदादि सद्गुणगळु यावनल्लि प्रवाहदंते संततवागि इरुववु ओळ्ळेदु आ चतुर्मुखन ध्यानविषयवाद परब्रह्मवु अद्वैतरु हेळुवंते सगुणवाद शबलब्रह्मवेंदु याके आगबारदु ? एंदरे हेळुवळु- ' सत् ' सत् एंब शब्दवु सत्यदल्लियू मान्यवागि श्रेष्ठवाददरल्लियू समीचीनवाददरल्लियू प्रयोगिसुवरेंदु



यादव कोशविद्दरिंदलू, मत्तू श्रुतियिंदलू सत् अंदरे सर्वश्रेष्ठवाद परब्रह्मवे होरतु परकीयरु हेळतक्क शबलब्रह्मवल्लवु. निर्गुणब्रह्मवे इदु निर्गुणवादरे जगत्तिन सृष्टिमोदलादद्दक्के ( परु हेळुवंते ) मत्तोंदु ब्रह्मवु इद्दीतु एंदरे ' अशेषबीजं ' ई निर्गुण ( सत्वादिगुणहीन ) ब्रह्मवे जगत्सृष्ट्यादिगळिगे कारणवु इंथ याव परब्रह्मनादनिन्नन्नु चतुर्मुखनु स्तोत्रमाडिदनो.॥ २ ॥

जगद्व्यंजकत्वं स्पष्टयंती भवानपि स एवेत्याह स एवेति स एव तादृक् वपुष्मानेवाणुमात्रभेदरहितो भवान् विश्वस्य सर्गादि विधत्त इत्यन्वयः युगपच्चेत्याह गुणप्रवाहेष्विति गुणप्रवाहेषु गुणैः सृष्ट्यादिपरंपरासु ब्रह्मादिरूपेण विभक्तं राजससात्विकतामसप्रवर्तकत्वभेदेन पृथक्कृतं वीर्यं माहात्म्यं यस्य स तथा कार्येषु प्रवर्तमानो देवदत्तवत्क्लिष्टकारी किं नेत्याह अनीह इति अत्र हेतुगर्भविशेषणमाह अवितथाभिसंधिरिति सत्यसंकल्पादित्यर्थः एवंविधोन्यो नास्तीति भावेनाह आत्मेश्वर इति अविशेषेणात्मना जीवानां ईश्वरत्वादन्यो नास्तीत्यर्थः एकस्यापि चित्रशक्तिस्वभावादीश्वरत्वं कथमुपपद्यत इति तत्राह अतर्क्येति विचित्रशक्तिः पुरुषः पुराण इति श्रुतेः ॥ ३ ॥ अतर्क्यशक्तिसहस्रत्वमनुमापयति सत्वमिति नाथ यस्य तव जठरे एतद्विश्वमासीद्युगांते माययेच्छया शिशुरंघ्रेरंगुष्ठस्य पानं यस्य सोंघ्रिपानो भूत्वा एक एव सन् वटपत्रे शेते सत्वं मे जठरेण कथंनु भृतः स्म अहो तवातर्क्यसहस्रशक्तित्वमनुमिनोमि यतोहं सर्षपमात्रभारमपि वोढुमशक्ता त्रैलोक्यधरं त्वामवहमिति ॥ ४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

**स एव विश्वस्य भवान्विधत्ते गुणप्रवाहेषु विभक्तवीर्यः ॥ सर्गाद्यनीहो वितथाभिसंधिरात्मेश्वरोऽतर्क्यसहस्रशक्तिः ॥३॥ स त्वं भृतो मे जठरेण नाथ कथं नु यस्योदर एतदासीत् ॥ विश्वं युगांते वटपत्र एकः शेतेस्म मायाशिशुरंघ्रिपानः ॥४॥ ॥**

श्रीहरियु जगत्तिन सृष्ट्यादिकर्तृवेंबदन्नु प्रकटमाडुत्त, अवने नीनेंदु कपिलनिगे देवहूतियु हेळुवळु— हिंदे हेळिद ज्ञानानंदादि देहवुळ्ळवने स्वल्पादरू भेदविल्लदे इद्दनीनु जगत्तिन सृष्ट्यादिगळन्नु माडुवि. आ सृष्ट्यादिगळन्न ओम्मेले माडुवियंदल्लवु ' गुणप्रवाहेषु विभक्तवीर्यः ' सृष्टिस्थितिलयगळल्लि ब्रह्मनल्लि ब्रह्मरूपदिंदलू स्वतः विष्णुस्वरूपदिंदलू शिवांतर्गतशिवरूपदिंदलू रजःसत्वतमोगुणगळिगे प्रवर्तकनागि प्रत्येक आया माहात्म्यवुळ्ळवनागिरुवि आकार्यगळल्लि, प्रवर्तनादरू आ संबंधक्लेशविल्लवु यार्केदरे ' वितथाभिसंधिः ' आ संबंधफलेच्छाइल्लदवनु सत्यसंकल्पनु इंथवनु निन्नहोरतु मत्तोब्बनिल्लवु. सकलजीवरिगे नियामकनाद्दरिंद निन्नंथवनु यारू इल्लवु नीनु ओब्बनेआदरू विचित्रशक्तिस्वभावइद्दरिंद ईश्वरत्ववु ह्यागे संभविसुवदेंदरे ' पुराणपुरुषनाद नारायणनु विचित्रशक्तियुळ्ळवनु ' एंब श्रुतिइद्दरिंद नीनु नम्मगळ तर्कक्के निलकद सहस्रारुशक्तियुळ्ळवनु ॥ ३ ॥ तर्कमाडलिक्के अशक्यवाद सहस्रारुशक्तियुळ्ळवनेंब नीनेंबमातन्नु आडितोरिसुवळु— ' हेनाथ ' याव निन्न उदरदल्लि प्रळयकालदल्लि ईजगत्तु इत्तो मत्तू आग्ये नीनु निन्निच्छेयिंद निन्नपादद अंगुष्ठवन्नु नेक्कतक्क शिशुरूपनागि ओब्बने इदु वटपत्रदल्लि शयनमाडिद्दियो आ नीनु नन्न संणहोट्टियल्लि ह्यागे हिडिसिदि ? ' स्म ' इदुबहळे आश्चर्यवु. इदरिंदले निन्नल्लि तर्कमाडलिक्के अशक्यवाद सहस्रारुशक्तिगळुंटेंदु ऊहिसुवेनु-- यार्केदरे ( देवहूतियु ) ओंदु साश्विपृष्ठ भारवन्नु सह वहिसलसमर्थळाद, नानु, मूरलोकवन्नु होट्टयल्लिट्टुगोंडिद्द निन्नन्नु होट्टयल्लि इट्टेनल्ल! इदु एनु सोजिगवु इदु निन्न महिमेये ॥ ४ ॥

इदानीं कपिलस्य भगवतोऽतर्क्यसहस्रशक्तिना हरिणैकत्वं प्रकाश्य तदवतारप्रयोजनं विज्ञापयति त्वं देहतंत्र इति विभो व्याप्तदेहेन तंत्रं सूचिः प्रकाशो यस्य स तथा स त्वं सच्चिदानंदाद्यात्मकदेहेनैव प्रकाशितवानवतारवानसि ननु जीववत्प्राकृतभौतिकदेहवत्त्वेन देव यथा तव सूकरादयोवताराः हिरण्याक्षादिपाप्मनां प्रशमाय यथा निदेशभाजामाज्ञाकारिणां ब्रह्मादिदेवानां विभूतये कृताः स्युस्तथायमप्यवतारः कल्पादिना प्रलुप्तस्य सत्पथस्य ज्ञानमार्गस्योपलब्धये प्रकाशनाय त्वया कृत इति शेषः ॥ ५ ॥ श्वीत्वेपि वयं त्वद्दर्शनादिना कृतार्था इत्यत्र कैमुत्यन्यायमाह यन्नामधेयेति श्वादः श्वभक्षकः सवनाय सोमलतावहननाय यज्ञकरणायेत्यर्थः कल्पते समर्थो भवति ॥ ६ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

**त्वं देहतंत्रः प्रशमाय पाप्मनां निदेशभाजां च विभो विभूतये ॥ यथावतारास्तव सूकरादयस्तथायमप्यात्मपथोपलब्धये ॥५॥ यन्नामधेयश्रवणानुकीर्तनाद्यत्प्रव्हणाद्यत्स्मरणादपि क्वचित्॥श्वादोपि सद्यः सवनाय कल्पते कुतः पुनस्ते भगवन्नु दर्शनात् ॥६॥**

इन्तु कपिलरूपियाद परमात्मनू अतर्क्यमहस्रशक्तियुळ्ळ मूलश्रीहरियू ओब्बने ( भेदविल्ल ) एंदु प्रकटमाडि ई कपिलावतारवु यातक्के माडल्पट्टदेंबदन्नु विज्ञापनमाडिकोळ्ळुवळु— ' हेविभो ' सर्वत्रदल्लि व्याप्तनाद परमात्मने ' देहतंत्रः ' सच्चिदानंदादिस्वरूपवुळ्ळदेहदिंदले, नीनु इल्लि अवतारमाडिरुविये होरतु जीवरंते प्राकृतदेहवुळ्ळवनागि इद्दिल्ल, हे देवने हिंदक्के निन्न वराहमोदलाद अवतारगळु हिरण्याक्षमोदलाद पापिगळ नयक्कागियू निन्नाज्ञेयन्नु पालिसतक्क ब्रह्मादिगळ क्षेमक्कागियू हागे माडल्पट्टवेयो अदरंते ई अवतारवादरू अनेककल्पमोदलाद कालगतियिंद मुच्चिहोद ज्ञानमार्गद प्रकाशक्कागि; माडल्पट्टिरुवदु एंदर्थवु ॥ ५ ॥ ( देवहूतियु ) नावु स्त्रीयरादाग्यू निन्न दर्शन स्पर्शमोदलादवुगळिंद कृतार्थरादेवेंबुवदक्के संदेहविल्लेंदु कैमुत्यन्यायवन्नु हेळुवळु— हे श्रीहरिये याव निन्न राम कृष्णमोदलाद नामगळन्नु किवियिंद केळुवदरिंदलू बायिंद होगळुवदरिंदलू, याव निनगे तले बग्गिसुवदरिंदलू दिनक्के ओम्मेयादरू निन्न स्मरिसुवदरिंदलू अवनु नायियन्नु तिन्नतक्क श्वपचनादाग्यू तत्कालक्के पवित्रनागि ' सवनाय ' यज्ञदल्लि सोमलतावन्नु होडुकोंडु तंदुकोडुवदक्के पवित्रनागि, यज्ञक्के कारणनागुवनु अंदमेले नाव पवित्ररादेवेंदेनु हेळबेकु. ॥ ६ ॥

श्रीविष्णुभक्त्यभावे सोमयाजित्वमप्यप्रयोजकमितिभावेनाह अहोबतेति अनंतरातीतग्रंथे सोमयाजी सामान्यतः प्रस्तुतस्तत्रद्वित्वं संभाव्यते वैष्णवश्चावैष्णवश्चेति अतोनयोरवैष्णवसोमयाजिनः श्वपचो गरीयानहो विष्णुभक्तेः सारस्यं सास्यास्तीत्याह यजिव्हेति यस्य श्वपचस्य जिव्हाग्रे तुभ्यं तव नाम वर्तते लटा क्रियासमभिव्याहारं सूचयति तुभ्यमिति चतुर्थ्या नारायणाय नम इत्यादिनाम चतुर्थ्यंतेन प्रयोक्तव्यं इति ध्वनयति नन्विदं भक्तिमत एव संभाव्यते भक्तिस्तु बहुजन्मसंसर्गपुण्यवत एव बहूनां जन्मनामंते कृष्णे भक्तिः प्रजायत इति वचनात् अतः कथं तामसयोनेः श्वपचस्येति तत्राह तेपुस्तप इति इदानींतननामसंकीर्तनेनानुमितपुरातनतपआदिनांतःकरणशुद्धिरस्तीतिज्ञायते ॥ ७ ॥ ॥ ॥ ॥ ॥ ॥ ॥

**अहो बत श्वपचोतो गरीयान् यज्जिव्हाग्रे वर्तते नाम तुभ्यं ॥ तेपुस्तपस्ते जुहुवुः सुरायान् ब्रह्मानूचुर्नाम गृणंति ये ते ॥ ७ ॥**

श्रीविष्णुभक्तियिल्लदे सोमयागमाडिदाग्यू अदुफलदायकवल्लवेंदु हेळुवळु— इदरहिंदिन श्लोकदल्लि ' श्वादोपिसद्यःसवनायकल्पते ' एंबल्लि सोमयाजियसंगतियु सामान्यवागि हेळल्पट्टितु. आ सोमयाजिगळल्लि एरडु प्रकारवु इरुवरु. वैष्णवसोमयाजियंतलू अवैष्णवसोमयाजियंतलू ई यरडरल्लि अवैष्णवसोमयाजियकिंतलू विष्णुनामस्मरणे माडतक्क श्वपचने श्रेष्ठनु; अहा विष्णुभक्तिय महात्म्यवु एष्टु उंटु ! याव श्वपचन नालिगेय तुदियल्लि निन्न ( नारायणन ) नामविरुवदो ' वर्तते ' एंबलट् वर्तमानप्रयोगदिंद सर्वदा नालिगेमेले नामविरुवदो एंदु अर्थ हेळुवदु ' तुभ्यं ' एंब चतुर्थीप्रयोगदिंद ' नारायणायनमः ' एंदु चतुर्थी प्रयोगवन्ने माडबेकु एंदु प्रकटिसुवदु. ओळ्ळेदु इंथ सर्वदा नारायणन नामोच्चारादिगळु भक्तियुळ्ळवरिगे संभविसुववु. आ भक्तियु बहुजन्मद पुण्यसंबंधवुळ्ळवरिगे साध्यवागुवदु. यार्केंदरे ' बहुजन्मगळल्लि साधन माडिदवरिगे कोनेगे कृष्णनल्लि भक्तियु हुट्टुवदु ' एंदु प्रमाण उंटु. अंदमेले तमोगुणवु बहळागिउळ्ळ नीचजन्मदल्लि हुट्टिद श्वपचनिगे भगवद्भक्तियु हागे हुट्टुवदु ? एंदरे हेळुवळु– यावजनरु निन्न ( श्रीहरिय ) नामगळन्नु बायिंद उच्चार माडुवरो अवरे तपःसुमाडिदवरु अवरे यज्ञादिगळल्लि देवतिगळे मोदलादवरिगे आहुतिगळन्नु कोट्टवरु. अवरे पाठप्रवचनादिगळिंद ब्रह्मोपदेशमाडिदवरु एंदु तिळियतक्कदु. यार्केंदरे ई श्वपच जन्मदल्लिद्दाग्यू नारायण नामस्मरण माडुवनाद्दरिंद हिंदिनजन्मदल्लि तपःसु मोदलादवुगळन्नु माडि अंतःकरण शुद्धियन्नु होंदिरलेबेकु एंदु तिळियुवदु. ॥ ७ ॥

अवतारमूलरूपयोर्न कश्चिद्विशेषोस्तीति यदुक्तं तन्मया सम्यगवबुद्धमिति विज्ञापयंती स्तुतिमुपसंहरति तं त्वेति अहं ज्ञानमेकमित्यादिना प्रतिपादितोयस्तं त्वा वंद इत्यन्वयः न केवलं वाचा किंतु कायेनापीतिभावेनोक्तमद्धेति अनेन मातृत्वाभिमानेन पूज्यत्वाभिमानमपहस्तयति प्राकृताप्राकृतयोरैक्यं कथं स्यादित्यत उक्तं ब्रह्मेति ब्रह्मशब्दस्यानेकार्थप्रवृत्तेः कथं निर्णय इत्युक्तं परं पुमांसमिति अतोस्मि लोके वेदेच प्रथितः पुरुषोत्तम इति गीतोक्तत्वादित्यर्थः तत्र ज्ञानिप्रत्यक्षं प्रमाणमितिभावेनाह प्रत्यक्स्रोतस्यात्मनीति विषयसंचरणं मुक्त्वा प्रत्यगात्मनि हरौ नदीप्रवाहवत्स्यंदमाने आत्मनि मनसि संभाव्यं प्रत्यक्षीकरणयोग्यं चक्षुरादींद्रियैःसहप्रत्यगंचति आत्मनि हृदये इति वा कथमपरोक्षीकुर्वंतीति तत्राह स्वतेजसा स्वरूपभूतसच्चिदानंदलक्षणप्रभावेन ध्वस्तगुणप्रवाहं नित्यनिरस्तसंसारं कथं निरूप्य वंदनमिति तत्राह विष्णुं कपिलमिति सकलजगद्व्यापी नारायणः कपिलनाम्नाऽवतीर्ण इति बलानंदस्वरूपत्वाद्विष्णुः कं सुखं पिबतीत्यानंदानुभवात् लात्सर्वादानाच्च कपिल इत्येकार्थत्वाच्च ला आदाने इति धातुः अत्र प्रमाणं ध्वनयति वेदगर्भमिति षकारो बलमेष ह्यानंदमादत्त इत्यादिवेदेन गर्भो ग्रहणं ज्ञानं यस्य स तथा तं गृभ्णामि ते सौभगत्वाय हस्तमिति श्रुतेः यद्वा वेदतात्पर्यमित्यर्थः वेदो गर्भे यस्य स तथा तं इति वा स्वगुणप्रतिपादकत्वेनातिप्रियत्वादिति वा वेदं विस्तीर्य बिभर्तीति वा अनेन वेदस्य नित्यत्वं नित्यत्वस्य ग्राहकेष्विदमेव मुख्यं प्रमाणमिति ध्वनयति अत्र हरेरन्यान्यपि यानि यानि नामानि तैस्तैर्विशिष्टं त्वां वंद इति द्योतनाय ब्रह्मादिबहुनामग्रहणमित्यवगंतव्यं ॥ ८ ॥ ॥ ॥ ॥ ॥ ॥

**तं त्वाऽहं ब्रह्म परं पुमांसं प्रत्यक्स्रोतस्यात्मनि संविभाव्यं ॥ स्वतेजसा ध्वस्तगुणप्रवाहं वंदे विष्णुं कपिलं वेदगर्भं ॥ ८ ॥**

श्रीहरिय अवताररूपक्कू मूलरूपक्कू एनू भेदविल्लेंदु नीनु कपिलनु ; एनु हेळिदियल्ल अदु ननगे सरियागि तिळिदिरुवदु एंदु विज्ञापन माडुत ई स्तोत्रवन्नु मुगिसुवळु- ' ज्ञानमेकं पराचीनैः ' एंब ई श्लोकदल्लाद, हिंदिन श्लोकगळल्लि याव नीनु हागलिसिगोळ्ळल्पट्टिरुवियो आ निन्नन्नु ( कपिलनन्नु ) नमस्कार माडुवेनु. ई नमस्कारवु केवल बायिंदिद मात्र नमः एंदु अनुवेनेंदल्लवु शरीरदिंदादरू साष्टांग प्रणाम माडुवेनेंदु तिळिसुवदक्के ' अद्धा ' चन्नागि एंदु अंदळु— हींगे नमस्कार माडुवदरिंद तानु तायियु मगनु तन्नन्नु पूजिसबेकेंब अभिमानवु इवळल्लि इद्देंदु हेळिदंतायितु, मत्तु श्रीहरिय विषयदल्लि तानु तायियेंबदु दुरभिमानवेंदु अपहास्यमाडिदंतायितु— तन्नुदरदल्लि जनिसिद प्राकृतकपिलनिगू अप्राकृतनाद परब्रह्मनिगू ऐक्यवु ह्यागे संभविसुवदु ? एंदरे तन्नुदरदिंद प्रकटनादवनु प्राकृतनल्लवु अप्राकृतनाद परब्रह्मने एंदु तिळिसुवदक्के ' ब्रह्म ' एंदु अंदिरुवळु हागादरे ' ब्रह्म ' एंब शब्दक्के अनेकार्थगळिद्दरिंद एनु निर्णयिसबेकु एंदरे ' परंपुमांसं ' लोकदल्लियू वेददल्लियू पुरुषोत्तमनेंदु प्रख्यातनागिरुवेनु एंब गीतावचनदिंद अप्राकृतनाद परब्रह्मने इवनेंबु अर्थवु. ई तन्नल्लि अवतारमाडिद कपिलनु अप्राकृतनेंबुवदक्के ज्ञानिगळ प्रत्यक्षवे प्रमाणवेंदु हेळुवळु— ' प्रत्यक्स्रोतस्यात्मनि ' विषयसंचारवन्नु बिट्टु, अंतर्नियामकनाद श्रीहरियल्लि नदीप्रवाहदंते अव्युच्छिन्नवागि धाविसतक्क मनसिनल्लि प्रत्यक्षी करिसिगोळ्ळुवदक्के योग्यनाद निन्नन्नु ( कपिलनन्नु ) चक्षुरादिइंद्रियगळिंद सहवागि प्रत्यक्षवागि नोडुवेनु मत्तु हृदयदल्लि सहवागि काणुवेनु. निन्नन्नु एंथवनेंदु प्रत्यक्षवागि नोडुवेनेंदरे स्वस्वरूपभूतवाद सच्चिदानंदप्रभावदिंद संसारसंबंधवु एंदिगू इल्लवनेंदु तिळिदिरुवेनु. मत्तु श्रीविष्णुवे कपिलनेंदु तिळिदु नमस्करिसुवेनु. सकल जगत्तिनल्लि व्याप्तनाद श्रीविष्णुवे कपिलनेंब हेसरिनिंद अवतारमाडिरुवनु. एंदु बल आनंद इवुगळ स्वरूपनादकारण विष्णुवु ( कपिल शब्दार्थवु ) कं-अंदरे सुखवन्नु- पिबति- अनुभविसुववनागि- लाति- तन्न भक्तरिगे आ स्वरूपसुखवन्नु कोडुत्तिरुवनादरिंद कपिलनेंदेनिसिरुवि. ई अर्थक्के वेदवे प्रमाणवेंदु हेळुवळु. ' वेदगर्भं ' विष्णुं एंबल्लिय-ष-कारवु ई विष्णुवु बल आनंदस्वरूपनागिरुवनु एंदु वेदवु हेळुवदु ' नमगे सौभाग्यद सलुवागि निन्न हस्तवन्नु पिडियुवेनु ' एंब श्रुतियिंदलू श्रीविष्णुवु तानु सुखस्वरूपियु मत्तु भक्तरिगे सौख्य कोडतक्कवनु, एंदु वेददल्लि हेळिद्दरिंद अदे अर्थवे कपिलशब्दार्थवादरिंद वेदगर्भनेनिसिद निन्नन्नु साष्टांग नमस्कार माडुवेनु. मत्तु इन्नू श्रीहरिय याव याव नामगळवेयो आ एल्ल नामगळिंदलू निन्नन्नु होगळुवेनेंदु हेळुवदक्के इल्लि अनेक शब्दगळिंद प्रार्थिसिरुवळु एंदु तिळियतक्कद्दु. ॥ ८ ॥

नन्वनेन स्तोत्रेण कपिलस्य कश्चित्प्रसादविशेषो जातश्चेदुक्तं सर्वं सत्यं तत्त्वं स्यादिदं चाध्येतुः प्रयोजकं स्यादतोऽत्र तादृशं लिंगं किमित्याशंक्य भगवान् तादृक्लिंगगर्भितां वाचं वक्तीत्याह ईडित इति अविक्लवया अदीनया इदमेकं प्रसादलिंगमितीति शब्देन सूचितं ॥ ९ ॥ प्रसादविशेषं स्पष्टयति मार्गेणेति काष्ठामानंदोत्कर्षमवरोत्स्यसि नित्याभिव्यक्तं करिष्यसि अचिरादित्यनेन कपिलस्य मातरि प्रसादातिशयं सूचयति ॥ १० ॥ न मयैतद्ग्राथावदुक्तं किंतु मात्रोपदेशवदतोऽत्र त्वयाऽऽस्तिक्यबुद्धिः कर्तव्येत्याह श्रद्धस्वैतदिति मह्यं मम मामुद्दिश्येतिवा नैतत्तंत्रज्ञानमुक्तं किंतु वैदिकमेवेति भावेनाह जुष्टं यदिति तत्प्राप्तावहेतुश्चेदेदिकमप्यप्रयोजकमिति तत्राह येनेति अनेन त्वं साक्षात्परंब्रह्मेति देवहूत्या यदुक्तं तत्सत्यमिति द्योतितं विपक्षे बाधकमाह मृत्युमिति न तन्मतं विदंतीत्यतद्विदः मृत्युं संसारं तन्मतविरुद्धमैक्यमतं विदंतीति मृत्युं नित्यमरणरूपमंधंतमोगच्छंतीत्यर्थः ॥ ११ ॥ ॥ ॥ ॥ ॥

**मैत्रेयउवाच ॥ ईडितो भगवानेवं कपिलाख्यः परः पुमान् ॥ वाचाऽविक्लवयेत्याह मातरं मातृवत्सलः॥ ९ ॥ श्रीभगवानुवाच ॥ मार्गेणानेन मातस्ते सुसेव्येनोदितेन मे॥आस्थितेन परांकाष्ठामचिरादवरोत्स्यसि॥१०॥श्रद्धस्वैतन्मतं मह्यं जुष्टं यद्ब्रह्मवादिभिः॥ येन मामभयं यायान्मृत्युमृच्छंत्यतद्विदः ॥११॥ ॥ ॥ ॥ ॥**

ओळ्ळेदु इदुवरेगे माडिद ई स्तोत्रदिंद देवहूतिगे एनादरू आ कपिलन प्रसादवुंटायितो, प्रसादवुंटागिद्दरे हिंदे हेळिद मातेल्ल सत्यवागि इदन्नु अध्ययन माडतक्कवनिगे उपयोगवादीतु आदकारण आ प्रसादद चिन्हवेनादरू उंटायितेनु ? एंदरे देवहूतियमेले प्रसादवुंटायितेंदु तोरतक्क मातन्ने हेळुवनेंदु मैत्रेयरु विदुरनिगे हेळुवरु- मैत्रेयरु अंदद्दु. हेविदुरने— अव्याहतषड्गुणैश्वर्यसंपन्ननाद श्रेष्ठपुरुषनेनिसिगोंड कपिलरूपियाद श्रीहरियु ईप्रकारवागि तायियिंद स्तोत्रमाडिसिगोंडु तायियमेले अंतःकरणउळ्ळवनागि दैन्यविल्लदंते श्लक्ष्णवाद वाणियिंद ई मुंदे हेळतक्क प्रकारवागि तायियन्नु कुरितु माताडिदनु. ' अविक्लवया ' एंबशब्ददिंद ई मुंदाडुवमातिनमेलिंदले प्रसादचिन्हवु तोरुवदु एंदु सूचितवायितु—॥ ९ ॥ कपिलरूपिपरमात्मनप्रसादवु देवहूतियमेले यावप्रकारदायितेंबदन्नु स्पष्टमाडुवरु— ( कपिलनु अंदद्दु ) ' हेमातः ' तायियाद देवहूतिये सुखदिंद सेविसुवदक्के योग्यवाद नन्निंद हेळल्पट्ट ईमार्गदिंद नीनु नडेयुवदरिंद, बहुतीव्रवागि ' परांकाष्ठां ' निजस्वरूपानंदद उत्कर्षवन्नु ( प्राकट्यवन्नु ) शाश्वत आनंदाभिव्यक्तियन्नु ( मोक्षवन्नु ) होंदुवि बहुतीव्रदिंद एंदु हेळुवदरिंद तायियमेले अतिशयप्रसादवु माडल्पट्टितेंदु सूचितवागुवदु. ॥१०॥ नन्निंद ( कपिलनिंद ) हेळल्पट्ट ई हिंदिनमातुगळेल्ल एनो ओंदु हाळुकथेयंते हेळल्पट्टवेंतलनु. तायियु मक्कळिगे कल्याणक्कागि ह्यागे हितोपदेशमाडुवळो. आप्रकारवे निन्न मोक्षक्कागियेहेळल्पट्टवे. आदकारणा ई मातुगळल्लि नीनु विश्वासवन्निडतक्कद्देंदु हेळुवनु. शिष्यपरंपरा वेदार्थवन्नु उपदेशमाडतक्क मुनिगळिंद स्वीकारमाडल्पट्टिद्द नानु उपदेशमाडिद ई मतवन्नु विश्वासपूर्वकवागि स्वीकरिसु. इदरंते नीनु उपासना माडिदरे अभयदायकनाद नन्नन्नु अंदरे मोक्षवन्नु कुरितु बरुवि इदरंते उपासनामाडदिद्दरे बाधकवे आगुवदु एंदु हेळुवनु. ' मृत्युमृत्स्यंत्यतद्विदः ' ई नानु हेळिदमतवन्नु यारु तिळकोळ्ळुवदिल्लवो अथवा इदक्के विरुद्धवाद जीवब्रह्मैक्यवन्नु यारु तिळकोळ्ळुवरो अवरु नित्यसंसारवन्नु अथवा मृत्युविनंते नित्यदुःखात्मकवाद अंधंतमःसन्नु होंदुवरु एंदु अर्थवु. ॥ ११ ॥

देवानां नृषु चिरवासो न धर्म इति विदुषा स्वयमपि तज्जातित्वात्पुनर्हरिणा किमकारीति तत्राह इतीति इतिशब्देन गतेज्ज्ञानस्य समग्रानुग्रहहेतुत्वलक्षणत्वं वक्ति उपदेशेन प्रदर्श्य मातुर्विश्वासार्थं क्वचित्प्रसंगात् स्वात्मनोगतिं स्वरूपस्थितिं वा प्रदर्श्येत्यनेन द्योतयति उशतीमभीष्टवर्षिणीं स्वेच्छाज्ञानोपदेष्टृत्वेन गुरुत्वा-

दात्मपुत्रत्वेन सुहृत्त्वात्सा देवहूतिः पुत्रगमनं कथं अनुजज्ञे निर्दयहृदयत्वेनेत्याशंक्यापरिहार्यत्वाद्ब्रह्मज्ञानित्वात्स्वात्मस्थत्वाच्च ॥ १२ ॥ तथापि तस्या इतोधिकं दुःखं नाभूदिति लक्षयति सा चापीति सा देवहूतिश्च स्वगार्हस्थ्यं तृणवद्धित्वा अक्लेशापि पुत्रविश्लेषणातुरा सती वदनं किंचिच्चकार पुत्रविरहोत्पन्नदुःखानलशुष्कं कृतवतीत्यर्थः अभिसंभावितमेतत् लोकदृष्टत्वात् किंततोन्यत्रगतेत्यतउक्तं तस्मिन्निति सरस्वत्यास्तटे आसीनत्वात्समाहिता समाधानस्य फलमाह योगादेशेनेति योगादेशेन ज्ञानलक्षणोपायोपदेशेन कारणेन यांगं भगवत्ध्यानं युंक्त इति योगयुक् ॥ १३ ॥ ॥ ॥ ॥ ॥

**मैत्रेय उवाच ॥ इति प्रदर्श्य भगवानुशतीमात्मनो गतिं ॥ स्वमात्रा ब्रह्मवादिन्या कपिलोनुमतो ययौ॥१२॥साचापि तनयोक्तेन योगादेशेन योगयुक् ॥ तस्मिन्नाश्रम आसीना सरस्वत्याः समाहिता ॥१३॥ ॥ ॥ ॥**

देवतिगळु मनुष्यरल्लि बहुकाल इरतक्कद्दु धर्मअल्लवेंदु तिळदवनाद्दरिंद कपिलनु मुंदे एनु माडिदनु ? एंदरे हेळुवरु—( मैत्रेयरुविदुरनिगे हेळुवरु- ) आ कपिलरूपियाद परमात्मनु तन्न समग्रानुग्रहके कारणवाद ज्ञानवन्नु ईप्रकार उपदेशदिंद तोरिसि, मत्तु तायिगे विश्वासगुवदक्के केलवु प्रसंगानुसारवागि अभीष्टवन्नु वृष्टिमाडनक तन्न स्वरूपस्थितियन्नादरू तोरिसि, आ ब्रह्मज्ञानसंपन्नळाद तायियिंद अप्पणेयन्नुपडेदु कपिलनु स्थळांतरक्के होदनु. तनगे ज्ञानोपदेशमाडिद्दरिंद गुरुत्ववुळ्ळ मत्तू पुत्रनाद्दरिंद अंतःकरणके पात्रनाद इंथ मगनु होग्दुहोगुवदक्के देवहूतियु ह्यागे अप्पणे कोट्टळु ? दयाइलद्दरिंद कोट्टिरबहुदु, एंदरे हागल्ल तन्न मातु अवनु केळवंते इद्दिल्लवाद्दरिंदलू ब्रह्मज्ञानसंपन्नळाद्दरिंद आ परमात्मनन्नु हृदयकमलदल्लि नोडुत्तिद्दरिंद अप्पणेकोट्टळु. ॥ १२॥ आ कपिलनु तन्नन्नु ओब्बळन्ने बिट्टु होदाग्यादरू अदरिंद आ देवहूतिगेनु विशेषदुःखवागलिल्लवेंदु तोरुवदु— आ देवहूतियादरू मगनु होरटुहोदमेले तन्न गृहस्थाश्रमद भोगद्रव्यगळन्नु तृणप्रायमाडि परित्याजिसि क्लेशरहितळादाग्यू मगनु बिट्टुहोद्दरिंद स्वल्पु आतुरचित्तळागि पुत्रविरहाग्नियिंद मुखवु किंचित् म्लानवायितु लोकदल्लि इदु इद्दद्दे सरि. ओळ्ळेदु मुंदे, देवहूतियु आ स्थळबिट्टु मत्तोंदु कडिगे होदळेनु एंदरे- अदे तन्न पतिय आश्रमवाद सरस्वतीतीरदल्लिये एकाग्रमनःसिनिंद कुळितु, तन्न पुत्रनाद कपिलनु यावप्रकारवागि योगाभ्यासक्रमवन्नु उपदेशमाडिदनो आप्रकारवागि योगानुसंधान उळ्ळवळादळु ॥ १३ ॥

तथानेनांतरशुद्धिरस्या एवं बाह्यशुद्धिरप्यस्तीति भावेनाह अभीक्ष्णेति ( अनेन नित्यस्नानेन स्त्रीणां तिथ्यादौ स्नानं व्यावर्तयति ) आत्मानं देहं कृशं बिभ्रतीत्यनेन फलमूलाद्यशनमपि नास्तीति लक्ष्यते ॥ १४ ॥ स्वगार्हस्थ्यत्यागे किंकारणं येन योगेन दुःखं स्यादिति तत्राह अनौपम्यमित्यादिना न उपमाया योग्यं यस्य तदनौपम्यं वैमानिकैर्देवैरेवंविधमाहात्म्ये निमित्तमाह प्रजापतेरिति ॥ १५ ॥ प्रार्थ्यत्वेपि निमित्तमाह पयःफेननिभा इति यत्र गार्हस्थ्ये गोक्षीरफेनमृदुशय्यादयः संतीति शेषः दांताः गजदंतनिर्मिताः रुक्मेण स्वर्णेन परिच्छदोलंकारो यासां ताः सुस्पर्शाः स्पर्शसुखकराः आस्तरणानि कटादयो येषु तानि तथा ॥ १६ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥



**अभीक्ष्णावगाहकपिशान् जटिलान्कुटिलालकान् ॥ आत्मानं चोग्रतपसा बिभ्रती चीरिणं कृशं ॥ १४ ॥ प्रजापतेः कर्दमस्य तपोयोगविजृंभितं ॥ स्वगार्हस्थ्यमनौपम्यं प्रार्थ्यं वैमानिकैरपि ॥१५॥ पयःफेननिभाः शय्या दांता रुक्मपरिच्छदाः ॥ आसनानिच हैमानि सुस्पर्शास्तरणानि च ॥१६॥ ॥ ॥ ॥ ॥ ॥**

ई देवहूतियु आ योगाभ्यासकालके केवल अंतःशुद्धियुळ्ळवळे आगिद्दळेंदल्लवु बाह्यदल्लियू शुद्धळागिद्दळेंदु हेळुवरु—आग्ग देवहूतियु आ सरस्वतीनदियल्लि त्रिकालस्नान माडुत्तिद्दरिंद शिरसिनल्लिद्द सुंदरवाद कप्पाद उंगरुगूदलुगळेल्ल जडिगट्टि केंपुवर्णवुळ्ळवादवु. मत्तु कंदमूलफलाशनसह परित्यागमाडिद्दरिंद उग्रतपःसिनिंद शरीरसह कृशवायितु ॥ १४॥ देवहूतियु तन्न गृहस्थाश्रमसंबंधवन्नु याके त्यागमाडिदळु त्यागमाडुवदरिंद दुःखवागुवदिल्लवे एंदरे हेळुवरु— तन्न पतियाद कर्दमप्रजेश्वरन तपोयोगदिंद अभिव्यक्तवाद असदृशवाद मत्तू विमानदल्लि कुळितु संचरिसतक देवतिगळिंद सहवागि प्रार्थनमाडलिके योग्यवाद तन्न गृहस्थाश्रमदसाहित्यवन्नु विरक्तियिंद परित्यजिसिदळु—॥ १५ ॥ देवतिगळिंदसह प्रार्थ्यवागवेकादरे आ देवहूतिय ऐश्वर्यवु एंथादेंदरे हेळुवरु— याव देवहूतियमनियल्लिद्द शय्यागळु आनियदंतदिंद निर्मितवाद मंचगळु अवक्के भंगारदकट्टुहाकिद्दवु अदरमेले आकळहालिन बुरुगिनष्टु शुभ्रवाद मत्तू मृदुकरवाद गादि मेल्लहासिदवु हाकल्पट्टिद्दवु. मत्तू अल्लले कुडुवदके भंगारद खुर्चिगळु मत्तु मेत्तन्न मनोहरवाद, चापिगळु हाकल्पट्टिद्दवु. ॥ १६ ॥

ललनारत्नैः संयुता रत्नदीपार्चिषः कुडयेषु न्यस्तस्त्रीरत्नहस्तन्यस्तरत्नदीपार्चिषः स्वच्छस्फटिकादिमणिमयकुडयेषु भांतीत्यर्थः ॥ १७ ॥ कुसुमितैर्बहुभिरमरद्रुमैः रम्यं गृहोद्यानं च भातीत्यर्थः ॥ १८ ॥ यत्र गृहोद्याने उत्पलगंधिन्यां वाप्यां प्रविष्टं कर्दमेनोपलालितमात्मानं विबुधानुचरा जगुरित्यन्वयः ॥१९॥ पुनरपि कीदृशं स्वगार्हस्थ्यमाखंडलयोषितामिंद्रस्त्रीणामपीप्सिततममत्यर्थं कमनीयं ॥ २० ॥ ॥ ॥ ॥ ॥

**स्वच्छस्फटिककुड्येषु महामारकतेषु च ॥ रत्नदीपार्चिषो भांति ललनारत्नसंयुताः ॥ १७॥ गृहोद्यानं कुसुमितैरम्यं बह्वमरद्रुमैः॥ कूजद्विहंगमिथुनं गायन्मत्तमधुव्रतं ॥ १८ ॥ यत्र प्रविष्टमात्मानं विबुधानुचरा जगुः ॥ वाप्यामुत्पलगंधिन्यां कर्दमेनोपलालितं ॥१९॥ हित्वा तदीप्सिततममप्याखंडलयोषितां ॥ किंचिच्चकार वदनं पुत्रविश्लेषणातुरा ॥२०॥ ॥ ॥**

मत्तू आ देवतिय मंदिरदल्लि स्वच्छवाद स्फटिकमणिगळिंदलू मरकतमणिगळिंदलू निर्मितवाद ग्वाडिगळमेले रत्नपात्रगळल्लि हच्चिद दीपगळ प्रकाशवू मत्तु रत्नसदृशराद स्त्रीयर कैय्योळगिन दीपगळ ( अथवा आभरणगळ प्रकाशवू मनोहरवागित्तु ॥१७॥ मत्तू आ मनेयसुत्तलू इद्द उद्यानवु फलपुष्पगळिंद भरितवाद देवलोकद वृक्षगळिंद बहुमनोहरवागित्तु. मत्तू स्वच्छोदकपूर्णवाद सरोवरदल्लि अरळिद कमलगळल्लि झेंकारमाडतक मदोन्मत्तवाद षट्पदगळिंदलू दंडेयमेलिद्द वृक्षगळल्लि कुळितु ध्वनिप्रतिध्वनियिंद मनोहरगायनमाडतक स्त्रीपुरुषकोकिलगळिंदलू शोभित-

वागितु ॥ १८ ॥ हिंदके कर्दमनिद्दाग्ये आ मनेयसुत्तलिद्द तोटल्दल्लिय, कमलद मकरंदवुळ्ळ सरोवरदल्लि कुलिताग्ये आ कर्दमनिंद लालितळाद तन्नन्नु (देवहूतियन्नु) देवदूतरु गायनमाडुत्तिद्दरु ॥ १९ ॥ इंथ मनोहरवागिद्दरिंद इंद्रन श्रीयरु सह अपेक्षिसतक्क आ ऐश्वर्यवन्नु अनित्यवादद्दरिंदु देवहूतियु अनादरदिंद परित्यजिसि पुत्रनु होरटु होगुवदरिंद स्वल्पु मंण मारी माडिकोंडलु ॥ २० ॥

पतिविरहादपि पुत्रविरहो दुःसह इतिभावेनोक्तमेव विवृणोति वनमिति ॥ २१ ॥ नन्वेवं तर्हि पुत्रविरहोद्भूतदुःखार्तमना भगवदुपास्तिमप्यमांक्षीत्किं तत्राह तमेवेति अनेन तस्या उपास्तिप्रकारो दर्शित इति एवकारेण सूचितां विजातीयव्यावृत्तिं स्पष्टयति निस्पृहेति ॥ २२ ॥ ननु सुतोक्तमन्यदन्यदुपास्ते पुत्रवियोगभ्रांतबुद्धित्वादित्याशंक्याह ध्यायतीति समस्तचिंता सर्वावयवचिंता व्यस्तचिंतैकैकावयवचिंता तया ॥ २३ ॥ ॥ ॥ ॥

**वनं प्रव्रजिते पत्यावपत्यविरहातुरा॥ ज्ञाततत्त्वाप्यभून्नष्टवत्सा गौरिव वत्सला ॥ २१ ॥ तमेव ध्यायती देवमपत्यं कपिलं हरिं ॥ बभूवाविरतोत्साहा निस्पृहा तादृशे गृहे॥२२॥ध्यायती भगवद्रूपं यदाह ध्यानगोचरं॥सुतं प्रसन्नवदनं समस्तव्यस्तचिंतया॥२३॥**

पतियु अगल्दिद्द दुःखक्किंतलू पुत्रनु अगलिद्द दुःखवु सहज माडलशक्यवादद्दरिंदु हिंदे हेलिद्दन्ने विशेषवागि हेळुवरु- पतियाद कर्दमनु वनवन्नु कुरितु तिरिगि तनगे दर्शनकोडदंते होगलु मोदले दुःखवागितु आदरू पुत्रदर्शनदिंद आनंदवडुत्तिद्दलु. आमेले पुत्रनूमह होरटु होगलु देवहूतियु तत्ववन्नु तिळिदवळादरू करवु मत्त होद आकळवु ह्यागे दुःखितवागुवदो अदरंतेये पुत्रविरहदिंद आतुरळादलु इदु मनुष्यशरीरद लक्षणवु सहजवे. ॥ २१ ॥ ओळ्ळेदु ई प्रकारवागि पुत्रविरहदिंद दुःखार्तमनःसुळ्ळ देवहूतियु भगवदुपासनेयन्नुसह बिट्टलो? एंदरे हेळुवरु- आमेले. देवहूतियु अदे तन्न पुत्रत्वेन अवतारमाडिद कपिलरूपियाद श्रीहरियन्ने ध्यानमाडुत्त, अंथ ऐश्वर्यभरितवाद मंदिरदल्लि निःस्पृहळागि परमानंदमग्नळादलु ॥ २२ ॥ देवहूतियु पुत्रविरहातुरळादरिंद भ्रांतळागिद्दरिंद मोदलु मगनु हेळिद्दोदु आमेले इवळु उपासनामाडुवदोदायितेनु? एंदरे हेळुवरु- तन्न पुत्रनु यावप्रकारवागि उपदेशमाडिद्दनो अदेप्रकारवे ध्यानक्के गोचरवाद तन्न स्वरूपियाद श्रीहरिय प्रसन्नमुखवुळ्ळ स्वरूपवन्नु ओंदोंदे अवयवगळन्नु बेरेबेरेयागियू पाददिंदशिरःपर्यंतरवाद विशिष्टरूपवन्नू सह ध्यानमाडलारंभिसिदलु. ॥ २३ ॥

तस्या उपास्तेः फलमाह भक्तिप्रवाहेति सा देवहूतिर्विष्णुः सर्वोत्तम इति ज्ञानसहितनिरतिशयप्रेमलक्षणभक्तिनदीप्रवाहयोगेन बलीयसा स्वर्गादेः पुरुषार्थवादिशास्त्रार्थश्रुतिमुग्धबुद्धिराहित्येन बलिष्ठेन वैराग्येण युक्तं यदनुष्ठानमखंडध्यानं तस्माज्जातेन ब्रह्महेतुना परब्रह्मप्रसादजननकारणेन ब्रह्महेतिनेति पाठे ब्रह्मवशीकरणायुधेनेत्यर्थः ॥ २४ ॥ अतएव विशुद्धेनैकत्वसंशयलक्षणदोषरहितेनाविर्भूतेन ज्ञानेनात्मना स्वस्वरूपमनसात्मानं स्वबिंबभूतं विश्वतोमुखं सर्वज्ञं च स्वतएव स्वानुभूत्या तिरोभूतं दूरतो निरस्तं मायागुणैः सत्वादिभिः देहबंधलक्षणं यस्य स तथा तं हरिं ददर्शेति शेषः ॥ २५ ॥ साऽपरोक्षज्ञानोदयानंतरमीदृशीमवस्थां प्रापेत्याह ब्रह्मणीति सा यदा परमात्मानमद्राक्षीत्तदात्मानं स्वशरीरं न सस्मारेत्यन्वयः कीदृशी आत्मसंश्रये स्वाधारे भगवति षड्गुणपूर्णे ब्रह्मणि कालतो देशतो गुणतो व्याप्ते हराववस्थितमतिरेकाग्रमना निवृत्तजीवभावत्वान्मुक्तलिंगशरीराभिमानत्वाद्वीतक्लेशा निरस्तदुःखा प्राप्तनिर्वृतिराप्तपरमानंदा ॥ २६ ॥ ॥ ॥ ॥



**भक्तिप्रवाहयोगेन वैराग्येण बलीयसा ॥ युक्तानुष्ठानजातेन ज्ञानेन ब्रह्महेतुना ॥२४॥ विशुद्धेन तदात्मानमात्मना विश्वतोमुखं॥ स्वानुभूत्या तिरोभूतमायागुणविशेषणं॥२५॥ब्रह्मण्यवस्थितमतिर्भगवत्यात्मसंश्रये ॥ निवृत्तजीवभावत्वात्क्षीणक्लेशात्मनिर्वृतिः॥२६॥**

आ देवहूतियु उपासनामाडिद्द फलवन्नु हेळुवरु- आ देवहूतियु श्रीविष्णुवु सर्वोत्तमनेंब ज्ञानमिद्दवाद निरतिशयप्रेमलक्षणवाद भक्तियंबनदीय बलिष्ठवाद प्रवाहयोगदिंद (संततभक्तियिंद) स्वर्गादिगळे पुरुषार्थवेंदु हेळतक्क शास्त्रार्थद कोलिकेयिंद मुग्धबुद्धियिल्लदे (स्वर्गादिसुखभोगितवेकेंब आशेयन्नु माडदे) बलिष्ठ वैराग्य युक्तवाद याव अखंडध्यानदिंद उत्पन्नवाद परब्रह्मप्रसाद उंटागुवदक्के कारणवाद ॥ २४ ॥ जीवब्रह्मरल्लि ऐक्य उंटो एनो एंब संशयइल्लदे प्रकटवाद स्वरूपभूतवाद मनमिनिंद; सर्वत्रदल्लि सर्वावयवगळुळ्ळ सर्वज्ञनाद तन्न बिंबमूर्तियन्नु तन्निच्छेयिंदले अदृश्यरेगे तोरदे इद्दु सत्वादिगुणसंबंधवाद देहबंधनविल्लद श्रीहरियन्नु (देवहूतियु तन्न देहदल्लि, कंडलु. ॥ २५ ॥ आ देवहूतियु अपरोक्षज्ञानवाद नंतर ई मुंदे हेळतक्क अवस्थेयन्नु होंदिदलु. एंदु हेळुवरु- आ देवहूतियु यावाग्ये हृदयकमलदल्लि श्रीहरियन्नु कंडळो आगिनिंद तन्न शरीरद परिवेयन्नु बिट्टलु. ह्यागिगिद्दळेंदरे तनगे सकल प्रकारदिंदलू आधारनाद देशदिंदलू कालदिंदलू व्याप्तनाद षड्गुणपूर्णनाद श्रीहरियल्लिये एकाग्रमनःसुळ्ळवळागि लिंगशरीरद अभिमानवन्नु सह परित्यागमाडि दुःखरहितळागि परमानंदवन्नु होंदिदवळागि ॥ २६ ॥

नित्यारूढसमाधित्वान्नित्यं हरावेव सन्निविष्टमनस्कत्वात्परावृत्तगुणभ्रमा परावृत्तः पराभूतः गुणेषु शब्दादिविषयेषु दुःखसाधनेषु सुखसाधनत्वबुद्धिभ्रमो यस्याः सा कथमिव स्वप्नदृष्टमिवोत्थितः स्वप्नादुत्थितः स्वप्ने दृष्टं यथा न स्मरति तथेति नन्विदं निदर्शनं निवृत्तजीवभावत्वे कथमुपपद्यते स्वप्नदृशो जीवत्वानिवृत्तेरितीयमाशंका जीवोपाधिप्रभृतय आमुक्तेः सर्वदेहिनां । नियमात्संत्यभावस्तु निष्फलत्वादुदीर्यत इत्यनेन परिहरणीया एतत्स्मृत्यर्थद्योतनाय स्वप्नोत्थितनिदर्शनमिति तात्पर्यार्थो ज्ञातव्यः ॥ २७ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

**नित्यारूढसमाधित्वात्परावृत्तगुणभ्रमा ॥ न सस्मार तदात्मानं स्वप्नदृष्टमिवोत्थितः ॥ २७ ॥**

आ देवहूतियु नित्यदल्लियू श्रीहरियल्लिये मनःसिट्टवळादरिंद 'परावृत्तगुणभ्रमा' शब्दस्पर्श मोदलाद विषयगळु दुःखक्के साधकवागिद्दवुगळल्लु सुखसाधनवेंदु तिळियतक्क भ्रांतबुद्धिइल्लदवळादरिंद स्वप्नदल्लि कंड वस्तुगळन्नु स्वप्नदिंद एच्चत्तमेले अवु अनित्य असारवेंदु ह्यागे तुच्छमाडुवनो (मनुष्यनु) अदरंतेये ई ब्रह्मापरोक्ष आदमेले तन्न हिंदिन संसारस्थितियन्नु देहद वासनावन्नू मरेतु बिट्टलु ओळ्ळेदु ई दृष्टांतवु जीवभाववन्नु परित्यागमाडिदमेले ह्यागे संभविसुवदु ? जीवभाववन्नु बिडदिद्दवरिगे अभिमानवुळ्ळवरिगे ) स्वप्नवु बीळुत्तिरुववु तुरियावस्थावुळ्ळवरिगे केळगिन अवस्थात्रयगळु इरवदिल्लवादरिंद इदु ह्यागे एंदु शंकावंदरे- 'तुरियावस्थेयुळ्ळवरिगादरू लिंगभंगरूपवाद मुक्तियागुववरेगू अवस्थात्रयगळु इद्दे इरुववु इरवदिल्लवेंब केळवुवचनगळ अर्थवनंदे अवु इद्दाग्यू अवुगळ फल (केलस) वागुवदिल्लवु आदरिंद हागे हेळल्पट्टदे' ई प्रमाणदिंद मलिन मंशयवु परिहार माडल्पट्टितु ई प्रकारवागि स्मृत्यर्थवन्नु तिळिसुवदक्कागिये 'स्वप्नोत्थितः' एंब दृष्टांतवु हेळल्पट्टितेंदु तिळियतक्कद्दु. ॥ २७ ॥

इदमपरोक्षज्ञानोदयानंतरं लक्षणमित्याह तद्देह इति यस्यपोषोपगतः स तस्याः देहो बभावित्यन्वयः आध्यसंभवाच्छरीरकार्श्यहेतुमनोदुःखाभावादकृशत्वं अकृत इति पाठे विहितस्नानादिशून्य इत्यर्थः युगेऽक्षपाते पर्याप्ते कृतं क्लीबे हितेऽर्थवदिति यादवः यद्वा अपर्याप्तो समाप्तप्रारब्धकर्मा ॥ २८ ॥ शरीराभिमानाभावादाध्यसंभवोनुमीयत इति भावेनाह स्वांगमिति गोप्त्रभावात्कथं तद्देहावस्थानमत्राह दैवेति दैवेन हरिणा गुप्तं रक्षितं रक्षणे निमित्तमाह वासुदेवेति ॥ २९ ॥ श्रवणसुखस्याप्यस्य प्रसंगस्य कदानु समाप्तिरिति मंदां शंकां परिहरंस्तद्देहस्य प्रारब्धकर्मनिर्वाणेन तस्याः श्रीनारायणप्राप्तिं वक्ति एवं सेति अविरहं सर्वगतं निर्वाणं प्रकृतिप्राकृतशरीररहितं निर्वृतंवा इत्यनेनेतिहाससमाप्तिं सूचयति ॥ ३० ॥ ॥ ॥ ॥ ॥

**तद्देहोपगतः पोषोप्यकृशश्चाध्यसंभवात् ॥ बभौ मलैरवच्छन्नः सधूम इव पावकः ॥२८॥ स्वांगं तपोयोगमयं मुक्तकेशं गतांबरं ॥ दैवगुप्तं न बुबुधे वासुदेवप्रविष्टधीः ॥२९॥ एवं सा कपिलोक्तेन मार्गेणाविरहं परं ॥ आत्मानं ब्रह्मनिर्वाणं भगवंतमवापह ॥३०॥**

अपरोक्षज्ञानवादनंतरदल्लि ई मुंदे हेळतक्क लक्षणवे इरुवदु एंदु आ लक्षणवन्नु हेळुवरु— आ देवहूतिय देहवादरू पोषणविल्लदाग्यू मनोदुःखविल्लद्दरिंद स्वल्पादरू सोरगदे पुष्टवागि मेले होलसु तुंबिदाग्यू होगेगोळगिद्द अग्नियंते प्रकाशमंतवायितु. 'अकृश' इदर बदलु 'अकृत' एंब पाठविद्दल्लि तैलाभ्यंगनमोदलादद्दु इल्लद्दु एंदर्थवु. अथवा आ देहद प्रारब्धकर्मवु समाप्तवागिल्लु एंदर्थवु. ॥ २८ ॥ आ देवहूतिगे देहाभिमानविल्लद्दरिंद मनोदुःखविल्लवेंदु ऊहमाडल्पडुवदु एंदु अभिप्रायदिंद हेळुवरु— आ देवहूतियु वस्त्राभिमानवन्नु सह परित्यागमाडि कूदलुगळन्नु हरिविकोंडु तपःसुयोगगळिंद तुंबिद तन्न देहवन्नु सर्वदा वासुदेवनल्लिये बुद्धिप्रवेशवुळ्ळवळाद्दरिंद श्रीहरिये संरक्षणे माडुत्तिद्दनु होरतु अवळेनु विचारमाडुत्तिद्दिल्लवु. ॥ २९ ॥ ई देवहूतिय कथेयु किविगे केळुवदक्के इंपागिद्दरू बहळाद्दरिंद यावाग्ये मुगियुवदो एंब मंदजनर संदेहवन्नु परिहरिसुत्त आ देवहूतिय देहदप्रारब्धकर्मवु मुगिदद्दरिंद अवळिगे श्रीनारायणप्राप्तियाद संगतियन्नु हेळुवरु—ई हिंदे हेळिदंते आ देवहूतियु कपिलरूपियाद परमात्मनु हेळिद मार्गदिंद उपासनामाडि सर्वत्र व्याप्तनाद प्रकृति मत्तू प्राकृतशरीरसंबंधरहितनाद सर्वोत्तमनाद श्रीहरियन्नु होंदिदळु. 'ह' एंबदरिंद ई इतिहासवु मुगिदितेंदु सूचितवायितु. ॥ ३० ॥

पूर्वं शुक्लस्य हरेरश्रुबिंदुनिपाताद्बिंदुसरोनामाभूत् इदानीमस्याः देवहूत्याः सिद्धपदहेतुत्वात्सिद्धपदमिति नामांतरं वक्ति तद्वीरेति वीर विदुर ॥ ३१ ॥ तत्र तद्देहो दाहकाभावाच्छ्वसृगालगोचरश्चेल्लोकहितैषणक्षेत्रस्तुतिर्व्यर्था स्यादिति तत्राह तस्या इति तन्मर्त्यं शरीरं स्रोतसां नदीनां प्रवरा सरित् ॥ ३२ ॥ ॥

**तद्वीरासीत्पुण्यतमं क्षेत्रं त्रैलोक्यविश्रुतं ॥ नाम्ना सिद्धपदं यत्र सा संसिद्धिमुपेयुषी ॥ ३१ ॥ तस्यास्तद्योगविधुतमार्त्यं मर्त्यमभूत्सरित् ॥ स्रोतसां प्रवरा सौम्य सिद्धिदा सिद्धसेविता ॥ ३२ ॥ ॥ ॥ ॥ ॥**

पूर्वदल्लि कपिलावतारागद मोदलु कर्दमनु तपस्सुमाडि श्रीहरियन्नु प्रत्यक्ष कंडाग्ये आ श्रीहरियु निन्नल्लि ( कर्दमनल्लि ) अवतारमाडुवेनेंदु आनंददिंद तन्न अश्रुबिंदुवन्नु कंणोळगिन आनंदोदकवन्नु ) सरस्वतीतीरदल्लिद्द सरोवरदल्लि केडिविद्दरिंद आ सरोवरक्के 'बिंदुसरोवर' एंदु हेसरु बंदितु. अदे बिंदुसरोवरवे ई देवहूतिय मोक्षसिद्धिगे कारणवाद्दरिंद सिद्धपदवेंब नामांतरवुळ्ळदायितेंदु हेळुवरु- मैत्रेयरु विदुरनिगे हेळुवरु-हे वीरनाद विदुरने-आ देवहूतियु याव बिंदुसरोवरदमेले तपःसुमाडि सिद्धियन्नु पडेदळो आ स्थानवु मूरु लोकदल्लि प्रख्यातवाद अत्यंतपुण्यकरवाद सिद्धपदवेंब हेसरिन क्षेत्रवायितु ॥ ३१ ॥ आदरे आ क्षेत्रदल्लि बिडल्पट्ट आ देवहूतिय देहवु दहनमाडतक्कवरु दिक्किल्लद्दरिंद नायिनरिगळ पालादरे— लोकहितकरवाद आ क्षेत्रद स्तुतिमाडिद्दु व्यर्थवागबेकादीतु एंदरे हेळुवरु योगाभ्यासदिंद बिडल्पट्ट आ देवहूतिय मनुष्यशरीरवु आकूडले हे सौम्यनाद विदुरने सिद्धजनरिंद सेवितवाद 'सिद्धिदा' एंब हेसरुळ्ळ श्रेष्ठवाद नदियागि हरियितु ॥ ३२ ॥

पूर्वं कपिलगमनस्य कर्म नोक्तमधुना तत्पूर्वं तद्गमनं वक्ति कपिलोपीति महायोगी पूर्णज्ञानी प्रागुदीचीं दिशं शंकररक्षितां ॥ ३३ ॥ दत्ते अर्हणनिकेतने पूजानिवासस्थाने यस्मै स तथा ॥ ३४ ॥ योगं ध्यानलक्षणं प्राणायामलक्षणंवा सांख्याचार्यैः यथार्थज्ञानोपदेष्टृभिः सनकादिभिः नायं योगः स्वप्रयोजनोपदेशार्थः किंतु लोकसुखार्थं इत्याह त्रयाणामिति उपशांत्यै मंगलाय ॥ ३५ ॥ ॥ ॥ ॥ ॥ ॥

**कपिलोपि महायोगी भगवान् पितुराश्रमात् ॥ मातरं समनुज्ञाप्य प्रागुदीचीं दिशं ययौ ॥ ३३ ॥ सिद्धचारणगंधर्वैर्मुनिभिश्चाप्सरोगणैः ॥ स्तूयमानः समुद्रेण दत्तार्हणनिकेतनः ॥३४॥ आस्ते योगं समास्थाय सांख्याचार्यैरभिष्टुतः॥ त्रयाणामपि लोकानामुपशांत्यै समाहितः ॥ ३५ ॥ ॥ ॥ ॥ ॥ ॥ ॥**

हिंदके ( तायिगे उपदेशमाडिदमेले ) कपिलनु एत्त होदनेंबदन्नु हेळिदिल्लवाद्दरिंद ईग्ये आ संगतियन्नु सह हेळुवरु— आमेले आ कपिलरूपियाद पूर्णज्ञानियाद परमात्मनादरू तायिगे अप्पणे कोट्टु तानादरू तायिय अप्पणे पडिदु, आ तंदिय बिंदुसरोवरवेंब आश्रमदिंद होरटु ईशान्यदिक्किगे एदुरागि होदनु. ॥३३॥ आमेले मार्गदल्लि सिद्धरू चारणरू गंधर्वरू मुनिगळू अप्सरास्त्रीयर समूहवू ई एल्लरिंद स्तोत्रमाडिसिगोळ्ळुत्त, समुद्रतीरक्के होगि आ समुद्रनाथनिंद अर्घ्यपाद्यादिगळिंद पूजितनागि निवासक्के स्थानवन्नु पडेदनु. ॥ ३४ ॥ आ समुद्रतीरदल्लि अद्यापि प्राणायाम ध्यानमोदलाद लक्षणवुळ्ळ योगाभ्यासवन्नु यथार्थज्ञानवन्नु उपदेशमाडतक्क सनकादिगळिगे उपदेशमाडुत्त अवरिंद स्तोत्रमाडिसिगोळ्ळुत्त मूरू लोकक्कू कल्याणवागुवदक्के वासमाडिरुवनु. आदरे ई तपःसु तननेगू कारणविल्लवु. ॥ ३५ ॥

मैत्रेयो विदुरं संबोधयंस्तत्प्रश्नपरिहारकथनमुपसंहरति एतन्निगदितमिति न केवलं देवहूत्या एव सिद्धिहेतुः किंतु लोकस्यचेति चार्थः ॥ ३६ ॥ श्रोत्रादीनां

